श्री खरतरगच्छीय ज्ञान मन्दिर, जयपुर

इति श्रीपाठकप्रवरश्रीमत्साधुरङ्गगणिवरविहितया दीपिकया समलंकृतः

# श्रीसूयगडांगसूत्र-प्रथमश्रुतस्कन्धः ।

# परिशिष्ट नं. २

## दीपिकागत सुभाषित गद्य–पद्यसंग्रहः ।

| | पत्रांक |
|---|---|
| " जीवो छक्कायपरू–वणा य तेसिं वहेण बंधोत्ति । " | १ |
| " एस खलु गंथे, एस खलु मोहे, एस खलु मारे, एस खलु निरए, इत्थं गढिए लोए । " | १ |
| " इयं नाणं कियाहीणं, हया अन्नाणिणो किया । पासतो पंगुलो दड्ढो, धावमाणो य अंधओ ॥ १ ॥ " | १ |
| " सजोगसिद्धीइ फलं वयंति " | १ |
| " बंधस्स मिच्छअविरइ–कसायजोगत्ति हेयवो चउरो । " | २ |
| " अह तेसिं विणासे उ, विणासो होइ देहिणं । " | ४ |
| " एक एव हि भूतात्मा, देहे देहे व्यवस्थितः । एकधा बहुधा चैव, दृश्यते जल चन्द्रवत् ॥ १ ॥ " | ४–५ |
| " अच्छिनीमीलणमित्तं, नत्थि सुहं दुक्खमेव अणुबद्धं । नरए नेरइयाणं, अहोनिसिं पच्चमाणाणं ॥ १ ॥ " | ४ |
| " तहिं देवा वंतरिया, वरतरुणीगीयवाइयरवेणं । | |

व्यतिरिक्तः कश्चिदात्माख्यः पदार्थोऽध्यक्षेणाध्यवसीयते, तदव्यभिचारिलिङ्गग्रहणाभावान्नाप्यनुमानेन, न च प्रत्यक्षानुमानव्यतिरिक्तमर्थाविसंवादि प्रमाणान्तरमस्तीत्येवं बाला इव बालाः–यथावस्थितार्थापरिज्ञानात्, इत्येवं बौद्धाः प्रतिपादयन्ति, तथा च स्कन्धाः क्षणयोगिनः–क्षणमात्रावस्थायिन इत्यर्थः। पूर्ववादिभ्योऽसावन्यथा प्ररूपयति, तमेव श्लोकपश्चार्द्धेन दर्शयति–'अन्नो अणन्नो' इत्यादि, ते हि बौद्धा यथाऽऽत्मषष्ठवादिनः साङ्ख्यादयो भूतव्यतिरिक्तमात्मानमभ्युपगतवन्तः, यथा च चार्वाकाः भूताव्यतिरिक्तं चैतन्याख्यमात्मानमिष्टवन्तः, तथा बौद्धा नैवाहु–न चोक्तवन्तः। तथा 'हेउयं च अहेउयं' तथा हेतुभ्यो जातो हेतुकः–कायाकारपरिणतभूतनिष्पादित इति, तथा अहेतुकोऽनाद्यपर्यवसितत्वाश्रित्य

यदुक्त–'यत्सत्तत्क्षणिकं यथा जलधरः सन्तश्च भावा इमे, सत्ताशक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा च सा। नाप्येकैवविधाऽन्यदाऽपि परकृन्नैव क्रिया वा भवेद्, द्वेधाऽपि क्षणभङ्गसङ्गतिरतः साध्ये च विश्राम्यति॥ १॥' इति विज्ञानम्"। (षड्द०)

४–"सञ्ज्ञास्कन्धः–सञ्ज्ञानिमित्तोद्ग्रहणात्मकः प्रत्ययः।" (बृहद्वृत्तिः), "संज्ञेति संज्ञा–नाम, कोऽर्थः? सर्वमिदं सांसारिकं सचेतनाचेतनस्वरूपव्यवहरणं संज्ञामात्र–नाममात्रं, नात्र कलत्रपुत्रमित्रभ्रात्रादिसम्बन्धो घटपटादिपदार्थसार्थो वा पारमार्थिकः। तथा च तत्सूत्र–'तानीमानि भिक्षवः! संज्ञामात्रं–व्यवहारमात्रं कल्पनामात्रं संवृतिमात्रमतीतोऽध्वाऽनागतोऽध्वा सहेतुको विनाशः आकाशं पुद्गला' इति।" (षड्दर्शन०)।

५–"संस्कारस्कन्धः पुण्यापुण्यधर्मसमुदाय इति।" (बृहद्वृत्तिः)। "संस्कार इति, इहपरभवविषयसन्तानपदार्थनिरीक्षणप्रबुद्धपूर्वभावानुरूपसंस्कारस्य प्रमातुः स एवायं देवदत्तः सैवेयं दीपकलिकेत्याद्याकारेण ज्ञानोत्पत्तिः संस्कारः।" (षड्दर्शन०)।

तेणावि संधिं णच्चाणं[1], ण ते धम्मविऊ[2] जणा । जे ते उ[3] वाइणो एवं, न ते संसारपारगा ॥२१॥
तेणावि संधिं णच्चाणं, ण ते धम्मविऊ जणा । जे ते उ वाइणो एवं, न ते गब्भस्स पारगा ॥२२॥
तेणावि संधिं णच्चाणं, ण ते धम्मविऊ जणा । जे ते उ वाइणो एवं, न ते जम्मस्स पारगा ॥२३॥
तेणावि संधिं णच्चाणं, ण ते धम्मविऊ जणा । जे ते उ वाइणो एवं, न ते दुक्खस्स पारगा ॥२४॥
तेणावि संधिं णच्चाणं, ण ते धम्मविऊ जणा । जे ते उ वाइणो एवं, न ते मारस्स[4] पारगा ॥२५॥

एतासां व्याख्या सुगमैव, एते सर्वेऽपि वादिनो मिथ्याप्ररूपणया संसार–गर्भ–जन्म–दुःख–मारादिपारगा न भवन्तीति, अनन्तशो दुःखपरम्परामनुभविष्यन्ति, अनन्तशो गर्भप्रपञ्चकलङ्कलिभागिनो भविष्यन्ति, न हि संसारसमुद्रादुत्तीर्य पारगामिनो भविष्यन्ति ॥ २१–२५ ॥ यत्पुनस्ते प्राप्नुवन्ति तद्दर्शयितुमाह—

नाणाविहाइं दुक्खाइँ, अणुहोंति पुणो पुणो । संसारचक्कवालम्मि, वाहिमच्चुजराकुले ॥ २६ ॥

व्याख्या–×'नानाविधानि' बहुप्रकाराणि दुःखान्यसातोदयलक्षणान्यनुभवन्ति पुनः पुनस्तथाहि–नरकेषु करपत्रदारण–कुम्भीपाकतप्तायःशाल्मलीसमालिङ्गनादीनि, तिर्यक्षु च शीतोष्ण–दहन–दमनाङ्कन–ताडना–तिमारारोपण–क्षुत्तृडादीनि,

१ अज्ञात्वा । २ धर्मविदो जनाः । ३ ते तु वादिनः । ४ कामः ॥ × व्याधिमृत्युजराभिराकुले–व्याप्ते संसारचक्रवाले ।

मनुष्येष्विष्टवियोगानिष्टसंप्रयोग–शोकाक्रन्दनादीनि, देवेषु चाभियोग्येर्ष्याकिल्विषिकत्व–च्यवनादीन्यनेकप्रकाराणि दुःखानि, एवम्भूता वादिनः पौनःपुन्येन समनुभवन्तीति गाथार्थः ॥ २६ ॥

**उच्चावयाणि गच्छंता, गब्भमेसंतिऽणंतसो । नायपुत्ते महावीरे, एवमाहु जिणोत्तमे त्तिबेमि ॥२७॥**

व्याख्या–उच्चावचानीति अधमोत्तमानि नानाप्रकाराणि वा [सं]स्थानानि 'गच्छंता' इति 'गच्छन्तो' भ्रमन्तो गर्भाद्गर्भमेष्यन्ति–यास्यन्त्यनन्तशो–निर्विच्छेदमिति, ब्रवीमीति सुधर्मस्वामी जम्बूस्वामिनं प्रत्याह–'ज्ञातपुत्रो' भगवान् श्रीमहावीर एवमुक्तवान्, तत्सकाशे मयाऽपि श्रुतं तथाऽहमपि ब्रवीमि, न स्वमनीषिकयेति गाथार्थः ॥ २७ ॥

इति समयाख्ये प्रथमाध्ययने प्रथमोद्देशकः समाप्तः ।

उक्तः प्रथमोद्देशकः साम्प्रतं द्वितीयोऽभिधीयते, तस्य चायमभिसम्बन्धः–इह प्रथमोद्देशके स्वसमय–परसमयप्ररूपणा कृता, द्वितीयोद्देशकेऽपि सैवाभिधीयते, यदि वाऽनन्तरोद्देशके भूतवाद्यादिमतप्रदर्शनेन तन्निराकरणं कृतं, इह तु नियतिवाद्यादिमिथ्यादृष्टिमतान्युपदर्श्य निराक्रियन्ते । अथ द्वितीयोद्देशकस्यादिसूत्रं—

**आघायं पुण एगेसिं, उववन्ना पुढो जिया । वेदयंति सुहं दुक्खं, अदुवा लुप्पंति ठाणओ ॥ १ ॥**

व्याख्या–तैर्नियतिवादिभिः पुनरिदमाख्यातं–एतत्प्ररूपितं–उपपन्नाः 'पृथक्' पृथग् नारकादिभवेषु शरीरेषु चेत्यनेनात्माऽऽद्वैतवादनिरासोऽवसेयः । उपपन्नाः के ? 'जीवाः' प्राणिनः सुखदुःखभोगिनः, तथा ते जीवाः पृथक् पृथक् प्रत्येकदेह-

पण्डितम्मन्याः बाला उच्यन्ते । किमिति बालाः ? यतस्ते किञ्चित्सुखदुःखादि जन्तूनां नियतिकृतं किञ्चिदनियतिकृतं न मन्यन्ते, केवलं भवितव्यतावशान्नियतिकृतमेव मन्यन्ते, अत एव 'अजाणगा' अज्ञानिनो बुद्धिरहिताः, जैनास्तु किञ्चिन्नियतिकृतं मन्यन्ते तथा किञ्चिदनियतिकृतमपि पुरुषाकारकालेश्वरस्वभावकर्मादिकृतं मन्यन्ते, तत्र कथञ्चित्सुखदुःखादि पुरुषाकारसाध्यमप्याश्रीयते, यतः फलं क्रियातः सम्भवति, क्रिया च पुरुषाकारायत्ता वर्त्तते, तथा चोक्तं—" न दैवमिति सञ्चिन्त्य, त्यजेदुद्यममात्मनः । अनुद्यमेन कस्तैलं, तिलेभ्यः प्राप्तुमर्हति ॥ १ ॥ " किञ्च—" उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी "रिति वचनात्पुरुषकारकृतं मन्यन्ते । आर्हतास्तु स्याद्वादप्ररूपिणः, न नियतिवादिवदेकान्तप्ररूपिणः " कालो सहावनियई, पुव्वकयं पुरिसकारणे पंच । समवाये सम्मत्तं, एगंते होइ मिच्छत्तं ॥ १ ॥ " इति वचनात् । ते तु नियतिवादिन एकान्तपक्षाश्रयणान्मिथ्यादृश एवेति गाथार्थः ॥ ४ ॥ अथैषामपायदर्शनायाह—

**एवमेगे उ पासत्था, ते भुज्जो विप्पगब्भिया । एवं उवट्ठिया संता, ण ते दुःखविमोक्खया ॥ ५ ॥**

व्याख्या—एवमेके नियतिवादमाश्रिताः सर्वस्मिन्नपि वस्तुनि नियतानियते सति एके नियतमेवावश्यं भाव्येन, कालेश्वरादिनिराकरणेन निर्हेतुकतया नियतिवादमाश्रितास्ते पार्श्वस्थाः, युक्तिकदम्बकाद्बहिस्तिष्ठन्तीति पार्श्वस्थाः, परलोकक्रियातो वा पार्श्वस्थाः, ते हि परलोकसाधिकां क्रियां न मन्यन्ते, नियतपक्षाश्रयणाद्यद्भाव्यं तद्भविष्यतीति वचनात्तपश्चरणादिक्रियासु पराङ्मुखाः, यदि वा पाश इव पाशः—कर्मबन्धनं, तच्च युक्तिविकलनियतवादप्ररूपणं, तत्र स्थिताः

१ कालः स्वभावो नियतिः, पूर्वकृतं पुरुषाकारः कारणानि पञ्च । समवाये सम्यक्त्वमेकान्ते भवति मिथ्यात्वम् ॥ १ ॥

१ समयाध्ययने द्वितीयोद्देशके नियतिवाद निराकरणम् ।

पाशस्थाः, अन्येऽपि ये कालेश्वरादिकारणिका एकान्तवादिनस्तेऽपि पार्श्वस्थाः पाशस्था वा द्रष्टव्या इति । ते कथम्भूताः ? ' प्रिगल्भिताः ' धार्ष्ट्योपेताः परलोकसाधिकासु क्रियासु प्रवर्त्तमाना अपि सन्तो नात्मदुःखविमोक्षकाः, असम्यक्प्रवृत्तत्वान्नात्मानं दुःखात्संसाररूपाद्विमोचयन्तीति गाथार्थः ॥ ५ ॥ उक्ता नियतवादिनः, साम्प्रतमज्ञानिमतं दूषयितुं दृष्टान्तमाह—

**जविणो मिगा जहा संता, परित्ताणेण वज्जिया । असंकियाइं संकंती, संकियाइं असंकिणो ॥ ६ ॥**

व्याख्या—यथा ' जविनो ' वेगवन्तः सन्तो मृगाः परित्राणेन वर्जिताः–सम्यग्विवेकविकला अशङ्कनीयानि कूटपाशादिरहितानि स्थानानि शङ्कन्ते–निर्भयेषु स्थानेषु भयं कुर्वन्ति । यानि पुनः ' शङ्काऽर्हाणि ' शङ्कायोग्यानि वागुरादीनि, तत्र शङ्कामकुर्वाणास्तत्र तत्र निर्भयतया पर्यटन्ति, विवेकविकलत्वात् । अशङ्कनीयेषु शङ्कां कुर्वन्ति, शङ्कनीयेषु निर्भयाः पर्यटन्तीति गाथार्थः ॥ ६ ॥ पुनरपि तमेवार्थमाविष्करोति—

**परियाणियाणि संकंता, पासियाणि असंकिणो । अन्नाणभयसंविग्गा, संपलिंति तहिं तहिं ॥ ७ ॥**

व्याख्या—परित्राणयुक्तानि निर्भयानि स्थानानि, तेषु शङ्कमाना–मूढत्वाद्विपर्यस्तमतयस्तात्वर्यपि भयमुत्प्रेक्षमाणाः ' पाशितानि ' अनर्थोत्पादकानि, तेषु अशङ्किनः, कोऽर्थः ? यानि निर्भयानि स्थानानि तेभ्यो बिभ्यन्ति, यानि सभयानि स्थानानि तेभ्यो न शङ्कन्त इत्यर्थः । ततश्च अज्ञानेन भयेन च 'संविग्ग'त्ति सम्यग्व्याप्ता–वशीकृताः सम्यग्विवेकविकलाः पाशवागुरादिके बन्धने सम्पर्यटन्ते, तथैतेऽपि नियतवादिनः परित्राणार्हेऽप्यनेकान्तवादे शङ्कां कुर्वाणाः युक्त्या अघटमानकं

अनर्थबहुलमेकान्तवादमशङ्कनीयत्वेन गृह्णन्ति अज्ञानावृताः, ततस्तेषु कर्मबन्धस्थानेषु सम्पर्यटन्त इति गाथार्थः ॥ ७ ॥

अथ पुनरपि प्राक्तनदृष्टान्तमधिकृत्याह—

**अह तं पवेज्ज वज्झं, अहे वज्झस्स वा वए । मुच्चेज्ज पयपासाओ, तं तु मंदे ण देहए ॥ ८ ॥**

व्याख्या—अथासौ मृगस्तत् 'वज्झं' ति ब[ध्यं]द्ध-बन्धनाकारेण व्यवस्थितं वागुरादि वज्झमित्युच्यते, तदेवम्भूतं कूटपाशादिकं बन्धनं यद्यसौ मृग उपरि प्लवेत्-तद्बन्धनस्थानमधो विमुच्य उपरि गच्छेत् तस्य वा वध्यस्याधो गच्छेत्, तत एवं क्रियमाणेऽसौ मृगः पदे पाशः पदपाशो-वागुरादिबन्धनं, तस्मान्मुच्येत, आदिग्रहणाद्बधताडनमारणादिकाः क्रिया गृह्यन्ते, एवं सन्तं अनर्थपरिहरणोपायं 'मन्दो' जडोऽज्ञानावृतो 'न देहयेत्' न पश्यतीति गाथार्थः ॥ ८ ॥

कूटपाशादिकं चापश्यन् यामवस्थामवाप्नोति तां दर्शयितुमाह—

**अहियप्पा अहिअप्पन्नाणे, विसमं तेणुवागए । स बद्धे पयपासेणं, तत्थ घातं नियच्छई ॥ ९ ॥**

व्याख्या—स मृगो अहितात्मा अहितप्रज्ञानः सन् 'विषमान्तेन' कूटपाशादियुक्तेन प्रदेशेन उपागत आत्मानं अनुतापयेत्, तत्र चासौ पतितो बद्धश्च तेन कूटादिना पदपाशादीननर्थबहुलानवस्थानविशेषान् प्राप्तस्तत्र च बन्धने 'घातं' विनाशं 'नियच्छति' प्राप्नोति ॥ ९ ॥ एवं दृष्टान्तं प्रदर्श्य दार्ष्टान्तिकमज्ञानविपाकं दर्शयितुमाह—

**एवं तु समणा एगे मिच्छद्दिट्ठी अणारिया । असंकियाइं संकंति, संकियाइं असंकिणो ॥ १० ॥**

व्याख्या—एवं ते मृगा अज्ञानावृता अनर्थमनेकशः प्राप्नुवन्ति, एवमेव 'श्रमणाः' केचन पाषण्डविशेषाश्रिताः, एके, न सर्वे। किम्भूतास्ते? मिथ्यादृष्टयोऽनार्याः; अज्ञानावृतत्वादसदनुष्ठायिन इति। अज्ञानित्वं च तेषां दर्शयति—'अशङ्कितानि' अशङ्कनीयानि सुधर्मानुष्ठानादीनि शङ्कन्ते, कोऽर्थः? सुधर्मानुष्ठाने अधर्मशङ्कामानयन्ति अधर्मे च धर्मबुद्धिं कुर्वन्तीति गाथार्थः ॥ १० ॥

पुनस्तेषां दर्शनिनां विपरीतमतित्वं दर्शयति—

**धम्मपन्नवणा जा सा, तं तु संकंति मूढगा। आरंभाई ण संकंति, अवियत्ता अकोविया ॥ ११ ॥**

व्याख्या—धर्मस्य क्षान्त्यादिदशविधस्य या प्ररूपणा, तत्र शङ्कन्ते—असद्धर्मप्ररूपणेयमित्येवमध्यवसन्ति, ये पुनः पापोपादानभूताः समारम्भास्तान्न शङ्कन्ते, यतस्ते 'अव्यक्ताः' मुग्धाः—विवेकविकलाः 'अकोविदाः' अपण्डिताः—अगीतार्था इति गाथार्थः ॥ ११ ॥ तथाऽज्ञानावृता यन्नाप्नुवन्ति तद्दर्शनायाह—

**सव्वप्पगं विउक्कस्स, सव्वं णूमं विहूणिया। अप्पत्तियं अकम्मंसे, एयमट्ठं मिगे चुए ॥ १२ ॥**

व्याख्या—'सर्वात्मको' लोभस्तं विधूयेति सम्बन्धः। तथा विविध उत्कर्षो—गर्वः व्युत्कर्षो—मानः, तथा 'णूमं'ति माया, तां विधूय, तथा 'अप्पत्तियं'ति क्रोधं, क्रोधविधूनने मोहनीयविधूननमावेदितं, एतद्विधूनने अकर्मांशो भवति, अकर्मांशश्च विशिष्टज्ञानाद्भवति, नाज्ञानात्। एनमर्थं कर्माभावलक्षणं 'मृगो'ऽज्ञानी 'चुए'त्ति त्यजेद्भ्रश्येत्, किमुक्तं भवति? यो ज्ञानी स तु कषायचतुष्कविधूननेन अकर्मांशो भवति, परं यस्त्वज्ञानी स त्वेतस्मादर्थाद्भ्रष्टः अज्ञानित्वादकर्मांशो न

भवितुमल, यतः—" पढमं नाणं तओ दया, एवं चिट्ठइ सव्वसंजए । अन्नाणी किं काही ?, किं वा नाही ? य छेयपावगं ॥ १ ॥ " इति गाथार्थः ॥ १२ ॥ पुनरप्यज्ञानिनां दोपदर्शनायाह—

जे एयं नाभिजाणंति, मिच्छद्दिट्ठी अणारिया । मिगा वा पासबद्धा ते, घायमेसंतिऽणंतसो ॥ १३ ॥

व्याख्या—ये अज्ञानिनस्ते कर्मक्षपणोपायं न जानन्ति, आत्मीयासद्ग्रहग्रस्ताः मिथ्यादृष्टयः अनार्यास्ते मृगा इव पाशबद्धा ' घातं ' विनाशमेष्यन्ति अनन्तशो जन्मजरामरणान्यनुभविष्यन्ति, मृगस्त्वेकवारमेव म्रियते, अज्ञानवादिनस्त्वनन्तैर्मरणैर्मरिष्यन्तीति गाथार्थः ॥ १३ ॥

ये पुनरज्ञानिनः स्वकदाग्रहं न त्यजन्ति तानुद्दिश्य विशेषमाह—

माहणा समणा एगे, सव्वे नाणं सयं वदे । सव्वे लोगेऽवि जे पाणा, न ते जाणंति किंचण ॥ १४ ॥

व्याख्या—' एके ' केचन ब्राह्मणाः ' श्रमणाः ' परिव्राजकाः आत्मीयात्मीयं ज्ञानं वर्णयन्ति, परं तानि ज्ञानानि परस्परविरोधेन प्रवृत्तत्वान्न सत्यानि, तस्मादज्ञानमेव श्रेयः । अज्ञानवादिन एवं प्ररूपयन्ति—वादिनः सर्वेऽपि स्वस्वमतानुरागिणः सन्तः पृथक्पृथग्नवीनामेव प्ररूपणां कुर्वन्ति, ततश्चास्मादृशां मनसि सन्देहो जायते—का सत्या का चासत्येति, ततश्चाज्ञाने सति नवीनां प्ररूपणां कर्त्तुं न शक्यते लोकानां मनसि संशयोऽपि नोत्पद्यते, अतः अज्ञानमेव चारु,

१ प्रथमं ज्ञानं ततो दया एवं तिष्ठति सर्वसंयतः । अज्ञानी किं करिष्यति ? किं वा ज्ञास्यति ? छेक[श्रेयः]पापकम् ।

सर्वस्मिन्नपि लोके ये प्राणिनो न ते किञ्चन जानन्ति, यदपि गुरुपारम्पर्यागतं तेषां किञ्चन ज्ञानमस्ति तदपि छिन्नमूलत्वादवितथं न भवतीति गाथार्थः ॥ १४ ॥ एतदेव दृष्टान्तद्वारेण दर्शयितुमाह—

**मिलक्खू अमिलक्खुस्स, जहा वुत्ताणुभासए। ण हेउं से विजाणाइ, भासिअं तऽणुभासए ॥ १५ ॥**

व्याख्या—यथा कश्चिन्म्लेच्छः आर्यभाषां न वेत्ति, परमम्लेच्छस्य-आर्यस्य भाषितं तदनुभाषते, परं स म्लेच्छः आर्यस्य तदभिप्रायं न वेत्ति, यथाऽनेनानया विवक्षया भाषितं इति न सम्यग्जानाति, न च 'हेतुं' निमित्तं निश्चयेनासौ म्लेच्छस्तद्भाषितस्य जानाति, केवलं परमार्थशून्यं तद्भाषितमेवानुभाषते इति गाथार्थः ॥ १५ ॥

एवं दृष्टान्तेन दार्ष्टान्तिकं योजयति—

**एवमन्नाणिया णाणं, वयंतावि सयं सयं। निच्छयत्थं न याणंति, मिलक्खू व अबोहिया ॥ १६ ॥**

व्याख्या—एवमिति यथा म्लेच्छः अम्लेच्छस्य परमार्थमजानानः केवलं तद्भाषितमनुभाषते, एवमज्ञानिकाः-सम्यग्ज्ञानरहिताः श्रमणाः ब्राह्मणाः स्वीयं स्वीयं ज्ञानं प्रमाणत्वेन वदन्तोऽपि निश्चयार्थं न जानन्ति, निश्चयार्थमजानानाः म्लेच्छवदपरोक्तमनुभाषते 'अबोधिकाः' बोधिरहिता [अतोऽज्ञानमेव श्रेयः×] इति गाथार्थः ॥ १६ ॥ अथामीषां(दोष+) दर्शनायाह—

**अन्नाणियाण वीमंसा, नाणेण विणियच्छति। अप्पणो य परं नालं, कत्तो अन्नाणुभासणं ? ॥१७॥**

---

× बृहद्वृत्तौ। + एतच्चिन्हान्तर्गतः पाठोऽस्मत्परिवर्द्धितः।

व्याख्या—ये पुनरेवं प्ररूपयन्ति-अज्ञानमेव श्रेयस्ते अज्ञानवादिनस्तेषामयमुपदेशः-यावान् [ यावान् ] ज्ञानाभ्युपगमस्तावत्तावद्गुरुतरदोषसम्भवः, तथाहि-योऽवगच्छन् पादेन कस्यचिच्छिरः स्पृशति तस्य महानपराधो भवति, यस्त्वनाभोगेन स्पृशति तस्मै न कश्चिदपराध्यति, इत्येवं चाज्ञानमेव प्राधान्यभावमनुभवति, न तु ज्ञानं । अथ ये अज्ञानवादिनस्तेषां या 'वीमंसा' ज्ञातुमिच्छा सा ज्ञानविषये न प्रभवति, न निश्चयेन यच्छति-नावतरति । कोऽयमज्ञानवादिनां विमर्शः ? तथाहि-किमेतज्ज्ञानं सत्यं ? उतासत्यमिति ? किञ्च-अज्ञानमेव श्रेयो, यथा यथा च ज्ञानातिशयस्तथा तथा दोषाधिक्यं, सोऽयमेवम्भूतो विमर्शस्तेषां न युज्य[ते], एवम्भूतस्य पर्यालोचनस्य ज्ञानरूपत्वादिति । तथा ते अज्ञानवादिनः आत्मनोऽपि 'परं' प्रधानमज्ञानवादमुपदेष्टुं 'नालं' न समर्थाः, अज्ञानपक्षाश्रयणादिति। कुतः पुनस्ते स्वयमज्ञाः सन्तोऽन्येषां शिष्यत्वेनोपगतानां अज्ञानवादमुपदेष्टुं-समर्था भवेयुरिति गाथार्थः ॥ १७ ॥

तदेवं ते तपस्विनो अज्ञानिनः आत्मनः परेषां च शासने कर्त्तव्ये यथा न समर्थास्तथा दृष्टान्तेन दर्शयति—

**वणे मूढे जहा जंतू, मूढे नेयाणुगामिए । दोवि एए अकोविया, तिव्वं सोयं नियच्छई ॥ १८ ॥**

व्याख्या—यथा वने कश्चिन्मूढो जन्तुः-दिक्परिज्ञाने असमर्थः कमपि मूढमेवाग्रेसरं विधाय तमनुगच्छति ततस्तौ द्वावपि सम्यग्मार्गानभिज्ञौ तीव्रं श्रोतो-गहनं नियच्छत-निश्चयेन गच्छतः, अज्ञानावृतत्वात्तौ द्वावपि क्वापि गहनं पततः, एवमज्ञानवादिनः आत्मीयमेव शोभनं मार्गं मन्यमानाः परकीयं चाशोभनं जानन्तः स्वयं मूढाः परानपि मोहयन्तीति गाथार्थः ॥१८॥

अस्मिन्नेवार्थे दृष्टान्तान्तरमाह—

**अंधो अंधं पहं निंतो, दूरमद्धाणुगच्छई । आवज्जे उप्पहं जंतू, अदुवा पंथाणुगामिए ॥ १९ ॥**

व्याख्या—यथा स्वयमन्धः अपरं अन्धं पन्थानं नयन् विवक्षिताद्ध्वनः परतरं पन्थानं गच्छति तथोत्पथमापद्यते [ अथवा परं पन्थानमनुगच्छति × ] इति गाथार्थः ॥ १९ ॥

**एवमेगे नियागट्ठी, धम्ममाराहगा वयं । अदुवा अहम्ममावज्जे, ण ते सव्वज्जुयं वदे ॥ २० ॥**

व्याख्या—एवमेके भावमूढाः भावान्धाश्च नियागट्ठी, नियागो—मोक्षः सद्धर्मो वा, तदार्थिनः सन्तः किल वयं सद्धर्माराधका इत्येवं सम्प्रधार्य प्रव्रज्यायामुद्यताः सन्तः षट्कायोपमर्देन पचनपाचनादिक्रियासु प्रवृत्ताः सन्तस्तत्स्वयमनुतिष्ठन्ति अन्येषां चोपदिशन्ति, येन मोक्षावाप्तेर्भ्रंशयन्ति, अथवा अधर्ममापद्येरन्, ततोऽज्ञानवादप्रवृत्ताः सर्वैः प्रकारैः 'ऋजुः' प्रगुणो—मोक्षगमनं प्रत्यकुटिलः सर्वर्जुः—संयमः सुधर्मो वा, तं सर्वर्जुकं मार्गं न व्रजेयु—र्न प्राप्नुयुरिति गाथार्थः ॥ २० ॥

**एवमेगे वियक्काहिं, नो अन्नं पज्जुवासिया । अप्पणो य वियक्काहिं, अयमंजू हि दुम्मई ॥ २१ ॥**

व्याख्या—एवमेके अज्ञानवादिनो 'वितर्काभि'र्युक्तिभिः स्वोत्प्रेक्षिताभिरसत्कल्पिताभिः 'नो अन्नं पज्जुवासिय'त्ति नोऽपरं—अन्यं आर्हतादिकं ज्ञानवादिनं पर्युपासते, को भावः ? ते ह्यज्ञानवादिनः स्वावलेपग्रस्ता एवं मन्यन्ते—वयमेव तत्त्वज्ञानाभिज्ञाः, नापरः कश्चिद्विद्यतेऽस्मिन् विश्वेऽस्मत्समः, तेनाभिमानिनः सन्तो नापरं पर्युपासते । तथा 'अप्पणो य विय-

× बृहद्वृत्तौ

काहिं 'ति आत्मीयैर्वितर्कैः—स्वमनोरुचिविकल्पैरेवमभ्युपगतवन्तो, यथाऽस्मदीय एव मार्गः श्रेयान्—अज्ञानमेव श्रेयः, अयमेव मार्गः ' अंजू 'इति निर्दोषत्वात्स्पष्टः, परवादिभिस्तिरस्कर्तुं न शक्यते, ऋजुर्वा प्रगुणः—अकुटिलः, यथावस्थितार्थाभिधायित्वात् । किमित्येवंविधा ? इति हि—यस्मात्ते ' दुर्मतयो ' विपर्यस्तमतय इति गाथार्थः ॥ २१ ॥

एवमज्ञानवादिनां ज्ञानवादी दोषदर्शनायाह—

एवं तक्काइ साहिंता, धम्माधम्मे अकोविया । दुक्खं ते नाइतुट्टंति, सउणी पंजरं जहा ॥ २२ ॥

व्याख्या—एवं त[र्कपा]र्काभिः—स्वमनोरुचिकृतविक[ल्पनया]ल्पैः ' साधयन्तः ' प्रतिपादयन्तो धर्मे क्षान्त्यादिके दशविधे अधर्मे च जीवोपमर्दापादिते पापे ' अकोविदाः ' अनिपुणाः ' दुःखं ' दुःखकारणभूतं कर्म त्रोटयितुं नालं, कर्म न त्रोटयन्तीति, यथा पञ्जरस्थः ' शकुनिः ' पक्षी पञ्जरं त्रोटयितुं—पञ्जरबन्धनादात्मानं मोचयितुं नालं, एवमसावप्यज्ञानवादी संसारपञ्जरादात्मानं मोचयितुं नालमिति गाथार्थः ॥ २२ ॥ अथ सामान्येनैकान्तवादिमतदूषणायाह—

सयं सयं पसंसंता, गरहंता परं वयं । जे उ तत्थ विउस्संति, संसारं ते विउस्सिया ॥ २३ ॥

व्याख्या—स्वकीयं स्वकीयं—आत्मीयात्मीयं दर्शनं प्रशंसन्तः परकीयां वाचं ' गर्हन्तो ' निदन्तः (ये तु) एकान्तवादिनो ' विद्वस्यन्ते ' विद्वांस इवाचरन्ति, ततः संसारं विविधमनेकप्रकारं उत्प्राबल्येन ' श्रिताः ' सम्बद्धाः, तत्र वा संसारे ' उषिताः ' स्थिताः, संसारान्तर्वर्त्तिनः सर्वदा भवन्तीत्यर्थः ॥ २३ ॥

अथ चतुर्विधभिक्षुसमयः कर्मचयं न गच्छति तदधिकृत्याह—

**अहावरं पुरक्खायं, किरियावादिदरिसणं । कम्मचिंतापणट्ठाणं, संसारस्स पवड्ढणं ॥ २४ ॥**

व्याख्या—अथाज्ञानवादमतानन्तरं अन्यत्पुरा-पूर्वमाख्यातं, किं तत् ? क्रियावादिदर्शनं, कर्मणि-ज्ञानावरणादिके 'चिन्ता' पर्यालोचनं, ततः 'प्रणष्टा' अपगताः-कर्मचिन्ताप्रणष्टाः '**संसारस्स पवड्ढणं**' संसारवर्द्धनं। ते ह्येवं प्रतिपद्यमानाः संसारस्य वृद्धिमेव कुर्वन्ति, नोच्छेदमिति गाथार्थः ॥ २४ ॥

यथा च ते कर्मचिन्तातो नष्टास्तथा दर्शयितुमाह—

**जाणं काएणऽणाउट्टी, अबुहो जं च हिंसति । पुट्ठो वेदेइ परं, अवियत्तं खु सावज्जं ॥ २५ ॥**

व्याख्या—यो हि जानन् प्राणिनो हिनस्ति कायेन अनाकुट्टी, किमुक्तं भवति ? यो हि कोपादेर्निमित्तात्केवलं मनोव्यापारमात्रेण प्राणिनो व्यापादयति, न च कायेन प्राण्यवयवानां छेदनभेदनादिके व्यापारे वर्त्तते, न तस्यावद्यं, तस्य कर्मोपचयो न भवतीत्यर्थः, तथा अबुधो-ऽजानानः कायव्यापारेण यं च हिनस्ति प्राणिनं तत्रापि मनोव्यापाराभावान्न कर्मोपचय इति । अत्र पुरा यदुक्तं-चतुर्विधं कर्म नोपचयति भिक्षुसमय इति, तत्र परिज्ञोपचितं अविज्ञोपचिताख्यं भेदद्वयं साक्षादुपात्तं, शेषं त्वीर्यापथस्वप्नान्तिकभेदद्वयं च शब्दादुपात्तं, तत्रेर्यापथं नाम पथि गच्छतो यथा कथञ्चिदनभिसन्धेर्यत्प्राणिव्यापादनं भवति न तत्र कर्मबन्धः, [तथा 'स्वप्नान्तिक'मिति स्वप्न एव लोकोक्त्या स्वप्नान्तः, स विद्यते यस्य तत्]

स्वप्नान्तिकं, तदपि न कर्मबन्धाय, यथा स्वप्ने भुजिक्रियायां न तृप्तिस्तथा कर्मबन्धोऽपि न भवतीत्यर्थः, तर्हि कथं कर्मबन्धः ? उच्यते—"प्राणी प्राणिज्ञानं, घातकचित्तं च तद्गता चेष्टा । प्राणैश्च विप्रयोगैः, पञ्चभिरापद्यते हिंसा ॥ १ ॥" अत्र पञ्चानां पदानां द्वात्रिंशद्भङ्गा भवन्ति, तत्र प्रथमभङ्गे हिंसकोऽपरेष्वेकत्रिंशद्भङ्गकेषु अहिंसक इति । किमेकान्तेन परिज्ञोपचितादिना कर्मोपचयो न भवत्येव ? भवति काचिदव्यक्तमात्रेति दर्शयितुं श्लोकपश्चार्द्धमाह—'पुट्ठो'त्ति, तेन केवलमनोव्यापाररूपपरिज्ञोपचितेन केवलकायक्रियोत्थेन वा अविज्ञोपचितेन ईर्यापथेन स्वप्नान्तिकेन च चतुर्विधेनापि कर्मणा 'स्पृष्टः' ईषच्छुप्तः सन् कर्मस्पर्शमात्रेणासावनुभवति, न तस्याधिको विपाकोऽस्ति, कुड्यापतितसिकतामुष्टिवत्स्पर्शानन्तरमेव परिशटतीत्यर्थः । यतस्तत्साद्यं, खुरवधारणे, अव्यक्तं—अस्पष्टमिति गाथार्थः ॥ २५ ॥

कथं तर्हि कर्मोपचयो भवतीत्याह—

**संतिमे तउ आयाणा, जेहिं कीरइ पावगं । अभिकम्मा य पेसा य, मणसा अणुजाणिया ॥ २६ ॥**

व्याख्या—'सन्ति' विद्यन्ते त्रीणि 'आदानानि' कर्मोपादानकारणानि, यैरादानैः क्रियते पापं, तानि चामूनि—'अभिकम्मा य'त्ति 'अभिक्रम्य' आक्रम्य वध्यं प्राणिनं तद्घाताभिमुखं मनो विधाय यत्र स्वत एव प्राणी व्यापाद्यते, तदेकं कर्मादानं १ । तथाऽपरं प्राणिघाताय प्रेष्यं समादिश्य यत्प्राणिव्यापादनं तद्द्वितीयं कर्मादानं २ । तथा परं व्यापादयन्तं मनसा अनुजानीत इत्येतत्तृतीय कर्मादानं ३ । ॥ २६ ॥

तदेवं यत्र स्वयं कृतकारितानुमतयः प्राणिघाते क्रियमाणे विद्यन्ते क्लिष्टाध्यवसायस्य प्राणातिपातश्च, तत्रैव कर्मो-

पचयो नान्यत्रेति दर्शयितुमाह—

**एए उ तउ आयाणा, जेहिं कीरइ पावगं । एवं भावविसोहीए, निव्वाणमभिगच्छति ॥ २७ ॥**

व्याख्या—एतानि पूर्वोक्तानि त्रीण्येव आदानानि, यैर्दुष्टाध्यवसायसव्यपेक्षैः पापकर्म क्रियते, तथा यत्र पुनः प्राणिघाते त्रीण्यमूनि न प्रवर्त्तन्ते भावविशुद्धिश्च भवति, एतावता रागद्वेषौ विना यद्यपि मनसा कायेन वा प्राणिघातः स्यात्तथापि भावविशुद्ध्या कर्मबन्धो न भवति, कर्मबन्धाभावाच्च निर्वाणमिति गाथार्थः ॥ २७ ॥

भावविशुद्ध्या कर्मबन्धो न भवतीत्यत्रार्थे दृष्टान्तमाह—

**पुत्तं पिया समारब्भ, आहारेज्ज असंजए । भुंजमाणे य मेधावी, कम्मुणा णोवलिप्पई ॥ २८ ॥**

व्याख्या—कश्चित्पिता पुत्रं ' समारभ्य ' व्यापाद्य कस्याञ्चिदवस्थायां × अरक्तद्विष्टः ' आहारेज्ज 'त्ति आहारं करोति ' असंयतो ' गृहस्थः ' मेधावी ' संयतोऽपि तमाहारं भुञ्जानः कर्मणा नोपलिप्यते, एतावता ' असंयतो ' गृहस्थो भिक्षुर्वा शुद्धाशयः पिशितास्यपि कर्मणा नोपलिप्यते, अत्र यथा पितुः पुत्रं व्यापादयतस्तत्रारक्तद्विष्टमनसः कर्मबन्धो न स्यात्तथाऽन्यस्याप्यरक्तद्विष्टान्तःकरणस्य प्राणिवधे सत्यपि न कर्मबन्ध इति गाथार्थः ॥ २८ ॥ साम्प्रतमेतद्दूषणायाह—

**मणसा जे पउस्संति, चित्तं तेसिं ण विज्जति । अणवज्जमतहं तेसिं, ण ते संवुडचारिणो ॥ २९ ॥**

× " तथाविधायामापदि तदुद्धरणार्थं " इति बृहद्वृत्तौ ।

व्याख्या—ये हि कुतश्चित्कारणान्मनसा 'प्रादुःष्यन्ति' प्रद्वेषमुपयान्ति तेषां वधपरिणतानां चित्तं शुद्धं न विद्यते, तदेवं यत्तैरभिहितं-यथा केवलमनःप्रद्वेषेऽप्यनवद्यं-कर्मोपचयाभावः, तत्तेषामतथ्यं-असत्यं-मृषा, यतो मनसोऽशुद्धत्वात्, न ते संवृतचारिणः-न ते संवरे प्रवर्त्तन्ते इति। यतः कर्मबन्धे मुख्यं कारणं मन एव, यदि मनोव्यापारे सति न बन्धस्तर्ह्यन्यत्कर्मबन्धकारणं किमस्तीति भावः ॥ २९ ॥ अथ क्रियावादिनामनर्थपरम्परां दर्शयितुमाह—

इच्चेयाहिं दिट्ठीहिं, सातागारवणिस्सिया । सरणं ति मन्नमाणा, सेवंती पावगं जणा ॥ ३० ॥

व्याख्या—इत्येताभिः पूर्वोक्ताभिर्दृष्टिभिः-प्ररूपणाभिस्ते वादिनः सातगौरवनिश्रिताः-सुखशीलतायामासक्ता यत्किञ्चनकारिणो यथालब्धभोजिनश्च संसारोद्धरणार्थमस्मदीयं दर्शनं शरणमिव मन्यमानाः विपरीतानुष्ठानेन 'अनघं' पापमेव कुर्वन्ति व्रतिनोऽपि सन्तः जना इव जनाः-प्राकृतपुरुषसदृशाः पामरा इति गाथार्थः ॥ ३० ॥

अस्यैवार्थस्योपदर्शकं दृष्टान्तमाह—

जहा अस्साविणिं नावं, जाइअंधो दुरूहिया । इच्छई पारमागंतुं, अंतरा य विसीयती ॥ ३१ ॥

व्याख्या—यथा अस्राविणीं सच्छिद्रां नावं जात्यन्धः समारुह्य 'पारं' तटमागन्तुं-प्राप्तुमिच्छत्यसौ, तस्याश्चास्राविणीत्वेनोदकप्लुतत्वादन्तराले-जलमध्ये एव विषीदति-वारिणि निमज्जति इति गाथार्थः ॥ ३१ ॥

साम्प्रतं दार्ष्टान्तिकयोजनार्थमाह—

**एवं तु समणा एगे, मिच्छद्दिट्ठी अणारिया। संसारपारकंखी ते, संसारं अणुपरियट्टंति ॥३२॥त्ति बेमि ॥**

व्याख्या—यथाऽन्धः सच्छिद्रायां नावि समारूढः पारगमनाय नालं, तथा एके श्रमणाः शाक्यादयो मिथ्यादृष्टयः पिशिताशनानुमतिदानादनार्याः स्वदर्शनानुरागेण संसारपारकांक्षिणो–मोक्षाभिलाषुका अपि सन्तः संसारमेव–चतुर्गतिसंसरणरूपमेवानुपर्यटन्ति, भूयोभूयस्तत्रैव जन्मजरामरणदौर्गत्यादिक्लेशमनुभवन्तोऽनन्तमपि कालमासते, न विवक्षितमोक्षसुखमाप्नुवन्तीति, ब्रवीमीति पूर्ववदिति गाथार्थः ॥ ३२ ॥

द्वितीयाङ्गे समयाख्याध्ययनस्य द्वितीयोद्देशकः समाप्तः ।

द्वितीयोद्देशकानन्तरं तृतीयः समारभ्यते, द्वितीयोद्देशके स्वसमयप्ररूपणा कृता, इहापि सैव क्रियते । तथाहि—

**जं किंचि उ पूतिकडं, सड्ढिमागंतुमीहितं । सहस्संतरियं भुंजे, दुपक्खं चेव सेवइ ॥ १ ॥**

व्याख्या—यत्किञ्चिदित्याहारजातं स्तोकमप्यास्तां प्रभूतं, तदपि पूतिकृत–माधाकर्मिकाहारसिक्थेनाप्युपस्पृष्टमास्तां तावदाधाकर्म, तदपि न स्वयं कृतं अपितु श्रद्धावता–ऽन्येन भक्तिमताऽपरानागन्तुकानुद्दिश्य ईहितं–चेष्टितं निष्पादितं, तच्च सहस्रान्तरितमपि यो भुञ्जीतासौ द्विपक्षं–गृहस्थपक्षं प्रव्रजितपक्षं चासेवते, किम्पुनर्य एते शाक्यादयः स्वयमेवाधाकर्मतया × निष्पाद्य स्वयमेव चोपभुञ्जते, ते च सुतरां द्विपक्षासेविनो भवन्तीत्यर्थः, अथवा ईर्यापथं साम्परायिकं च कर्म आदत्ते,

× " स्वयमेव सकलमाहारजातं निष्पाद्य " इति वृहद्वृत्तौ ।

यद्वा पूर्वबद्धा निकाचिताद्यवस्थां कर्मप्रकृतिर्नयन्ति *अपूर्वश्चादत्ते*। एवमपि द्विपक्षासेविनो भवन्तीत्याह च-"अट्ठवि कम्माइं अहे, बंधइ पकरेइ चिणइ उवचिणइ। कम्मियभोई साहू, जं भणियं भगवईए फुडं ॥ १ ॥" अत्र श्रीभगवतीसत्क आलापको वाच्यः+। एतावता शाक्यादयः परतीर्थिकाः स्वयूथ्या वा आधाकर्मोपभुञ्जानाः द्विपक्षमेवासेवन्ते इति सूत्रार्थः ॥ १ ॥

अथामीषां सुखैषिणां आधाकर्मभोजिनां कटुकविपाकं दर्शयन्नाह—

तमेव अवियाणंता, विसमंसि अकोविया। मच्छा वेसालिया चेव, उदगस्सऽभियागमे ॥ २ ॥

उदगस्स पभावेणं, सुक्कंसि घातमिंति उ। ढंकेहि य कंकेहि य, आमिसत्थीहिं ते दुही ॥ ३ ॥

व्याख्या—तमेवाधाकर्मोपभोगजनितं दोषमजानानाः 'विसमंसि' त्ति विषमो अष्टप्रकारकर्मबन्धश्चतुर्गतिकः संसारो वा, तस्मिन् अकोविदाः-कथमेष कर्मबन्धो भवति कथं वा न भवति केन वा प्रकारेण संसारार्णवस्तीर्यते ? इत्येवंविधे-

* एतादृक्चिह्नद्वयान्तर्गतः पाठो वृहद्वृत्तित उद्धृतो ज्ञेयः।

१ अष्टावपि कर्माण्यधो बध्नाति प्रकरोति चिनोत्युपचिनोति। कार्मिकभोजी साधुर्यद्भणितं भगवत्या स्फुटम् ॥ १ ॥

+ स चायं-"आहाकम्मं भुंजमाणे समणे कइकम्मपयडीओ बंधइ ? गोयमा ! अट्ठ कम्मपयडीओ बंधइ, सिढिलबंधणबद्धाओ धणियबंधणबद्धाओ करेइ चियाओ करेइ उवचियाओ करेइ हस्सट्ठिइयाओ दीहट्ठिइयाओ करेइ" इति।

प्रकारैं अकुशलाः संसारे दुःखिनो भवन्तीत्यत्र दृष्टान्तमाह—यथा मत्स्याः 'वैशालिकाः'+ विशालजात्युद्भवाः—बृहच्छरीरा उदकस्याभ्यागमे—समुद्रवेलायां सत्यां×, पुनर्वेलापगमे तस्मिन्नुदके शुष्के तस्मिन्नेव घुनीमुखे विलग्नाः अवसीदन्ति, आमिषगृध्नुभिर्ढङ्कैः कङ्कैश्च पक्षिभिः अन्यैश्च मांसवसार्थिभिर्मत्स्यबन्धादिभिर्जीवन्त एव विलुप्यमाना महान्तं दुःखसमुद्घातमनुभवन्तो अशरणा 'घातं' विनाशं यान्ति, त्राणाभावाद्विनाशमेव यान्तीति श्लोकद्वयार्थः ॥ २–३ ॥

**एवं तु समणा एगे, वट्टमाणसुहेसिणो । मच्छा वेसालिया चेव, घातमेसंतिऽणंतसो ॥ ४ ॥**

व्याख्या—यथा मत्स्यास्तथा श्रमणाः शाक्यपाशुपतादयः स्वयूथ्या वा वर्त्तमानमेव सुखं आधाकर्मोपभोगजनितमेषितुं शीलं-येषां ते वर्त्तमानसुखैषिणो वैशालिका मत्स्या इव 'घातं' विनाशमेष्यन्त्यनन्तशोऽरघट्टघटीन्यायेन भूयोभूयः संसारोदरे निमज्जनोन्मज्जनं कुर्वाणा, न ते संसारपारगामिनो भविष्यन्तीत्यर्थः ॥ ४ ॥

साम्प्रतमपराज्ञानिमतोपदर्शनायाह—

**इणमन्नं तु अन्नाणं, इहमेगेसि आहियं । देवउत्ते अयं लोए, बंभउत्ते त्ति आवरे ॥ ५ ॥**

व्याख्या—इदमन्यदज्ञानं—मोहविजृम्भितं,/ इहास्मिँल्लोके एकेषां, न सर्वेषां, आख्यात—मभिप्रायः । किमाख्यातमिति

---

+ " विशालः—समुद्रस्तत्र भवा विशालाख्यजातिभवा वा विशाला एव वा वैशालिका—बृहच्छरीरा " इति हर्षकुलगणिः ।

× " उदकस्य प्रभावेण नदीमुखमागताः " इति हर्षकुलगणिः ।

तदेवाह–अयं लोको देवोप्तः–कर्षकेणेव बीजवपनं कृत्वा देवेन निष्पादितोऽयं लोक इत्यर्थः, 'देवगुप्तो' देवरक्षितो वा, इत्येवमादिकं सर्वमज्ञानमिति । तथा ब्रह्मणा उप्तो ब्रह्मोप्त इत्ययं लोक इत्यपरे, तेषामयमभ्युपगमः–'ब्रह्मा' जगत्पितामहः, स चैक एवादावासीत्, तेन च प्रजापतयः सृष्टास्तैश्च क्रमेणैतत्सकलं जगदिति गाथार्थः ॥ ५ ॥

ईसरेण कडे लोए, पहाणाइ तहावरे । जीवाजीवसमाउत्ते, सुहदुक्खसमन्निए ॥ ६ ॥

व्याख्या—एके वदन्ति ईश्वरकृतोऽयं लोकः, तथा प्रधानादिकृतो लोकः, [प्रधानं–]सत्त्वरजस्तमसां साम्यावस्था-प्रकृतिस्तत्कृतोऽयं लोकः, तथा अन्ये स्वभावनिष्पन्नोऽयं लोक इति, यथा–कण्टकास्तीक्ष्णाः, चित्रिताः मयूराः, ईक्षवो मधुराः, निम्बः कटुकः, लहसुणो दुर्गन्धः, पद्मं सुगन्धं, एते पदार्था यथा स्वभावनिष्पन्नास्तथा लोकोऽपि स्वभावादेव, न केनापि कृतः । परं कथम्भूतोऽयं लोकः जीवाजीवस[मायुक्तः]मन्वितः, तथा सुखमानन्दरूपं दुःखं त्वसातोदयरूपं, ताभ्यां समन्वितोऽयं लोक इति गाथार्थः ॥ ६ ॥ किञ्च—

सयंभुणा कडे लोए, इति वुत्तं महेसिणा । मारेण संथुया माया, तेण लोए असासते ॥ ७ ॥

व्याख्या—एके वदन्ति स्वयम्भु–र्विष्णुरन्यो वा, स च एक एवादावभून्न चैकाकी रमते, द्वितीयमिष्टवान्, ततस्तच्चिन्तानन्तरं द्वितीया शक्तिः समुत्पन्ना, तदनन्तरं जगत्सृष्टिरभूदित्येवं महर्षिणोक्तं–कथितं, ततः स्वयम्भुवा लोकं निष्पाद्य अति सम्भारभयाद्यमाख्यो मारयतीति मारो व्यधायि, तेन मारेण माया [ संस्तुता– ] कृता, तया मायया लोकोऽयं

म्रियते+, ततो लोकोऽयमशाश्वतः अनित्यो विनाशीति च गाथार्थः ॥ ७ ॥ अपिच—

**माहणा समणा एगे, आह अंडकडे जगे । असो तत्तमकासी य, अजाणंता मुसं वदे ॥ ८ ॥**

व्याख्या—एके ब्राह्मणाः 'श्रमणा'स्त्रिदण्डिप्रभृतयः एवमाहु–रेवमुक्तवन्तः, यथा–अण्डकृतं जगत्–अण्डाज्जातमित्यर्थः, यदा न किञ्चिदपि वस्त्वासीत्, पदार्थशून्योऽयं संसारस्तदा ब्रह्माऽप्स्वण्डमसृजत, तस्माच्च क्रमेण वृद्धाद् द्विधाभावमुपगतादूर्द्धाऽधो विभागोऽभूत्, तन्मध्ये च सर्वाः प्रकृतयः पृथिव्यप्तेजोवाय्वाकाशसमुद्रसरित्पर्वतमकराकरनिवेशादिसंस्थितिरभूदिति, एवम्भूते चास्मिञ्जगति 'असौ' ब्रह्मा, तस्य भावस्तत्त्वं–पदार्थजातं तदण्डादिप्रक्रमेण अकार्षीत्, ते च ब्राह्मणादयः परमार्थमजानाना [ एवं ] मृषा वदन्ति–अन्यथाऽवस्थितमन्यथा प्ररूपयन्तीति गाथार्थः ॥ ८ ॥

अथ देवोप्तादिजगद्वादिनामुत्तरदानायाह—

**सएहिं परियाएहिं, लोयं बूया कडेत्ति य । तत्तं ते ण विजाणंति, ण विणासी कयाइवि ॥ ९ ॥**

व्याख्या—स्वकीयैः स्वकीयैः पर्यायै–रभिप्रायैर्युक्तिविशेषैरयं लोकः कृत इत्यब्रुव–न्नभिहितवन्तः, तद्यथा–देवोप्तो ब्रह्मोप्त ईश्वरकृतः प्रधानादिनिष्पादितः स्वयम्भुवा निष्पादितः तथाऽण्डजश्चायं लोक इत्यादि स्वकीयाभिर्युक्तिभिः प्रतिपादयन्ति, यथाऽस्मदुक्तमेव सत्यं, नान्यदिति । ते चैवंवादिनः सर्वेऽपि 'तत्त्वं' परमार्थ–यथावस्थितलोकस्वभावं न [ वि ]जानन्ति–

---

+ " न च तत्त्वतो जीवस्य मृतिरस्ति, तेन मायैषा, " इति ह.

न सम्यग्विवेचयन्ति, यथाऽयं लोको द्रव्यार्थतया न विनाशी निर्मूलतः कदाचन, न चायमादित आरभ्य केनापि कृत इति शाश्वतोऽयं लोकः अनाद्यपर्यवसानोऽयं लोक इत्यादिपरमार्थं न विंदन्ति, ततो अविमृश्य भाषिण इति गाथार्थः ॥ ९ ॥

अथ तेषामज्ञानफलोपदर्शनायाह—

**अमणुन्नसमुप्पायं, दुक्खमेव विजाणिया । समुप्पायमजाणंता, किह नाहिंति? संवरे ॥ १० ॥**

व्याख्या—दुःखं अमनोज्ञसमुत्पादं-अमनोज्ञानुष्ठानादनाचाराद्दुःखमुत्पद्यते, एतावता अमनोज्ञसमुत्पादं दुःखं 'विजानीयात्' अवगच्छेत्प्राज्ञः । एतदुक्तं भवति-स्वकृतादसदनुष्ठानादेव दुःखस्योद्भवो भवति, नान्यस्मादित्येवं व्यवस्थिते एते [अनन्तरोक्त]वादिनोऽसदनुष्ठानोद्भवस्य दुःखस्य समुत्पादं अजानानाः सन्त ईश्वरादेव दुःखोत्पादमिच्छन्ति, ते हि वराकाः ईश्वरवादिन ईश्वरकृतमेव दुःखं प्रतिपादयन्ति, ते चैवमिच्छन्तः कथं दुःखस्य संवरं-दुःखप्रतिघातहेतुं ज्ञास्यन्ति? कारणोच्छेदे कार्योच्छेदः, यथा-रोगोत्पत्तिनिदानं ज्ञात्वा तत्प्रतीकाराय यत्नो विधीयते, रोगनिदानमन्यत्तत्प्रतीकारश्चान्य एव विधीयते, कथं तदुपशमः स्यात्?, तथैव ते वादिनोऽपि दुःखनिदानमेव न जानन्ति, तच्चाजानानाः कथं ते दुःखोच्छेदाय यतिष्यन्ते? यत्नवन्तोऽपि च न दुःखोच्छेदनमवाप्स्यन्ति, अपितु संसारारण्ये पर्यटन्तोऽनन्तमपि कालं संस्थास्यन्तीति गाथार्थः ॥ १० ॥

साम्प्रतं प्रकारान्तरेण कृतवादिमतमुपन्यस्यन्नाह—

**सुद्धे अपावए आया, इह मेगेसिमाहियं । पुणो किड्डापदोसेणं, सो तत्थ अवरज्झइ ॥ ११ ॥**

व्याख्या—इह एके गोशालकमतानुसारिण एवं वदन्ति, यथाऽयमात्मा मनुष्यभव एव शुद्धाचारो भूत्वा अपगताशेषमलकलङ्कः सन्मोक्षं याति, अपापकश्च तत्र भवति, इदं एकेषां आख्यातं, इयं वाचोयुक्तिरेकेषां वादिनामिति भावः। एवमयमात्मा शुद्धत्व-अकर्मकत्वराशिद्वयावस्थो भूत्वा क्रीडया प्रद्वेषेण वा स तत्र मोक्षावस्थ एव 'अपराध्यति' रजसा श्लिष्यते, किमुक्तं भवति ? तस्य स्वशासनपूजामुपलभ्य अन्यशासनपराभवेन च 'क्रीडा' प्रमोदः सञ्जायते, स्वशासनतिरस्कारदर्शनेन प्रद्वेषस्ततः शनैः शनैः रजसा मलिनी भवति, मलीमसश्च कर्मगौरवाद्भूयः संसारे अवतरति, तदा तृतीयराश्यवस्थो भवति। पूर्वं मनुष्यभव एव शुद्ध इत्येकाऽवस्था, तदनु मोक्षेऽकर्मक इति द्वितीयावस्था, पुनः स्वशासनतिरस्कारदर्शनाद्द्वेषेण संसारेऽवतरति इयं तृतीयावस्था इति गाथार्थः ॥ ११ ॥ किञ्च—

**इह संवुडे मुणी जाए, पच्छा होइ अपावए। वियडंबु जहा भुज्जो, नीरयं सरयं तहा ॥ १२ ॥**

व्याख्या—'इह' मनुष्य भव एव प्रव्रज्यामभ्युपेत्य संवृतात्मा-यमनियमरतो जातः, पश्चादपापो भवति-अपगताशेषमलकलङ्को जायते, ततो मुक्तावस्थो भवति, ततः पुनरपि स्वशासनपूजादर्शनान्निकारोपलब्धेश्च रागद्वेषोदयात्कलुषितान्तरात्मा विकटाम्बुव-दुदकवन्नीरजस्कं [सत्] वातोद्धूतरेणुसम्पृक्तं 'सरजस्कं' मलिनं भवति, एवमात्माऽपि पूर्वं नरभवे शुद्धः, मोक्षे अपापको-ऽकर्मा, तदनु शासन[पूजा]तिरस्कारदर्शनेन रागद्वेषोदयाद्भवावतरणेन सरजा, एवं राशित्रयावस्थो भवत्यात्मेति गाथार्थः ॥ १२ ॥ अधुनैतन्मतं दूषयितुमाह—

एयाणुचिंति मेधावी, बंभचेरे ण ते वसे । पुढो पावाउया सवे, अक्खायारो सयं सयं ॥ १३ ॥

व्याख्या—' मेधावी ' प्राज्ञः एतान् वादिनोऽनुचिन्त्य एवमवधारयेत्–नैते राशित्रयवादिनो देवोप्तादिलोकादिनश्च ब्रह्मचर्ये * तदुपलक्षिते * संयमानुष्ठाने वा वसेयुः, अपिच–सर्वेऽप्येते प्रावादुकाः स्वीयं स्वीयं दर्शनं स्वदर्शनानुरागात् शोभनत्वेन ' अख्यातारः ' प्रख्यापयितारः, नच तत्र विदिततत्त्वेनास्था विधेयेति गाथार्थः ॥ १३ ॥

पुनरन्यथा कृतवादिमतमुपदर्शयितुमाह—

सए सए उवट्ठाणे, सिद्धिमेव न अन्नहा । अहो !! इहेव वसवत्ती, सवकामसमप्पिए ॥ १४ ॥

व्याख्या—ते कृतवादिनः अपरेऽपि स्वकीये २ ' उपस्थाने ' स्वकीयानुष्ठाने दीक्षागुरुचरणसुश्रूषादिके सिद्धिमभिहितवन्तः–सर्वेऽपि वादिनः स्वकीयानुष्ठानादेव सिद्धिं प्रतिपादयन्ति, यः पृच्छयते स एवमेव वक्ति–अस्मदीयानुष्ठानादेव मुक्त्यवाप्तिः,नान्येन केनापि प्रकारेण सिद्धिरवाप्यते, अहो !! 'इहेव'त्ति सिद्धिप्राप्तेरधस्तात्प्रागपि यावदद्यापि सिद्धिप्राप्तिर्न भवति तावदिहैव जन्मनि अस्मदीयदर्शनोक्तानुष्ठानानुभावात् 'वसवत्ती' वशवर्ती–वशेन्द्रियो भवति, न ह्यसौ सांसारिकस्वभावैरभिभूयते, सर्वकामसमर्पितो–यान् यान् कामान् कामयते ते तेऽस्य सर्वे सिद्ध्यन्ति–सिद्धेरर्वाक् अष्टगुणैश्वर्यलक्षणा सिद्धिर्भवति परत्र चाशेषद्वन्द्वोपरमलक्षणा सिद्धिर्भवतीति गाथार्थः ॥ १४ ॥ एतदेव दर्शयति—

सिद्धा य ते अरोगा य, इहमेगेसिमाहियं । सिद्धिमेव पुरो काउं, सासए गंठिया नरा ॥ १५ ॥

व्याख्या—ते हि दर्शनिनः एवं प्रतिपादयन्ति—येऽस्मदुक्तमनुष्ठानं सम्यगनुतिष्ठन्ति तेऽस्मिञ्जन्मनि अष्टगुणैश्वर्यरूपां सिद्धिमासाद्य पुनरन्ते शरीरत्यागेन 'सिद्धा' अशेषद्वन्द्वरहिता अरोगाश्च भवन्ति । एकेषां वादिनां इदमाख्यातं—भाषितं, ते च वादिनः सिद्धिमेव पुरस्कृत्य—मुक्तिमेवाङ्गीकृत्य स्वकीये आशये—स्वदर्शनरागेण 'ग्रथिताः' सम्बद्धास्तदनुकूला युक्तिः प्रतिपादयन्ति नरा इव—प्राकृतपुरुषा इव, यथा प्राकृतपुरुषाः—शास्त्रावबोधविकलाः स्वाभिप्रेतार्थसाधनाय युक्तिः प्रतिपादयन्ति, एवं तेऽपि पण्डितम्मन्याः परमार्थमजानानाः स्वाग्रहप्रसाधिका युक्तिरुद्घोषयन्ति । तथा चोक्तं—"आग्रही बत × निनीषति, युक्तिं तत्र यत्र मतिरस्य निविष्टा । पक्षपातरहितस्य तु, युक्तिर्यत्र तत्र मतिरेति निवेशम् ॥ १ ॥" इति गाथार्थः ॥ १५ ॥ अथैतत्प्ररूपिणां फलदर्शनायाह—

**असंवुडा अणादीयं, भमिहिंति पुणो पुणो । कप्पकालमुवज्जंति, ठाणा असुरकिब्बिसियत्ति बेमि ॥**

व्याख्या—ते हि पाषण्डिनो मोक्षार्थिनोऽपि 'असंवृता' असंयताः, ते हि एवं वदन्ति—इहास्माकं इन्द्रियानुरोधेन सर्वविषयोपभोगादमुत्र च मुक्त्यवाप्तेः, तदेवं मुग्धजनं प्रतारयन्तो अनादिकं संसारकान्तारं पुनः पुनर्भ्रमिष्यन्ति, याऽपि च तेषां बालतपोऽनुष्ठानादिना स्वर्गावाप्तिः साऽप्येवंप्राया भवतीति दर्शयति—'कल्पकालं' प्रभूतकालमुत्पद्यन्ते, असुराः नागकुमारादयस्तत्रापि न प्रधानाः, किं तर्हि ? 'किल्बिषिकाः' अधमाः—अल्पर्द्धयः अल्पायुषः अल्पसामर्थ्याद्युपेताः

× इति खेदे ।

प्रेष्यभूताश्च भवन्ति । सुधर्मस्वामी जम्बूस्वामिनमाह, इतिरधिकारसमाप्तौ, ब्रवीमीति पूर्ववत् ॥ १६ ॥

इति समयाख्याध्ययनस्य तृतीयोद्देशकः समाप्तः ॥

उक्तस्तृतीयोद्देशकः, अधुना चतुर्थः प्रारभ्यते । अनन्तरोद्देशके स्वपरसमयवक्तव्यतोक्ता, इहापि सैवाभिधीयते, तथाहि—

**एते जिया भो ! न सरणं, बाला पंडियमाणिणो । हिच्चा णं पुव्वसंजोगं, सिया किच्चोवएसया ॥१॥**

व्याख्या-एते सर्वेऽपि पूर्वोक्ता वादिनः 'जिता' अभिभूताः, कैः ? रागद्वेषादिभिर्निर्जितैर्वा, 'भो' इति शिष्यामन्त्रणं, * एवं त्वं गृहाण यथा-* एते कुवादिनो मिथ्योपदेशप्रवृत्तत्वान्न कस्यचिच्छरणं भवन्ति-न कञ्चनापि तारयितुं समर्थाः स्युः। किमिति न शरणं ? यतो 'बाला' अज्ञानिनः, तथा च पण्डितमानिनः, ते कथमीदृशाः ? यतः-'हित्वा' त्यक्त्वा पूर्वसंयोगं धनधान्यस्वजनादिसंयोगं, निस्सङ्गाः सन्तः प्रव्रजिताः, पुनः 'सिताः' बद्धाः परिग्रहारम्भेष्वासक्तास्ते गृहस्थास्तेषां कृत्यं पचन-पाचनखण्डनपीषणादि अन्यो वा भूतोपमर्दकारी व्यापारस्तं गच्छन्तीति गितकृत्योपदेशगाः प्रव्रजिता अपि सन्तो गृहस्थेभ्यो न भिद्यन्ते, संरम्भसमारम्भरूपपञ्चसूना+ व्यापारोपेता वा गृहस्था इव कथं तदुपासकानां शरणं भवन्तीति गाथार्थः ॥ १ ॥

एवम्भूतेषु तीर्थिकेषु सत्सु भिक्षुणा किं कर्त्तव्यं ? तद्दर्शयितुमाह—

---

+ खण्डनी १ पेषणी २ चुल्ली ३, उदकुम्भी ४ प्रमार्जनी ५ । पञ्च शूना गृहस्थस्य, तेन स्वर्गं न गच्छति ॥१॥ [ " वधा-स्पदे ॥ ६५२ ॥ शूना तालव्यदन्त्यादिः " इति शब्दरत्नाकरे ३ काण्डे ]

**तं च भिक्खू परिन्नाय, विज्जं तेसु ण मुच्छए । अणुक्कसे अप्पलीणे, मज्झेण मुणि जावए ॥ २ ॥**

व्याख्या—' भिक्षुः ' साधुस्तत्परिज्ञाय-ज्ञात्वा, किं ज्ञात्वा ? यथैते दर्शनिनो मिथ्यादृशो-विवेकशून्या नात्मने न परस्मै हिताय भवन्ति इति भिक्षुर्ज्ञात्वा विद्वाँस्तेषु-कुतीर्थिकेषु न मूर्च्छये-न सङ्गतिं कुर्यात्, किं पुनः कर्त्तव्यं ? 'अणुक्कसे' इति अनुत्कर्षवान्-उत्सेकरहितः ' अप्रलीनः ' कुतीर्थिकेषु असम्बद्धो मुनिर्जगत्त्रयवेदी मध्यस्थवृत्त्या रागद्वेषरहित आत्मा यापयितव्यः, आत्मप्रशंसां परनिन्दां च परिहरन् मध्येन-रागद्वेषयोरन्तराले सञ्चरेदिति गाथार्थः ॥ २ ॥

किमेते कुतीर्थिकास्त्राणाय न भवन्तीति दर्शयितुमाह—

**सपरिग्गहा य सारंभा, इह मेगेसिमाहियं । अपरिग्गहा अणारंभा, भिक्खू ताणं परिव्वए ॥ ३ ॥**

व्याख्या—ते कुतीर्थिकाः ' सपरिग्रहाः ' शरीरोपकरणादौ मूर्च्छावन्तो जीवोपमर्दकारिण औद्देशिकभोजिन, [ ' च ' पुनः सारम्भाः- ] अत एव न त्राणाय, " परिग्रहारम्भमग्ना-स्तारयेयुः ? कथं परान् । स्वयं दरिद्रो न पर-मीश्वरीकर्त्तुमीश्वरः ॥ १ ॥ " इति वचनात् । तथा ' इह मेगेसिमाहियं ' इह-परलोकचिन्तायां एकेषामेतदाख्यातं-एतद्भाषितं, यथा-किमनया शिरस्तुण्डमुण्डनादिकया क्रियया ? परं गुरोरनुग्रहात्परमाक्षरावाप्तिस्तद्दीक्षावाप्तिर्वा [ यदि ] भवति, ततो मोक्षो भवतीत्येवं भाषमाणास्ते न त्राणाय भवन्ति । तर्हि के त्राणाय भवन्तीति दर्शयति-अपरिग्रहाः, धर्मो-पकरणादृते शरीरोपभोगाय न स्वल्पोऽपि परिग्रहो येषां ते अपरिग्रहाः, अनारम्भाः-सावद्यारम्भरहिताः, ते चैवम्भूताः

कर्मलघवः स्वयं यानपात्रकल्पाः संसारमहोदधेर्जन्तूत्तारणसमर्थास्तान्, भिक्षुः शरणं [परि]व्रजेद्-गच्छेदित्यर्थः ॥ ३ ॥

कथं पुनस्तेन अपरिग्रहेण अनारम्भेण च वर्त्तनीयमित्येतद्दर्शयितुमाह—

**कडेसु घासमेसेज्जा, विऊ दत्तेसणं चरे । अगिद्धो विप्पमुक्को अ, ओमाणं परिवज्जए ॥ ४ ॥**

व्याख्या—गृहस्थैः स्वार्थं निष्पादिता ओदनादयस्ते कृता उच्यन्ते, तेषु 'कृतेषु' परकृतपरनिष्ठितेषु षोडशोद्गमदोषपरिहारेण यो ग्रास-आहारस्तमेषयेन्मृगयेत्-याचेत । तथा 'विद्वान्' संयमकरणैकनिपुणः । निःश्रेयसबुद्ध्या दत्तमित्यनेन षोडशोत्पादना दोषाः परिहृता द्रष्टव्याः । एवंविधे आहारे स भिक्षुश्चरे-दनुतिष्ठेदित्यनेन दशैषणादोषाः परिगृहीता इति मन्तव्यम् । 'अगृद्धो' रागद्वेषरहितो भोजने, अनेन पञ्च ग्रासैषणादोषा निरस्ता मन्तव्याः । तथा विप्रमुक्तो रागादिभिः परेषामपमानं + अधिसहेतेति, एवंविधो भिक्षुर्भवतीति गाथार्थः ॥ ४ ॥

इदानीं परवादिमतमेवोद्देशार्थाधिकाराभिहितं, तद्दर्शयन्नाह—

**लोगवायं निसामेज्जा, इह मेगेसिमाहियं । विवरीयपन्नसंभूयं, अन्नोहिं बुइयाणुयं ॥ ५ ॥**

व्याख्या—लोकानां पाषण्डिकानां *पौराणिकानां* वा वादो लोकवादः, यथा स्वमभिप्रायेण यो यस्याभ्युपगमस्तं निशामयेच्छृणुया-ज्जानीयादित्यर्थः । इहा-स्मिन्संसारे 'एकेषां' केषाञ्चिदिदमाख्यात-मयमभ्युपगमः, तदाख्यातं-कीदृशं ?

+ '-परावमदर्शित्व परिवर्जयेत्-परित्यजेत्, न ज्ञानमदं तपोमदं च कुर्यादिति भावः ।' इति बृहद्वृत्तिः ।

'विवरीयपन्नसंभूय'मिति विपरीतप्रज्ञासम्भूतं-विपर्यस्तबुद्धिग्रथितं 'अन्नेहिं बुइयाणुगं' अन्यैरविवेकिभिर्यदुक्तं तदनुगं-अविवेकिभिर्यद्भाषितं पुनस्तदनुमारेण प्रवर्त्तितं, एवंविधं विपर्यस्तबुद्धिरचितं पापण्डिलोकवादं निशामये-च्छृणुयादिति गाथार्थः ॥५॥

अथ तमेव लोकवादं दर्शयितुमाह—

**अणंते नितिए लोए, सासए ण विणस्सती । अंतवं णितिए लोए, इति धीरोऽतिपासए ॥ ६ ॥**

व्याख्या—अनन्तोऽयं लोकः, यो यादृगिहभवे स तादृगेव परभवेऽप्युत्पद्यते, पुरुषः पुरुष एव अङ्गना अङ्गनैव, अथवा 'अनन्तो'ऽपरिमितो-निरवधिक इति । तथा 'नित्यः' अप्रच्युतानुत्पन्नस्थिरैकस्वभावो लोकः । तथा शाश्वतो न कदाचिद्विनश्यति । तथा 'अंतवं' अन्तोऽस्यास्तीति अन्तवान् "सप्तद्वीपा वसुन्धरे"ति, इतो नाधिको न न्यूनः, स च तादृक्परिमाणो नित्यः, इत्येवं 'धीरः' कश्चित्साहसिको अन्यथा प्ररूपणाद्व्यासादिरिवातिपश्यति [ इव ] अतिपश्यति । तदेवम्भूतमनेकभेदभिन्नं लोकवाद निशामयेदिति गाथार्थः ॥ ६ ॥ किञ्च—

**अपरिमाणं वियाणाइ, इहमेगेसिमाहियं । सवत्थ सपरिमाणं, इति धीरोऽतिपासई ॥ ७ ॥**

व्याख्या—यस्य वस्तुनः क्षेत्रतः कालतश्च 'परिमाणं' इयत्ता न विद्यते तदपरिमाणं, एके वादिनो वदन्ति-अस्माकं तीर्थकृदपरिमाणं जानाति, परं न सर्वज्ञः, इह जगति सर्वज्ञः कोऽपि नास्ति, एकेषां-सर्वज्ञापह्नववादिनामिदमाख्यातं-इदं

भाषितं + सपरिमाणं क्षेत्रतः कालतश्च तत्पश्यति धीरः, तथाहि–ते ब्रुवते दिव्यं वर्षसहस्रं ब्रह्मा स्वपिति, तस्यामवस्थायां न पश्यत्यसौ, तावन्मात्रं च कालं जागर्त्ति, तत्र च पश्यत्यसाविति ॥ ७ ॥

तदेवम्भूतो बहुधा लोकवादः प्रवृत्तस्तस्य चोत्तरदानायाह—

**जे केइ तसा पाणा, चिट्ठंति अदु थावरा । परियाए अत्थि से उं[? अं]जू, जेणं ते तसथावरा ॥८॥**

व्याख्या—ये केचन त्रसाः द्वीन्द्रियादयः × स्थावराः पृथिव्यादयः [ते], यद्ययं लोकवादः सत्यो भवेद्यथा–यो यादृगस्मिञ्जन्मनि मनुष्यादिः सोऽन्यस्मिन्नपि जन्मनि तादृगेव भवतीति, यदीयं वाचोयुक्तिः सत्या तदा दानाध्ययन-जपनियमतपोऽनुष्ठानादिकाः क्रियाः सर्वा निरर्थकाः स्युः, न चैवं, तस्माद्ये केचन त्रसाः स्थावरास्तेषां स्वकर्मपरिणत्याऽयं पर्यायो 'उं[अं]जू' इति प्रगुणो-ऽव्यभिचारी, त्रसाः स्थावरपर्यायं लभन्ते स्थावराश्च त्रसत्वं, परं ये त्रसाः त्रसा एव स्थावराः स्थावरा एव नायं नियमः, परं ये वदन्ति–यो यादृगिह जन्मनि स परभवेऽपि तादृगेव तन्मिथ्येति गाथार्थः ॥८॥

अस्मिन्नेवार्थे दृष्टान्ताभिधित्सया आह—

**उरालं जगतो जोगं, विवज्जासं पलियंति य । सवे अकंतदुक्खा य, अओ सवे अहिंसिया ॥ ९ ॥**

+ "तथा [सर्वत्र–] सर्वक्षेत्रमाश्रित्य कालं वा परिच्छेद्यं कर्मतापन्नमाश्रित्य सह परिमाणेन [वर्तत इति] सपरिमाण–सपरिच्छेदं, धी–र्बुद्धिस्तया राजत इति धीर इत्येवमसावतीव पश्यतीत्यतिपश्यति, तथाहि– ०" इति बृहद्वृत्तौ ।

× "प्राणाः–प्राणिनः सत्त्वाः 'तिष्ठन्ति' त्रसत्वमनुभवन्ति, अथवा" इति बृहद्वृत्तौ ॥

व्याख्या—औदारिकजन्तुग्रामस्य 'जोगं' व्यापारं–अवस्थाविशेषमित्यर्थः, औदारिकशरीरिणो हि जन्तवः प्राक्तनावस्थाविशेषाद्गर्भकललार्बुदरूपाद्विपर्यासभूतं बालकुमारयौवनादिकमुदारं योगं परि–समन्ताद् गच्छन्ति, एतदुक्तं भवति–औदारिकशरीरिणो हि मनुष्यादेर्बालकुमारादिकः कालादिकृतोऽवस्थाविशेषोऽन्यथाऽन्यथा वा भवत्प्रत्यक्षेण लक्ष्यते, न पुनर्यादृक्प्राक्तादृगेव सर्वदा, नायं नियमः। एवं (सर्वेषां) स्थावरजङ्गमानां जन्तूनां विपर्यासो द्रष्टव्यः। अपि च–सर्वेऽपि जन्तवो दुःखाक्रान्ताः सन्तोऽन्यथाऽवस्थाभाजो लक्ष्यन्ते, यदिवा सर्वेऽपि जन्तवोऽकान्तदुःखा–अप्रियदुःखाः प्रियसुखाश्च, अतस्तान् सर्वान्न हिंस्यादिति गाथार्थः ॥ ९ ॥ किमर्थं सत्त्वान्न हिंस्यादित्याह—

**एयं खु नाणिणो सारं, जं न हिंसति किंचणं। अहिंसासमयं चेव, एतावंतं विजाणिया ॥ १० ॥**

व्याख्या–एतदेव 'खु'निश्चये, ज्ञानिनो–विशिष्टविवेकवतः 'सारं' न्याय्यं, यत्कञ्चन प्राणिजातं स्थावरं जङ्गमं वा न हिनस्ति–न परितापयति, उपलक्षणं चैतत्तेन मृषाऽदत्ताब्रह्मपरिग्रहनिशाभोज्याद्यपि परिहरेत् इत्येतदेव ज्ञानिनः सारं यन्न कर्माश्रवेषु वर्त्तेत इति। अपिच 'अहिंसासमयं चेव'त्ति अहिंसासमयमेव एतावदेव विजानीयात्, एतावतैव कार्यसिद्धेः, किम्बहुना ज्ञानाभ्यासेन पलालप्रायेण ?, + "किं ताए पढियाए ?, पयकोडीए पलालभूयाए। जत्थित्तियं न नायं, परस्स पीडा न कायव्वा ॥ १ ॥" इति गाथार्थः ॥ १० ॥

उक्ता मूलगुणा अथोत्तरगुणानाह—

---

+ किं तया पठितया ? पदकोट्या पलालभूतया। यत्रैतावन्न ज्ञात परस्य पीडा न कर्त्तव्या ॥ १ ॥

वुसिए य विगयगिद्धी, आया[णीयं×]णं संरक्खए। चरियासणसिज्जासु, भत्तपाणे य अंतसो ॥ ११॥

व्याख्या—विविध-मनेकप्रकारं दशविधचक्रवालसामाचार्यां उ[षितो-व्यु]षितः। पुनः कीदृग्भवति साधुः ? विगतगृद्धिः-आहारादौ लोल्यतारहितः, + आदानीयं-ज्ञानदर्शनचारित्र[रूपं रत्न]त्रयं सम्यग्रक्षति, यथा यथा रत्नत्रयस्य वृद्धिर्भवति तथा तथा कुर्यादित्यर्थः। कथं चारित्रं पालितं भवति ? तद्दर्शयति-' चरियासणसिज्जासु'त्ति, साधुना हि सति प्रयोजने युगमात्रदृष्टिना गन्तव्यं, तथा सुप्रत्युपेक्षिते सुप्रमार्जिते चासने उपवेष्टव्यं, तथा 'शय्यायां' वसतौ संस्तारके वा सुप्रत्युपेक्षितप्रमार्जिते स्थानादि विधेयं, तथा भक्ते पाने चान्तशः सम्यगुपयोगवता भाव्यमिति गाथार्थः ॥ ११ ॥

पुनश्चारित्रशुद्ध्यर्थमुत्तरगुणानधिकृत्याह—

एतेहिं तिहिं ठाणेहिं, संजते सययं मुणी । उक्कसं जलणं णूमं, मज्झत्थं च विगिंचए ॥ १२ ॥

व्याख्या—एतानि त्रीणि स्थानानि, तद्यथा-ईर्यासमितिरित्येकं स्थानं १, आसनं शय्येत्यनेनादानभाण्डमात्रनिक्षेपणासमितिरिति द्वितीयं स्थानं २, भक्तपानमित्यनेनैषणासमितिरुपात्ता, भक्तपानार्थं च संप्रविष्टस्य भाषणसम्भवाद्भाषासमितिराक्षिप्ता भवति, सति चाहारे उच्चारप्रश्रवणादीनां सद्भावात् परिष्ठापनासमितिरप्यायातेत्येतच्च तृतीयं स्थानं ३, एतेषु त्रिषु

× समीचीनोऽय प्रतिभाति पाठो वृत्ति-दीपिकाकारयोरभिप्रायेण । + " आदीयते-प्राप्यते मोक्षो येन तदादानीयं-ज्ञानादित्रयं, तत्सम्यग्रक्षयेत् । " इति हर्षकुलगणिः ।

स्थानेषु संयतो मुनिः 'उत्कर्षो' मानः +'ज्वलनः' क्रोधः 'णूमं' ति माया 'मध्यस्थो' लोभः, एतांश्चतुरोऽपि कषायान् मुनिः सदा 'विगिंचए'त्ति विवेचयेदात्मनः पृथक्कुर्यादिति गाथार्थः ॥ १२ ॥ पुनः साधुगुणानेवाह—

**समिते उ सदा साहू, पंचसंवरसंवुडे । सितेहिं असिते भिक्खू, आमोक्खाय परिव्वएज्जासि त्तिबेमि ॥**

व्याख्या—एवंविधः साधुरामोक्षाय× परिव्रजेत्, समितिभिः समितः पञ्चप्रकारसंवरसंवृतः, तथा गृहपाशादिषु 'सिताः' बद्धाः गृहस्थाः, तेषु 'असितो' अबद्धः-गृहिषु मूर्च्छामकुर्वाणः, पङ्काधारपङ्कजवत् "जहा पोमं जले जायं, नोवलिप्पइ वारिणा" इति वचनात् । एवंविधः साधुः संयमानुष्ठानरतो भवेस्त्वमिति विनेयस्योपदेशः । इतिरध्ययनपरिसमाप्तौ, ब्रवीमीति गणधर एवमाह-यथा तीर्थकृतोक्तं तथैवाह ब्रवीमि, न स्वमनीषिकयेति गाथार्थः ॥ १३ ॥

[ इति श्रीपरमसुविहितखरतरगच्छविभूषणमहोपाध्याय-श्रीमत्साधुरङ्ग-गणिवर्यविहितायां ]
श्रीसूत्रकृताङ्गदीपिकायां समयाख्यं प्रथममध्ययनं समाप्तमिति ।

---

+ " ननु क्रोध एवादौ सर्वत्र स्थाप्यते, अत्र तु कथं मानः ? इति चेदुच्यते-माने सत्यवश्यम्भावी क्रोधः, क्रोधे च सति मानः स्यान्न वेत्यर्थस्य दर्शनाय क्रमोल्लङ्घनमिति" हर्षकुलगणिः ।

× " आमोक्षाय-अशेषकर्मापगमलक्षणमोक्षार्थं 'परि' समन्ताद्व्रजेः " इति बृहद्वृत्तौ ।

# अथ द्वितीयं वैतालीयाख्यं अध्ययनम्

अथ द्वितीयाध्ययनमारभ्यते, * तत्रेयमादिगाथा—

**संबुज्झह किं न बुज्झह?, संबोही खलु पेच्च दुल्लहा। णो हु उवणमंति राईओ, नो सुलहं पुणरावि जीवियं ॥**

व्याख्या—भगवनादितीर्थंकरो भरततिरस्कारागतसवेगान् स्वपुत्रानुद्दिश्येदमाह, यदि वा सुरासुरनरोरगतिरश्चान् समुद्दिश्य प्रोवाच, यथा—सम्बुध्यध्वं यूयं—ज्ञानदर्शनचारित्रलक्षणे धर्मे बोधं कुरुत, यतः—पुनरेवंविधोऽवसरो दुरापः, किं न बुध्यध्वमित्यवश्यमेवंविधसामग्र्यवाप्तौ सत्यां सकर्णेन × तुच्छान् भोगान् परित्यज्य सद्धर्मे बोधो विधेय इति भावः। योऽस्मिन् भवे धर्मं न करिष्यति तस्य परभवे बोधिप्राप्तिर्दुर्लभा +, यतोऽतिक्रान्ता रात्रिः पुनर्नायाति " † जा जा वच्चइ रयणी, न सा पडिनियत्तई । " इति वचनात् । एवमतिक्रान्तं यौवनाद्यपि न वलति, संयमजीवितव्यमपि न सुलभमिति गाथार्थः ॥१॥

अथ सर्वजन्तूनामायुरनित्यमिति दर्शयति—

**डहरा बुड्ढा य पासह, गब्भत्था वि चयंति माणवा। सेणे जह वट्टयं हरे, एवं आउखयम्मि तुट्टई ॥ २ ॥**

---

* " तत्र प्रथमाध्ययने परसमयदोषाः स्वसमयगुणाश्चोक्ताः, तांश्च ज्ञात्वा यथा कर्म विदार्यते तथा बोधो विधेय इत्यनेन सम्बन्धेनागतस्यास्योद्देशकत्रयं, तत्र प्रथमोद्देशकस्येदमादिसूत्रं—" इति हर्षकुलगणिः ।

× प्राणिना । + " खलु शब्दस्यावधारणार्थत्वात्सुदुर्लभैव " इति वृ. वृ. । † या या व्रजन्ति रजन्यो न ताः प्रतिनिवर्त्तन्ते ।

२ वैतालीयाध्ययने आद्योद्देशके आयुषोऽनित्यत्वोपदेशः ।

व्याख्या—'डहरा' बालाः सन्तो म्रियन्ते, एके वृद्धाः सन्तो गर्भस्थाश्च, पश्यत यूयं, के ? मानवाः, मानवा एवोपदेशार्हा इति मानवग्रहणं, एवमपायबाहुल्यात् सर्वास्वप्यवस्थासु प्राणी प्राणाँस्त्यजति + । अत्रैव दृष्टान्तमाह–यथा श्येनः पक्षिविशेषो 'वर्त्तकं' तित्तिरजातीयं 'हरेत्' व्यापादयेत्, एवं प्राणिनः प्राणान्मृत्युरपहरेदिति गाथार्थः ॥२॥ तथा च—

**मायाहि पियाहि लुप्पती, नो सुलभा सुगती वि पेच्चउ। एयाइं भयाइं पेहिया, आरंभा विरमेज्ज सुव्वते ॥३॥**

व्याख्या—कश्चिद्दराकः प्राणी × मातापितादिस्वजनैर्विलुप्यते, कोऽर्थः ? तेषां ममतावशात्संसारे भ्राम्यते, ततश्च तन्मूर्च्छोपगतो धर्मे नोद्यम करोति, धर्मेण विना च सुगतिरपि न सुलभा, तदेवमेतानि 'भयानि' भयकारणानि दुर्गतिगमनादीनि 'पेहिय' त्ति प्रेक्ष्य 'आरम्भात्' सावद्यानुष्ठानरूपाद्विरमेत्, को भावः ? एवं च ज्ञात्वा यो विवेकी सुव्रतो भवति स आरम्भान्निवर्त्तते–आरम्भे न रमते इति गाथार्थः ॥ ३ ॥ अनिवृत्तस्य दोषमाह—

**जमिणं जगती पुढो जगा, कम्मेहिं लुप्पंति पाणिणो। सयमेव कडेहिं गाहती, नो तस्स मुच्चेज्जऽपुट्ठवं ॥४॥**

व्याख्या–यद्यस्मादनिवृत्तानामिदं भवति–'जगति' पृथिव्यां 'पुढो' त्ति पृथक्पृथग् यानि नरकादीनि स्थानानि सन्ति तेषु सावद्यानुष्ठानोपचितैः स्वकृतैः कर्मभिर्विलुप्यन्ते–नरकादियातनास्थानेषु भ्राम्यन्ते प्राणिनः स्वयमेव कृतैः कर्मभि-

---

+ "तथाहि—त्रिपल्योपमायुष्कस्यापि पर्याप्त्यनन्तरमन्तर्मुहूर्त्तेनैव कस्यचिन्मृत्युरुपतिष्ठति ।" इति बृहद्वृत्तौ ।

× "यो मातापितृमोहेन धर्मोद्यमं न कुरुते स तैरेव" इति हर्षकुलगणिः ।

गाहते नरकादिस्थानानि, न च तस्याशुभाचरितस्य कर्मणो विपाकेन अस्पृष्टो मुच्यते जन्तुः, नाभुक्तं कर्म विलीयते, तपोविशेषमन्तरेण दीक्षाप्रवेशादिना न तदपगमं विधत्त इति गाथार्थः ॥ ४ ॥ अधुना सर्वस्थानानित्यतां दर्शयितुमाह—

**देवा गंधव्वरक्खसा, असुरा भूमिचरा सरीसिवा। राया नरसिट्ठिमाहणा, ठाणा ते वि चयंति दुक्खिया ॥५॥**

व्याख्या–सुगमैव, × नवरमेते पूर्वोक्ताः सर्वेऽपि स्वकीयानि स्थानानि दुःखिताः सन्तस्त्यजन्ति, यतः सर्वेषामपि प्राणिनां प्राणपरित्यागे महद्दुःखं समुत्पद्यते इति गाथार्थः ॥ ५ ॥ किञ्च—

**कामेहि य संथवेहि य, कम्मसहा कालेण जंतवो। ताले जह बंधणच्चुते, एवं आउखयम्मि तुट्टई ॥६॥**

व्याख्या–कामैर्विषयादिभिः संस्तवैर्मातृपितृश्वशुरादिजनितैः, तत्रासक्ताः सन्तः कर्मविपाकसहिष्णवो भवन्ति, क ? काले +, के ? जन्तवः, को भावः ? विषयादिष्वासक्ताः जन्तवः कर्मविपाककाले कर्मविपाकमनुभवन्ति, परं न कोऽपि स्वजनादिर्दुःखात्त्रायते, यथा च तालफलं 'बन्धनाद्' वृन्ताच्च्युतं सदवश्य पतत्येव, एवं असावपि जन्तुः स्वायुषः क्षये 'त्रुट्यति' जीविताच्च्यवते इति गाथार्थः ॥ ६ ॥ अपि च—

---

× " देवा–ज्योतिष्कसौधर्माद्या, गन्धर्वराक्षसयोरुपलक्षणार्थत्वादष्टप्रकारा व्यन्तराः, असुरा–दशधा भवनपतयः, ये चान्येऽपि भूमिचराः, सरिसृपास्तिर्यञ्चस्तथा राजानश्चक्रिहरिप्रमुखा, नराः–सामान्यमनुष्याः, श्रेष्ठिनः–पुरमहत्तरा ब्राह्मणाश्च । " इति हर्ष० ।

+ सप्तम्यर्थे तृतीयाऽत्र मूले, बृहद्वृत्तिकारेण तु तृतीयैव व्याख्याता ।

जेयावि बहुस्सुते सिया, धम्मिय माहण भिक्खुए सिता।
अभिनूमकडेहिं मुच्छिते, तिवं ते कम्मेहिं किच्चती ॥ ७ ॥

व्याख्या—ये चापि बहुश्रुताः धार्मिका ब्राह्मणाः भिक्षादाः × स्यु-र्भवेयुः, तेऽपि 'अभि' समन्तात् 'नूम'त्ति कर्म माया वा, तत्कृतैरसदनुष्ठानैर्मूर्च्छितास्तीव्रमत्यर्थं कर्मभिरशुभैश्छिद्य[कृत्य]न्ते-पीडयन्ते जन्तव इति गाथार्थः ॥ ७ ॥

साम्प्रतं ज्ञानदर्शनचारित्रमन्तरेण नापरो मोक्षमार्गोऽस्तीति दर्शयन्नाह—

अह पास विवेगमुट्ठिते, अवितिण्णे इह भासई धुवं। णाहिसि ? आरं कओ परं, वेहासे कम्मेहिं किच्चती ॥

व्याख्या—'अह पास'त्ति + शिष्यं प्रति गुरुर्वक्ति यथा-भो शिष्य ! त्वं पश्य-कश्चित्तीर्थिको 'विवेकं' परिग्रह-परित्यागं कृत्वा 'उत्थितः' प्रव्रज्याविषये सावधानोऽभूत्, परं सम्यक्परिज्ञानाभावादवितीर्णः-संसारसमुद्रात्स्वयं न तीर्णस्तथापि भाषते-अस्मदीयादेवाचारान्मुक्तिरिति, ततश्चाहो !! शिष्य ! तन्मार्गं प्रपन्नस्त्वं 'आरं' इहलोकं 'परं' परलोकं कथं ज्ञास्यसि ? अपितु न ज्ञास्यसि, ततश्च इहलोकपरलोकभ्रष्टः सन् 'वेहास'त्ति अन्तराले स्थित एव स्वकृतैर-शुभैः कर्मभिः 'कृत्यते' पीड्यते इति गाथार्थः ॥ ८ ॥

पुनः शिष्य आह—ननु तीर्थिका अपि निष्परिग्रहास्ततश्च तत्कथं न मोक्षावाप्तिरित्येतदाशंक्याह—

× भिक्षामहीतुमिच्छकाः । + 'अथेत्यनन्तर'मिति बृहद्वृत्तौ ।

जइ वि य नगिणे किसे चरे, जइ वि य भुंजइ मासमंतसो ।
जे इह मायाइ मिज्जई, आगंता गब्भायऽणंतसो ॥ ९ ॥

व्याख्या—यद्यपि कश्चित्तापसादिस्त्यक्तपरिग्रहो नग्नः कृशश्च चरेत्-प्रव्रज्यानुष्ठानं कुर्यात् । 'जइ वि य भुंजइ मासमंतसो' यद्यपि भुङ्क्ते मासेन तथाप्यान्तरकषायापरित्यागान्न मुच्यते, य इह तीर्थिको मायया मीयते, एतावता कषायैर्युज्यते, स गर्भाद्गर्भमेष्यति 'अनन्तशो' निरवधिकं कालं, अग्निशर्मवत्संसारे पर्यटतीति गाथार्थः ॥ ९ ॥

यतो मिथ्यादृक्कृतकष्टानुष्ठानेऽपि न मोक्षावाप्तिः, अतो मदुक्त एव मार्गे स्थेयमेतद्गर्भमुपदेशं दातुमाह—

पुरिसोरम पावकम्मुणा, पलियंतं मणुयाण जीवियं ।
सन्ना इह काममुच्छिया, मोहं जंति असंवुडा नरा ॥ १० ॥

व्याख्या—हे पुरुष ! असदनुष्ठानादुपरम-निवर्त्तस्व, यतः-पुरुषाणां जीवितं सुबह्वपि त्रिपल्योपमान्तं, संयमजीवितं पल्योपमस्यान्त-र्मध्ये वर्त्तते, तदप्यूनं पूर्वकोटिमितं, तदपि गतमेव जानीहि, एतावद्विज्ञाय यावज्जीव्यते तावत्सदनुष्ठानेन सफलं कर्त्तव्यं, ये पुनर्भोगस्नेहपङ्के मग्नाः कामेषु चाध्युपपन्नास्ते नरा असंवृत्ताः सन्तो मोहं यान्ति-हिताहितप्राप्तिपरिहारे मुह्यन्तीति गाथार्थः ॥ १० ॥ यद्येव ततः किं कर्त्तव्यं ? तदेवाह—

ज[ययं]इतं ( ? ) विहराहि जोगवं, अणुपाणा पंथा दुरुत्तरा ।

अणुसासणमेव पक्कमे, वीरेहिं सम्मं पवेदितं ॥ ११ ॥

व्याख्या—स्वल्पं जीवितव्यमवगम्य विषयांश्च क्लेशप्रायानवगम्य छित्वा गृहपाशबन्धनं 'यतमानो' यत्नं कुर्वन् प्राणिनामनुपतापेन 'विहर' उद्युक्तविहारी भव। कथम्भूतः सन्? 'योगवान्' संयमयोगवान् गुप्तः समितिगुप्तः, किमित्येवं? यतः—पन्थाः सूक्ष्मप्राणिभिराक्रान्तस्ततस्तस्मिन् पथि जीवविराधनामन्तरेण विहरणं दुष्करं, अत एवेर्यासमितियुक्तो व्रज, एवमन्यास्वपि समितिषु सततोपयुक्तेन भवितव्यं, [ 'अनुशासनमेव' ] यथागममेव—सूत्रानुसारेण संयमं पालयेदेतच्च सर्वैर्वीरै—रर्हद्भिः सम्यक्प्रवेदितं ॥ ११ ॥ अथ के ते वीरा? इत्याह—

विरया वीरा समुट्ठिया, कोहकायरियाइपीसणा, पाणे ण हणंति सव्वसो, पावाओ विरताभिनिव्वुडा ॥

व्याख्या—वीराः के उच्यन्ते? ये हिंसादिपापेभ्यो निवृत्ताः, पुनः कीदृशाः? 'समुत्थिताः' सम्यगारम्भपरित्यागेन समुत्थिताः क्रोधकातरिकादिपीषणाः क्रोधग्रहणान्मानो गृहीतः, माया—कातरिका, तद्ग्रहणाल्लोभो गृहीतस्तदपनेतारः, तथा प्राणान्न घ्नन्ति 'सर्वशः' मनोवाक्कायकर्मभिः, पापाच्च सावद्यानुष्ठानरूपान्निवृत्ताः, अत एवाभिनिवृत्ताः—क्रोधाद्युपशमेन शीतीभूताः, ईदृशा वीरा इति गाथार्थः ॥ १२ ॥ पुनरप्युपदेशान्तरमाह—

नवि ता अहमेव लुप्पए, लुप्पंती लोगंसि पाणिणो ।
एवं सहिए य पासए, अणिहे से पुट्ठे अहियासए ॥ १३ ॥

व्याख्या–परीषहोपसर्गैरभिद्रुतः सन् एवं विचिन्तयेत्, न च तावत् अहमेवैकः परीषहोपसर्गैर्लुप्ये–पीड्ये, अपि त्वस्मिँल्लोके अन्येऽपि प्राणिनस्तिर्यग्मनुष्यादयोऽतिदुस्सहैर्दुःखैर्लुप्यन्ते–पीडयन्ते, परं तेषां सम्यग् विवेकाभावान्न काऽपि निर्जरा, एवं [ ज्ञानादिभिः ] सहितो वा आत्महितः सन् पश्येत्–कुशाग्रीयया बुद्ध्या अनन्तरोदितं पर्यालोचयेत् । तथा 'अणिह'त्ति क्रोधादिभिरपीडितः सन्–गजसुकुमालादिवन्महासत्त्वः परीषहैः स्पृष्टोऽपि तानधिसहेत–मनःपीडां न विदध्यादिति । अथवा 'अनिहे' इति तपःसंयमे परीषहसहने वा अनिगूहितबलवीर्यो भूयादिति गाथार्थः ॥ १३ ॥ अपि च—

धुणिया कुलियं व लेववं, किसए देहम[णसणाईहिं+]णासणा इह ।
अविहिंसामेव पव्वए, अणुधम्मो मुणिणा पवेदितो ॥ १४ ॥

व्याख्या–यथा कुड्यं गोमयादिलेपेन सलेपस्सन् झाडय[जाघट्य]मानं लेपापगमात्कृशं भवति, एवं हे मुने ! त्वमपि 'धूत्वा' विधूय लेपं कुड्यवत् देहं [ अनशनादिभिः ] कृशयेद्–अपचितमांसशोणितं विदध्यात्तदपचयाच्च कर्मणामपचयो भवतीति भावः, तथा [ न विहिंमा ] अ[वि]हिंसा, तामेव प्रकर्षेण व्रजे–दहिंसाप्रधानो भूयादित्यर्थः । 'अणुधम्मो' मोक्षं प्रत्यनुकूलो धर्मो 'मुनिना' सर्वज्ञेन 'प्रवेदितः' कथित इति गाथार्थः ॥ १४ ॥ किञ्च—

सउणी जह पंसुगुंडिया, विहुणिय धंसयती सियं रयं । एवं दवितोवहाणवं, कम्मं खवति तवस्सिमाहणे ॥ १५

+ हर्षकुलीयदीपिकाऽऽदर्शेऽयं पाठो युज्यतेऽपि चैवंविध एव वृत्त्याद्यभिप्रायतः ।

व्याख्या-' शकुनिका ' पक्षिणी यथा ' पांशुना ' रजसा अवगुण्ठिता सती अङ्गं ' विधूय ' कम्पयित्वा तद्रजः ' सितं ' बद्धं ' ध्वंसयति ' अपनयति, एवं तपस्वी माहनो + ' दवितो ' द्रव्यो-भव्यो मुक्तिगमनयोग्यः ' उपधानवान् ' तपोयुक्तः कर्म ज्ञानावरणीयादिकं क्षपयति-अपनयतीति गाथार्थः ॥ १५ ॥ अथानुकूलोपसर्गमाह—

उट्ठियमणगारमेसणं, समणं ठाणठितं तवस्सिणं ।
डहरा बुड्ढा य पत्थए, अवि सुस्से ण य तं लभे जणा ॥ १६ ॥

व्याख्या—' अनगारं ' श्रमणं संयमोत्थानेन एषणां प्रत्युत्थितं-प्रवृत्तं उत्तरोत्तरविशिष्टतपोनिष्टप्तदेहं स्थानस्थितं कदाचित् 'डहराः' पुत्रनप्त्रादयो ' वृद्धाः ' मातृपितृप्रभृतयः ' उन्निष्क्रामयितुं ' प्रव्रज्यां मोचयितुं प्रार्थयेयुस्ते तं साधुमेवं वदेयुः-वयं भवता प्रतिपाल्याः, न त्वामन्तरेण कोऽपि नः पालयिता, एवं च ते भणन्तोऽपि जनाः पुत्रादयः अपि 'शुष्येयुः' श्रमं गच्छेयुर्न च तं साधुं विदितपरमार्थं ' लभेरन् ' नैवात्मवशं विदध्युरिति गाथार्थः ॥ १६ ॥ किञ्च—

जइ कालुणियाणि कासिया, जइ रोयंति य पुत्तकारणा ।
दवियं भिक्खुं समुट्ठियं, नो लब्भंति ण संठवित्तए ॥ १७ ॥

व्याख्या—यद्यपि ते मातृपितृपुत्रकलत्रादयः ' कारुण्यानि ' करुणाप्रधानानि वचांसि अनुष्ठानानि कुर्युः ' रोयंति 'त्ति

+ " मा वधीरिति प्रवृत्तिर्यस्य स प्राकृतशैल्या माहनः " इति हर्षकुलगणिः ।

तथा रुदन्ति पुत्रनिमित्तं, यथा–कुलवर्द्धनमेकं पुत्रं समुत्पाद्य त्वं गच्छेः, तथापि ते भिक्षुं 'द्रव्यं' मुक्तियोग्यं 'समुत्थि तं' संयमोत्थानेन न लभन्ते–न शक्नुवन्ति प्रव्रज्यातो भ्रंशयितुं नापि संस्थापयितुं–गृहस्थभावे, न द्रव्यलिङ्गाद्यात्रयितुमिति गाथार्थः ॥ १७ ॥ अपि च—

जइ वि[य] कामेहि लाविया, जइ णेज्जाहि णं बंधिउं घरं ।
जति जीवति नावकंखए, नो लब्भंति न संठवित्तए ॥ १८ ॥

व्याख्या—यद्यपि ते साधुं कामभोगैर्लोभयन्ति यदिवा बध्वा गृहं नयन्ति, एवमनुकूलप्रतिकूलोपसर्गैः पीडितोऽपि जीवितं न वाञ्छति, किन्तु मरणमाद्रियते, परं नासंयमे प्रवर्त्तते, तथापि ते स्वजनास्तं साधुं 'नो लब्भंति' न लभन्ते–न प्राप्नुवन्त्यात्मसात्कर्त्तुं नापि गृहस्थभावेन संस्थापयितुमलमिति गाथार्थः ॥ १८ ॥ किञ्च—

सेहंति य णं ममाइणो, माया पिया य सुया य भारिया ।
पोसाहि णे पासओ तुमं, लोगं परं पि जहासि पोसणे ॥ १९ ॥

व्याख्या—यद्यपि ते मातापित्रादयः 'ममाइणो' त्ति ममत्ववन्तः–स्नेहालवः 'ण'मित्यलङ्कारे 'सेहंति'त्ति शिक्षयन्ति। कथं शिक्षयन्तीत्याह–यथावस्थितार्थदर्शी त्वं 'पश्यकः' सूक्ष्मदर्शी सश्रुतिकः पश्य नो–ऽस्मान् अत्यन्तदुःखितान् पोषकाभावात् तेन नः 'पोषय' पालय, अन्यथा इहलोकपरलोकं जहासि–इहलोकपरलोकभ्रष्टो भविष्यसि, अस्मत्पालनेन

पुण्यावाप्तिरेवेति गाथार्थः ॥ १९ ॥

एवं तैरुपसर्गिताः सन्तः केचित्कातराः कदाचिदेतत्कुर्युरित्याह—

अन्ने अन्नेहिं मुच्छिया, मोहं जंति नरा असंवुडा ।
विसमं विसमेहिं गाहिया, ते पावेहिं पुणो पगब्भिया ॥ २० ॥

व्याख्या—'अन्ये' अल्पसत्त्वाः कातराः प्राणिनः अन्यै–र्मातापित्रादिभिर्मूर्च्छिताः–ममत्ववन्तः असंवृता नराः, एवम्भूता मोहं यान्ति–सदनुष्ठाने मुह्यन्ति, ततश्च ते विषमै–रसंयतैर्गृहस्थैर्विषमं–असंयमं ग्राहिताः सन्तः पुनः पापकर्मणि प्रवृत्ताः 'प्रगल्भिताः' धृष्टतां गताः सन्तः पापं कुर्वन्तो न लज्जन्त इति गाथार्थः ॥ २० ॥ ततः किं कर्त्तव्यमित्याह—

तम्हा दवि इक्ख पंडिए, पावातो विरए अभिनिव्वुडे ।
पणता वीरा महावीहिं, सिद्धिपहं णेयाउयं धुवं ॥ २१ ॥

व्याख्या—यतो मातापित्रादिमूर्च्छिताः पापकर्मसु प्रगल्भा भवन्ति, तस्मात्त्वं 'पण्डितः' सदसद्विवेकयुक्तः 'द्रव्यभूतो' रागद्वेषरहितो मुक्तिगमनयोग्यः सन् ईक्षस्व–तद्विपाकं पर्यालोचय, पापेभ्यो विरतः 'अभिनिर्वृतः' क्रोधादिपरित्यागाच्छीतीभूतः प्रणताः ( प्राप्ताः ) वीराः महावीथिं 'सिद्धिपथं' ज्ञानादिमोक्षमार्गं 'ध्रुवं' अव्यभिचारिणं अवगम्य स एव मार्गोऽनुष्ठेयो, नासदनुष्ठानप्रगल्भैर्भाव्यमिति गाथार्थः ॥ २१ ॥ पुनरप्युपदेशदानपूर्वकमुपसंहरन्नाह—

वेयालियमग्गमागओ, मणवयसा काएण संवुडो ।
चिच्चा वित्तं च णाइतो, आरंभं च सुसंवुडे चरे ॥ २२ ॥ त्ति बेमि ॥

व्याख्या—कर्मविदारणसमर्थं मार्गमागतो भूत्वा त्वं मनोवाकायसंवृतः पुनस्त्यक्त्वा वित्तं ज्ञातीयांश्च स्वजनान् सावद्यारम्भं च सुसंवृतः संयमानुष्ठानं चरेदिति गाथार्थः ॥ २२ ॥ ब्रवीमीति पूर्ववत् ।

[ इति ] वैतालीयस्य प्रथम, [ उद्देशकः ], प्रथमानन्तरं द्वितीयः प्रारभ्यते—

प्रथमे उद्देशके भगवता श्रीऋषभस्वामिना स्वपुत्राणां देशना प्रतिपादिता, इहापि सैवाभिधीयते, तत्रेयमादिमा गाथा—

तवसं व जहाइ से रयं, इति संखाय मुणी ण मज्जती ।
गोयन्नतरे य माहणे, अहऽसेयकरी अन्नेसि इंखिणी ॥ १ ॥

व्याख्या—यथोरगः स्वां ' त्वचं ' निर्मोकं परित्यागार्हत्वात्परित्यजति, न तत्र प्रतिबन्धं विधत्ते, तथा साधुरपि रज इव रजो-ऽष्टप्रकारं कर्म अकषायित्वेन परित्यजति, एवं कषायाभावात्कर्माभावः, इति ' सङ्ख्याय ' ज्ञात्वा मुनिर्न मज्जति-मदं न करोति, कथं ? गोत्रेण काश्यपादिना, अन्यतरग्रहणेन शेषाण्यपि मदस्थानानि त्यजेत् ' माहनः ' साधुः, न केवलं मदं त्यजति, अश्रेयस्करी-पापकारिणी [ ' इंखिणि ' त्ति ] निन्दा, साऽप्यन्येषां न कार्येति गाथार्थः ॥ १ ॥

अथ परनिन्दादोषमधिकृत्याह—

जो परिभवई परं जणं, संसारं परियत्तई चिरं ।
अदु इंखिणीया उ पाविया, इति संखाय मुणी ण मज्जति ॥ २ ॥

व्याख्या—यो ह्यविवेकी परं जनं परामवति–हीलयति स पुमान् तत्कृतेन कर्मणा चिरं संसारोदधौ 'परिवर्त्तते' परिभ्रमति 'अदु'त्ति अ[य]तः परपरिभवादवश्यं संसारे भ्रमणं, अतः 'इंखिणी' निन्दा 'पापिकैव' सदोषैव, अथवा 'इंखिणी' उच्चस्थानादधमस्थाने पातयति, इत्येवं 'सङ्ख्याय' ज्ञात्वा मुनिर्जात्यादिभिर्यथाऽहमुत्तमवंशजः श्रुतवाँस्तपस्वी, असौ तु मत्तो हीन एवेति न माद्यति–न मदं विधत्त इति गाथार्थः ॥ २ ॥ अथ यद्विधेयं तद्दर्शयितुमाह—

जेयावि अणायगे सिया, जेवि य पेसगपेसए सिया ।
जे मोणपदं उवट्ठिए, णो लज्जे समयं सया चरे ॥ ३ ॥

व्याख्या–अन्यस्तावत्तिष्ठतु, यः कोऽप्यनायकः–यस्यापरः प्रभुः कोऽपि नास्ति, एवंविधश्चक्रवर्त्त्यादिकः स्या–द्भवेत्, यश्चापि प्रेष्यस्यापि प्रेष्य–स्तस्यैव राज्ञः कर्मकरस्यापि कर्मकरः, सोऽपि चेन्मौनपदं–संयमस्तं समाश्रितः सोऽप्यलज्जमान उत्कर्षमकुर्वन् सर्वाः क्रियाः परस्परतो वन्दनप्रतिवन्दनादिका विधत्ते । इदमुक्तं भवति–चक्रवर्त्तिनाऽपि मौनीन्द्रपदमुपस्थितेन पूर्व[प्रव्रजित]मात्मप्रेष्यमपि वन्दमानेन लज्जा न विधेया [इतरेण चोत्कर्षं], एवं सामान्येनापि विनयवैयावृत्त्यादिकाः सर्वाः क्रियाः कार्या, एवं समभावं सदा भिक्षुश्चरेत्–संयमोद्युक्तो भवेदिति गाथार्थः ॥ ३ ॥

कः पुनर्व्यवस्थितेन लज्जामदौ न विधेयाविति दर्शयितुमाह—

सम अन्नयरंमि संजमे, संसुद्धे समणे परिव्वए ।
जे आवकहासमाहिए, दविए कालमकासि पंडिए ॥ ४ ॥

व्याख्या-यः शुद्धः श्रमण-स्तपस्वी सामायिकादिके अन्यतरे +संयमे प्रवर्त्तमानः समचित्तः लज्जामदपरित्यागेन प्रव्रज्यां यावज्जीवं प्रतिपालयति, कियत्कालं ? यावत्कालं कथा श्रूयन्ते, मरणं यावत्समाधिवान् 'द्रव्यो' रागद्वेषरहितो यदि कालं करोति [ तदा ] स पण्डित इति गाथार्थः ॥ ४ ॥ अथ किमालम्ब्यैतद्विधेयमित्युच्यते—

दूरं अणुपस्सिया मुणी, तीतं धम्ममणागयं तहा ।
पुट्ठे फरुसेहिं माहणे, अविहण्णु समयंसि रीयती ॥ ५ ॥

व्याख्या—तथा मुनिर्दूरवर्त्तित्वाद्दूरं-मोक्षं अनुदृश्य-यथा न धर्मं विना मोक्ष इति पर्यालोचयति, तथा अतीतं धर्मप्रभावं जीवानां उच्चावचगतिस्थानलक्षणं, तथा अनागतं च धर्मस्वभावं अनागतभाविनीं धर्मप्रभावाद्गतिं च पर्यालोच्य लज्जामदौ न विधत्ते । कथम्भूतो मुनिः ? स्पृष्टः परुषैः परीषहोपसर्गैः 'अविहण्णु' त्ति अपि मार्यमाणः स्कन्दकाचार्यशिष्यगणवत्समये संयमे रीयत इति गाथार्थः ॥ ५ ॥ पुनरप्युपदेशान्तरमाह—

+ "संयमस्थानानां षट्स्थानपतितत्वादन्यतरस्मिन् संयमस्थाने, सामायिकच्छेदोपस्थापनीयादौ वा स०" इति हर्षकुलगणिः ।

पण्णसमत्ते सया जए, समताधम्ममुदाहरे मुणी ।
सुहुमे उ सदा अलूसए, णो कुज्झे णो माणि माहणे ॥ ६ ॥

व्याख्या—'प्रज्ञासमाप्तः' पटुप्रज्ञः (अथवा) 'पण्हसमत्थे' प्रश्नविषये प्रत्युत्तरदानसमर्थो वा साधुः सदा जयेत्कषायादिकं (तथा) समतया अहिंसालक्षणं धर्ममुदाहरे-त्कथयेन्मुनिः 'सूक्ष्मे' संयमे सदा 'अलूषको' अविराधको हन्यमानो न क्रुध्येत् पूज्यमानो नापि 'मानी' गर्वितः स्यान्माहन इति गाथार्थः ॥ ६ ॥ अपिच—

बहुजणनमणम्मि संवुडे, सवट्ठे हि नरे अणिस्सिए ।
हरएव सया अणाविले, धम्मं पादुरकासि कासवं ॥ ७ ॥

व्याख्या—बहुजननमनो धर्मः, किमुच्यते ? बहुभिर्जनैरात्मीयात्मीयाभिप्रायेण यथाऽभ्युपगमप्रशंसया स्तूयते-प्रशस्यते, येन यादृशो धर्मः स्वीकृतोऽस्ति स तमेव धर्मं श्लाघते। सर्वोऽप्यात्मानं धार्मिकं मन्यते +, अत एव बहुजननमनो धर्मस्तस्मिन् 'संवृतः' समाहितः सन् 'नरः' पुमान् सर्वबाह्याभ्यन्तरपरिग्रहे अप्रतिबद्धः सन् धर्मं 'प्रादुरकार्षीत्' प्रकाशयेदित्यर्थः। वर्त्तमाने भूतनिर्देशश्छान्दसत्वात्। कथम्भूतः ? हृद इव स्वच्छाम्भसा भृतः 'अनाविलो' जलचरजीव-संक्षोभेणाप्यकलुषः, एवंविधः साधुः क्षान्त्यादिलक्षणं दशविधं 'काश्यपं' तीर्थकरसम्बन्धिनं धर्मं प्रकाशयेदिति गाथार्थः ॥ ७ ॥

+ अत्राभयकुमारकृतपरीक्षापुण्यपापोपरि धवलेतरपटप्रासादकथा ज्ञेया ।

अथ बहुजननमने धर्मे व्यवस्थितो यादृशं धर्मं प्रकाशयति तद्दर्शयितुमाह—

**बहवे पाणा पुढो सिया, पत्तेयं समयं समीहिया । जे मोणपदं उवट्ठिते, विरतिं तत्थ अकासि पंडिए ॥८॥**

व्याख्या—बहवोऽनन्ताः प्राणिनः पृथक् पृथिव्यादिभेदेन सूक्ष्मबादरपर्याप्तापर्याप्तभेदेन नरकगत्यादिभेदेन वा संसारमाश्रिताः, ततस्ते सर्वेऽपि प्राणिनः सुखाभिलाषिणो दुःखद्विष इति पर्यालोच्य यस्तेषु समतां आनयति—आत्मसाम्यं गणयति स साधुः, यः पुनर्मौनीन्द्रपदमुपस्थितस्तेषु माध्यस्थ्यमुपस्थितस्तद्वधे विरतिं करोति स पण्डित इति गाथार्थः ॥ ८ ॥ अपिच—

**धम्मस्स य पारए मुणी, आरंभस्स य अंतए ठिए । सोयंति य णं ममाइणो, णो लब्भंति णियं परिग्गहं ॥९॥**

व्याख्या—स पूर्वोक्तगुणयुक्तः साधुर्धर्मस्य श्रुतचारित्ररूपस्य पारगः सिद्धान्तपारगामी, स एव सिद्धान्ततत्त्ववेत्ता सम्यक् चारित्रानुष्ठायी वा, चारित्रमधिकृत्याह—'आरम्भस्य' सावद्यानुष्ठानरूपस्य 'अन्ते' प्रान्ते स्थित इति, आरम्भान्निवृत्त इति भावः, एवंविधो मुनिर्भवति । ये पुनर्नैवंविधा भवन्ति ते अकृतसुकृताः सन्तो मरणे दुःखे वा समुपस्थिते आत्मानं शोचन्ति, यदि वा इष्टमरणादावर्थनाशे वा 'ममाइणो' त्ति ममेदमहमस्य स्वामीत्येवमध्यवसायिनः शोचन्ति, ततश्च ते शोचमाना अपि गतं मृतं नष्टं परिग्रहं आत्मीयममीष्टं वा न लभन्ते—न प्राप्नुवन्ति, यदि वा धर्मस्य पारगं मुनिं आरम्भान्निवृत्तं स्वजना मातापित्रादयो ममत्वयुक्ताः स्नेहालवः शोचन्ति, परं न च तं साधुं निजमप्यात्मीयपरिग्रहबुद्ध्या गृहीतमपि लभन्ते, नात्मसात्कुर्वन्तीति गाथार्थः ॥ ९ ॥ तदेवाह—

**इह लोगदुहावहं विदू, परलोगे य दुहं दुहावहं। विद्धंसणधम्ममेव तं, इति विज्जं कोऽगारमावसे ?॥ १०॥**

व्याख्या—इहलोकेत्यादि, इहलोके परलोके हिरण्यस्वजनादिममतोत्पादितकर्मजं दुःखं भवति, तदुपादाने कर्मोपादानं, तथा हिरण्यादिपरिग्रहबुद्ध्या स्वीक्रियते, परं विध्वंसनधर्मं—न चिरावस्थायि, एवं जानन् कः सकर्णो मनुष्यः 'अगारवासं' गृहवासमावसेत् ? यतः—" दाराः परिभवकाराः, बन्धुजनो बन्धनं विषं विषयाः। कोऽयं जनस्य मोहो ?, ये रिपवस्तेषु सुहृदाशा ॥ १ ॥ " इति गाथार्थः ॥ १० ॥

पुनरप्युपदेशान्तरमाह—

**महता पलिगोवजाणिया, जावि य वंदणपूयणा इहं। सुहुमे सल्ले दुरुद्धरे, विउमंता पजहेज्ज संथवं ॥११॥**

व्याख्या—इह साधोः स्वजनाद्यभिष्वङ्गो भावतः 'पलिगोपो' कर्दमस्तत्समो जानीहि, यथा महान् पङ्कः प्राणिनां दुरुत्तरस्तथा स्वजनादिस्नेहः, इति ज्ञात्वा राजादिनिकायस्य[या] वन्दनापूजना साऽपि साधोः पलिमन्थकरी—स्वाध्यायादिविघ्नकरी मन्तव्या, ततश्च साधुना कर्मोपशमजं फलमित्येवं मत्वा राजादिवन्दनपूजनादौ उत्सेको न विधेयः। किमिति ? यतो गर्वात्मकमेतदुरुद्धरं सूक्ष्मं शल्यं वर्त्तते, इति ज्ञात्वा विद्वान् साधुस्तेषु 'संस्तवं' परिचयं प्रजह्यात्—त्यजेदिति गाथार्थः ॥११॥

अत्र नागार्जुनीया अप्येवं पठन्ति + —

+ नेयं निम्नोलिखिता गाथा व्याख्याता हर्षकुलगणिभिः।

**पलिमंथमहं वियाणिया, जावि य वंदणपूयणा इहं । सुहुमं सल्लं दुरुद्धरं, तं पि जिणे एएण पंडिए ॥११॥**

अस्या चायमर्थः–साधोः स्वाध्यायध्यानपरस्यैकान्तनिःस्पृहस्य योऽपि चायं परैर्वन्दनापूजनादिकः सत्कारः क्रियते, असावपि सद्गतेः सदनुष्ठानस्य वा महान् 'पलिमन्थो' विघ्नः, आस्तां तावत्स्वजनादिष्वभिष्वङ्गः–रागस्तमित्येवं परिज्ञाय सूक्ष्मं शल्यं दुरुद्धरं चातस्तमपि जये–दपनयेत्पण्डित 'एतेन' वक्ष्यमाणेनेति गाथार्थः ॥ ११ ॥

**एगे चरे ठाणमासणे, सयणे एगे समाहिए सिया । भिक्खू उवहाणवीरिए, वइगुत्ते अज्झत्तसंवुडे ॥१२॥**

व्याख्या—तथा भिक्षुरेक एव द्रव्यत एकल्लविहारी भावतो रागद्वेषरहितश्चरेत्, एवं स्थानासनशयनादिष्वप्येकाक्येव 'समाहितो' धर्मादिध्यानयुक्तः स्यात्, सर्वास्वप्यवस्थासु रागद्वेषविरहात्समाहित एव स्यात् । 'उपधाने' तपस्यनिगूहितबलवीर्यो 'वाग्गुप्तः' सुपर्यालोचिताभिधायी 'अध्यात्मं' मनस्तेन संवृत्तो भिक्षुर्भवेदिति गाथार्थः ॥ १२ ॥ किञ्च–

**णो पिहे णावपंगुणे, दारं सुन्नघरस्स संजए । पुट्ठे ण उदाहरे वयं, ण समुच्छे एगे संथरे तणं ॥१३॥**

व्याख्या–तथा भिक्षुः क्वापि शयनार्थी शून्यगृहस्थितो द्वारं कपाटादिना न स्थगयति 'नावपंगुणे'त्ति नोद्घाटयेत्, तत्रस्थोऽन्यत्र वा स्थितः केनचिद्धर्मादिकं मार्गादिकं वा पृष्टः सन् सावद्यां वाचं नोदाहरेत्–न ब्रूयात्, जिनकल्पिकादिर्निरवद्यामपि न ब्रूयात्, तथा न समुच्छिन्द्या–त्तृणानि कचवरं वा प्रमार्जनेन नापनयति, नापि स्वापार्थी कश्चिदाभिग्रहिकस्तृणादिकं संस्तरेत्–तृणैरपि संस्तारकं न कुर्यात् किं पुनः कम्बल्यादिना, अन्योऽपि साधुः शुषिरतृणं न संस्तरेदिति

गाथार्थः ॥ १३ ॥ तथा—

जत्थऽत्थमिए अणाउले, समविसमाइं मुणी हियासए ।
चरगा अदुवा वि भेरवा, अदुवा तत्थ सरीसिवा सिया ॥ १४ ॥

व्याख्या—तथा भिक्षुर्यत्रैव सूर्योऽस्तमुपैति तत्रैव तिष्ठति, तथा 'अनाकुलः' परीषहोपसर्गैरनाकुलो भवति, मुनिर्यथावस्थितसंसारस्वरूपज्ञः समविषमाणि शयनासनादीनि अनुकूलप्रतिकूलानि 'सम्यग्' रागद्वेषरहिततयाऽधिसहेत । तथा 'चरकाः' दंशमशकादयस्तथा 'भैरवा' भयानका अशिवास्तथा 'सरीसृपाः' सर्पादयो भवेयुस्तत्कृतांश्चोपसर्गान् परीषहांश्च सम्यगधिसहेतेति गाथार्थः ॥ १४ ॥

साम्प्रतं त्रिविधोपसर्गाधिसहनमधिकृत्याह—

तिरिया मणुया य दिव्वगा, उवसग्गा तिविहाऽहियासिया ।
लोमादियंपि न हरिसे, सुन्नागारगते महामुणी ॥ १५ ॥

व्याख्या-तिर्यङ्मनुष्यदेवकृतानुपसर्गानधिसहेत + रोमोद्गममपि न कुर्यात्, × दृष्टिमुखविकारादिपरिग्रहः, क स्थितः ? शून्यागारगतः-शून्यगृहव्यवस्थितः, उपलक्षणार्थत्वात्पितृवनादिस्थितो महामुनिर्जिनकल्पिकादिरिति गाथार्थः ॥१५॥ किञ्च—

+ 'लोमादिकमपि न हर्षेत् भयेन '। × 'आदिग्रहणाद् दृष्टि०' इति बृहद्वृत्तौ ।

नो अभिकंखेज्ज जीवियं, नो वि य पूयणपत्थए सिया ।
अज्झत्थमुविंति भेरवा, सुन्नागारगयस्स भिक्खुणो ॥ १६ ॥

व्याख्या—स भिक्षुस्तैर्भैरवैरुपसर्गैः पीड्यमानोऽपि जीवितं नाभिकांक्षेत, जीवितनिरपेक्षेणोपसर्गाः सोढव्याः, नैवोपसर्गसहनद्वारेण पूजाप्रार्थकः स्यात्–न पूजाद्यभिलाषी भवेत् । एवं जीवितपूजानिरपेक्षस्य ते उपसर्गाः अभ्यस्तभावं–समीपभावमुपगच्छेयुः, शून्यागारगतस्य साधोरेवं शीतोष्णादिजनिता उपसर्गाः सुसहा भवन्तीति गाथार्थः ॥ १६ ॥

पुनरप्युपदेशान्तरमाह—

उवणीयतरस्स ताइणो, भयमाणस्स विविक्कमासणं ।
सामाइयमाहु तस्स जं, जो अप्पाण भए ण दंसए ॥ १७ ॥

व्याख्या—येनात्मा ज्ञानादावुपनीततरः, एतावता ज्ञानादौ आत्मा स्थापितोऽस्ति येन, तस्य साधोस्त्रायिनः–परात्मत्राणनिरतस्य तारकस्य, तथा भजमानस्य 'विविक्तं' स्त्रीपशुपण्डकादिवर्जितमासनं–वसत्यादिसेवमानस्य, तस्यैवम्भूतस्य साधोः सामायिकं समभावरूपमाहुः सर्वज्ञाः। यश्चात्मानं भये परीपहोपसर्गजनिते न दर्शयेत्, तद्भीरुर्न भवेत्तस्य सामायिकमाहुरिति गाथार्थः ॥ १७ ॥ किञ्च—

उसिणोदगतत्तभोइणो, धम्मट्ठियस्स मुणिस्स हीमतो ।

संसग्गि असाहु राइहिं, असमाही उ तहागयस्स वि ॥ १८ ॥

व्याख्या—उष्णोदकतप्तभोजिनः साधो[स्त्रिदण्डोदुवृत्त]उष्णोदकपायिनः, अथवा उष्णमेव पिबति, न शीतलं कृत्वा पिबतीति भावः, धर्मे श्रुतचारित्ररूपे स्थितस्य मुनेः 'ह्रीमतो' लज्जावतः, एवंविधस्य साधो राजादिकसंसर्गोऽप्यसमाधये स्यात्-ध्यानादिविघ्नकृदेव जायत इति गाथार्थः ॥ १८ ॥ पुनरुपदेशान्तरमाह—

अहिगरणकडस्स भिक्खुणो, वयमाणस्स पसज्झ दारुणं।

अट्ठे परिहायती बहू, अहिगरणं न करेज्ज पंडिए ॥ १९ ॥

व्याख्या—'अधिकरणकरस्य' कलहकरस्य भिक्षोः 'प्रसह्य' प्रकटमेव 'दारुणां' कर्कशां वाचं ब्रुवतः 'अर्थो' मोक्षः संयमो वा, स बहुपरिहीयते, एतावता कषायवतः कलहं कुर्वतः कर्कशां वाचं ब्रुवतः साधोः संयमार्थो हीयते—संयमो ध्वंसमुपयाति। बहुना कालेन सञ्चितं विकृष्टेन तपसा यन्महत्पुण्यं तत्सर्वमधिकरणं कुर्वतः साधोः क्षयमुपैति। "×जं अज्जियं चरित्तं, देसूणाए य पुव्वकोडीए। तंपि कसाइयमित्तो, हारए नरो मुहुत्तेण ॥ १ ॥ जं अज्जियं

× यदर्जितं चारित्रं देशोनया च पूर्वकोट्या। तदपि कषायितमात्रो हारयेन्नरो मुहूर्तेन ॥ १ ॥ यदर्जितं शमीखल्लकैस्तपोनियमब्रह्मचर्यमयैः। मा हु तत्कलहायन्तस्त्याष्ट शाकपत्रैः ॥ १ ॥ शमीखल्लकैरिति "खल्लो निम्ने वस्त्रभेदे" इत्यनेकार्थवचनाद्-वस्त्रभेदकल्पैः शमीपत्रैरिति।

७

समीखल्लएहिं, तवनियमबंभमईएहिं । माहु तयं कलहंता, छड्डेअह सागपत्तेहिं ॥ २ ॥" इति ज्ञात्वा मनागप्यधिकरणं न कुर्यात्पण्डितः-साधुरिति गाथार्थः ॥ १९ ॥

सीतोदगपडिदुगंछिणो, अपडिण्णस्स लवावसप्पिणो ।
सामाइयमाहु तस्स जं, जो गिहिमत्तेऽसणं न भुंजती ॥ २० ॥

व्याख्या—साधोः सचित्तोदकजुगुप्सकस्य-सचित्तोदकपरिहारिणः, तथा 'अप्रतिज्ञस्य' निदानं सर्वथाऽप्यकुर्वतः, तथा 'लवावसर्प्पिणः' लवं-कर्म, तस्मादवसर्पिणः, कर्मबन्धोपादानकारणभूतादनुष्ठानान्निवर्तितस्य साधोः सामायिकमाहुः सर्वज्ञाः । यो 'गृहस्थभाजने' कांस्यपात्रे न भुङ्क्ते तस्य सामायिकं कथयन्ति जिना इति गाथार्थः ॥ २० ॥ किञ्च—

न य संखयमाहु जीवियं, तह वि य बालजणो पगब्भती ।
बाले पावेहिं मिज्जती, इति संखाय मुणी न मज्जती ॥ २१ ॥

व्याख्या—तथा जीवित-मायुः कालपर्यायेण त्रुटितं मत्पुनः 'न य संखय'मिति 'संस्कर्तुं' तन्तुवत्सन्धातुं न शक्यते, तथापि 'बालो' मूर्खो जनः 'प्रगल्भते' पापं कृत्वा न लज्जते, स च बालः 'पापैः' पापकर्मभिरशोभनकर्त्तव्यैर्मीयते-भ्रीयते, इत्येवं 'संखाय' ज्ञात्वा मुनिर्न माद्यति, असदनुष्ठानं कृत्वा मया शोभनं कृतमिति न प्रगल्भते-न धृष्टो भवतीति गाथार्थः ॥ २१ ॥ उपदेशान्तरमाह—

छंदेण पले इमा पया, बहुमाया मोहेण पाउडा। वियडेण पलेति माहणे, सीउण्हं वयसाऽहियासए ॥२२॥

व्याख्या—'छन्दो'ऽभिप्रायस्तेन स्वस्वाभिप्रायेण [ इमाः प्रजाः-अयं ] लोकः 'पलेति' तासु तासु नरकादिगतिषु पर्यटति, एके दर्शनिनः स्वकदाग्रहिणः अजादिकवधमपि धर्मकारणं ब्रुवते, तथा धनधान्यादिपरिग्रहे पृथिव्याद्यारम्भेऽपि धर्ममेव जानते, एवं लोको 'बहुमायः' कपटप्रधानः ( माया ) मुग्धजनरञ्जनाय कपटात्मिकाः क्रियाः कुर्वन्ति, परं श्रीवीतरागप्ररूपितं मार्गं सम्यग् न जानन्ति, अज्ञानावृतत्वात्, तेन सत्येतरव्यक्तिं न लभन्ते, इति ज्ञात्वा मुनिर्माहनः 'विकटेन' प्रकटेन अमायेन कर्मणा मोक्षे संयमे वा प्रकर्षेण लीयते-प्रलीयते, शोभनभावयुक्तो भवतीति भावः, शीतोष्णादिपरीषहा 'वयसा'त्रिकरणशुद्ध्या सम्यगधिसहेदिति गाथार्थः ॥ २२ ॥ अपिच—

कुजए अपराजिए जहा, अक्खेहिं कुसलेहिं दीवयं। कडमेव गहाय णो कलिं, नो तेयं नो चेव दावरं ॥२३॥

व्याख्या—'कुजयो' द्यूतकारः अपराजितो 'दीव्यन्' कुशलत्वादन्यैर्न जीयते, अक्षैः-कपर्दकैः रममाणः 'कडमेव' चतुष्कमेव गृह्णाति, तल्लब्धजयत्वात्तेनैव चतुष्केण दीव्यति, न 'कलिं' एककं, नापि 'त्रेतं' त्रिकं, नापि 'दावरं' द्विकं गृह्णाति, चतुष्केणैव लब्धजयत्वादिति गाथार्थः ॥ २३ ॥ अथ दार्ष्टान्तिकमाह—

एवं लोगम्मि ताइणा, बुइए जे धम्मे अणुत्तरे। तं गिण्ह हियंति उत्तमं, कडमेव सेसऽवहाय पंडिए॥२४॥

व्याख्या—यथा द्यूतकारः प्राप्तजयत्वात्सर्वोत्तमं दीव्यंश्चतुष्कमेव गृह्णाति, एवमस्मिंल्लोके 'तायिना' सर्वज्ञेनोक्तो

योऽयं धर्मः क्षान्त्यादिलक्षणोऽनुत्तरः-प्रधानस्तं स्वीकुरु, यथा द्यूतकारः शेषमेककाद्यपहाय ' कडं ' [ कृतयुगं-चतुष्कं ] गृह्णाति, एवं ' पण्डितः ' साधुरपि गृहस्थ-कुप्रावचनिक-पार्श्वस्थादिभावमपहाय सम्पूर्णं महान्तं सर्वोत्तमं [ धर्मं ] गृह्णीयादिति गाथार्थः ॥ २४ ॥ पुनरप्युपदेशान्तरमाह—

उत्तर मणुयाण आहिया, गामधम्मा इति मे अणुस्सुयं ।
जंसि विरता समुट्ठिया, कासवस्स अणुधम्मचारिणो ॥ २५ ॥

व्याख्या—' उत्तराः ' प्रधानाः-दुर्जया ' ग्रामधर्माः ' शब्दादिपञ्चविषयाः सर्वज्ञैराख्याताः मनुष्याणां, इत्येतन्मया श्रुतं, पूर्वं श्रीऋषभस्वामिना स्वपुत्रेभ्यः प्रतिपादितं, ततः पाश्चात्यगणधराः सुधर्मस्वामिप्रभृतयः स्वशिष्येभ्यः प्रतिपादयन्ति, येभ्यो ग्रामधर्मेभ्यो विरताः ' समुत्थिताः ' सम्यक्संयमेन ते ' काश्यपस्य ' ऋषभस्वामिनो वर्द्धमानस्वामिनो वा यो धर्मस्तदनुचारिण-स्तीर्थंकरप्रणीतधर्मानुष्ठायिनो भवन्तीति गाथार्थः ॥ २५ ॥ किञ्च—

जे एयं चरंति आहियं, नायएण महया महेसिणा ।
ते उट्ठिय ते समुट्ठिया, अन्नोऽन्नं सारिंति धम्मतो ॥ २६ ॥

व्याख्या—ये मनुष्याः ग्रामधर्मेभ्यो विरतिं कुर्वन्ति, आख्यातं महता महर्षिणा-ज्ञातपुत्रेण, ये धर्मं चरन्ति त एव संयमोत्थानेन कुतीर्थिकपरिहारेणोत्थितास्त एव सम्यङ्मार्गदेशनापरित्यागेनोत्थिताः, नान्ये, त एव यथोक्तधर्मानुष्ठायिनो,

अन्योऽन्यं-परस्परं 'धर्मतः' धर्ममाश्रित्य धर्मतो वा भ्रश्यन्तं सारयन्ति, पुनरपि सद्धर्मे प्रवर्त्तयन्तीति गाथार्थः ॥ २६ ॥ किञ्च—

**मा पेह पुरा पणामए, अभिकंखे उवधिं धुणित्तए। जे दूमणएहिं णो णता, ते जाणंति समाहिमाहितं ॥**

व्याख्या—' पुरा प्रणामकान् ' पूर्वं भुक्तान् शब्दादिविषयान् ' मा प्रेक्षस्व ' मा स्मर, तेषां स्मरणमपि महतेऽनर्थाय, अनागतांश्च नाकांक्षेत्, अभिकाँक्षेत् ' उपधिं ' मायां अष्टप्रकारं वा कर्म, तद्धूननाय-तदपनयनायाभिकाँक्षे-दभिलषेत्, तदेवानुष्ठानं कुर्याद्येन माया अष्टप्रकारं च कर्म अपयाति । तथा ' जे दूमणएहिं 'ति दुष्टमनःकारि[ण उपतापकारि]णो वा शब्दादयो विषयास्तेषु ये महासत्त्वा न नताः, कोऽर्थः ? ये पञ्चविधविषयेषु नासक्तास्ते सन्मार्गानुष्ठायिनः आत्मनि आहितं-आत्मनि व्यवस्थितं ' समाधिं ' रागद्वेषपरित्यागरूपं धर्मध्यानं जानन्ति, नान्य इति गाथार्थः ॥ २७ ॥

**णो काहीए होज्ज संजए, पासणीए ण य संपसारए। नच्चा धम्मं अणुत्तरं, कयकिरिए ण यावि मामए ॥२८**

व्याख्या-संयतो गोचरचर्यायां भ्रमन् काथिको न भवति-न कथाः कथयति, तथा विरुद्धां-पैशून्यापादिनीं स्त्र्यादि-विकथां वा न कुर्यात्, राजादिना प्रश्नादि पृष्टः सन् प्रश्नादिकथ[कः-प्राश्नि]को न स्यात्, न च सम्प्रसारको-देव-वृष्टिपण्यसमर्घमहर्घादि अर्थकाण्डादिसूचककथाविस्तारको भवेत् । किं कृत्वा ? ज्ञात्वा अनुत्तरं धर्मं, सम्यग्ज्ञातस्य धर्म-स्यैतावदेव फलं, यद्विकथापरिहारेण सम्यक्क्रियावान् स्यात् । ' कयकिरिए 'त्ति कृतक्रियश्च + ममेदमहमस्य स्वामीत्येवं

---

+ " कृता-स्वभ्यस्ता ' क्रिया ' सयमानुष्ठानरूपा येन स कृतक्रियस्तथाभूतश्च न चापि मामको " इति बृहद्वृत्तौ

परिग्रहाग्रही न भवेदिति गाथार्थः ॥ २८ ॥ किञ्च—

छन्नं च पसंस णो करे, न य उक्कोसपगासमाहणे । तेसिं सुविवेगमाहिते, पणता जेहिं सुजोसितं धुयं ॥२९

व्याख्या—साधुः 'छन्नं' मायां, प्रशस्यो + लोभस्तं न कुर्यात्, तथा 'उत्कर्षको' मानः 'प्रकाशः' क्रोधस्तं च 'माहनः' साधुर्न कुर्यात्, यैर्महासत्त्वैः कषायाणां 'विवेकः' परित्याग आहितः-कषायपरित्यागः कृतस्ते धर्मं प्रति प्रणताः । तथा त एव धर्मं प्रति प्रणताः यैर्महात्मभिः सुष्ठु 'जुष्टं' सेवितं 'धूतं' × संयमानुष्ठानं, यदिवा यैः सदनुष्ठायिभिः 'सुजोसियं' ति सुष्ठु क्षिप्तं धूननार्हत्वाद्धूतं कर्मेति गाथार्थः ॥ २९ ॥ अपिच—

अणिहे सहिते सुसंवुडे, धम्मट्ठी उवहाणवीरिए । विहरेज्ज समाहिइंदिए, आतहितं सुदुहेण लब्भती ॥३०

व्याख्या—'अणिहे' अस्नेहः-स्नेहरहितः साधुः सहितो ज्ञानादिभिः, तथा 'सुसंवुत' इन्द्रियनोइन्द्रियैर्विस्रोतसिकारहितः । 'धम्मट्ठि' धर्मः श्रुतचारित्राख्यस्तदर्थी । उपधानं-तपस्तत्र वीर्यवान्, स एवम्भूतो विहरेत्समाहितेन्द्रियः-संयतेन्द्रियः । कथमेव विहरेत् ? यतः आत्महितं संसारे पर्यटता प्राणिना (सुष्ठु)दुःखेन प्राप्यते, अकृतधर्मानुष्ठानेन जन्तुना आत्महितं (अति)दुःखेन लभ्यत इति गाथार्थः ॥ ३० ॥

आत्महितं च प्राणिभिर्न कदाचिदवाप्तपूर्वमित्येतद्दर्शयितुमाह—

---

+ " प्रशस्यते-सर्वैराद्रियते इति " । × " धूयते-क्षिप्यते कर्म येन तद्धूतं " इति हर्षकुलगणिः ।

**णहि णूण पुरा अणुस्सुतं, अदुवा तं तह णो समुट्ठियं। मुणिणा सामाइयाहितं, नाएणं जगसव्वदंसिणा ॥**

व्याख्या—यदेतन्मुनिना [ जगतः सर्वभावदर्शिना ] ज्ञातपुत्रीयेण सामायिकाद्यात्महितं समाख्यातं तन्नूनं-निश्चितं जन्तुभिर्न च-नैव ( पुरा-प्राग्भवादौ ) अनुश्रुतं, तदात्महितं जीवैः(पुरा) श्रुतमपि नास्ति, कदाचिच्छ्रुतमस्ति तथापि यथाऽवस्थितं 'नानुष्ठितं' न पालितं, अत एव प्राणिनामात्महितं सुदुर्लभमिति गाथार्थः ॥ २१ ॥

पुनरुपदेशान्तरमाश्रित्याह—

**एवं मत्ता महंतरं, धम्ममिणं सहिता बहूजणा ।**

**गुरुणो छंदाणुवत्तगा, विरता तिन्ना महोघमाहितं ॥ २२ ॥ तिबेमि ॥**

व्याख्या-एवं आत्महितं सुदुर्लभं 'मत्वा' ज्ञात्वा च महदन्तरं धर्मविशेषं कर्मणो वा विवरं प्राप्य ज्ञानादिसहिता बहवो जनाः लघुकर्माणः सदनुष्ठानं समाश्रिताः सन्तो गुरोश्छन्दानुवर्त्तिन-स्तीर्थकरोक्तमार्गानुष्ठायिनो विरताः पापकर्मभ्यः सन्तस्तीर्णाः संसारसागरं महौघ-मपार,एवमाख्यातं मया भवतामपरैश्चार्हद्भिरन्येषां, इति शब्दः परिसमाप्त्यर्थे, ब्रवीमीति गाथार्थः॥२२॥

इति वैतालीयाध्ययनस्य द्वितीयोद्देशकटीका ।

उक्तो द्वितीयोद्देशकः, साम्प्रतं तृतीयः समारभ्यते । इहानन्तरोद्देशके विरता इत्युक्तं, तेषां विरतानां च कदाचित्परीषहाः समुदीर्येरन्, ततश्च परीषहाः सोढव्या, इत्यनेन सम्बन्धेनायातस्यास्योद्देशकस्यादि सूत्रम्—

संवुडकम्मस्स भिक्खुणो, जं दुक्खं पुट्ठं अवोहिए। तं संजमतोऽवचिज्जई, मरणं हेच्च वयंति पंडिया ॥१

व्याख्या-'संवृतानि' रुद्धानि कर्माणि मिथ्यात्वाविरतिप्रमादकषाययोगरूपाणि वा यस्य भिक्षोः, यद्दुःख-मसद्वेद्यं, तदुपादानरूपं वाऽष्टप्रकारं कर्म 'स्पृष्टं' बद्धस्पृष्टनिकाचितं, तत्कर्म 'अबोधिना' अज्ञानेनोपचितं सत् संयमतः सप्तदशभेदतोऽपचीयते-प्रतिक्षणं क्षयमुपैति । एतदुक्तं भवति-यथा तडागोदरसंस्थितं वारि निरुद्धापरप्रवेशमादित्यकरसम्पर्कात्प्रत्यहमपचीयते, एवं भिक्षोरपि संवृतात्मनः तपसा प्राग्भवार्जितं कर्म क्षीयते, ततश्च पण्डिताः 'हित्वा' त्यक्त्वा 'मरणं' जातिजरामरणशोकरूपं त्यक्त्वा मोक्षं व्रजन्ति, इति गाथार्थः ॥ १ ॥ येऽपि च तेनैव भवेन मोक्षमाप्नुवन्ति तानधिकृत्याह—

जे विन्नवणाहि अजोसिया, संतिण्णेहिं समं वियाहिया। तम्हा उड्ढंति पासहा, अदक्खु कामाइ रोगवं॥

व्याख्या—कामार्थिभिः पुरुषैर्विज्ञाप्यन्ते-प्रार्थ्यन्ते ताः 'विज्ञापनाः' स्त्रिय उच्यन्ते, ये महासत्त्वाः पुरुषाः विज्ञापनाभिः 'अजोसिया' असेविताः, एतावता ये न स्त्रीणां वशे पतितास्ते सन्तीर्णै-मुक्तैः समं 'व्याख्याताः' कथिताः । को भावः ? ते अतीर्णा अपि सन्तस्तीर्णा एवोच्यन्ते ये योषिद्भ्यो विरताः, यतः-"पुप्फफलाणं च रसं, सुराए मंसस्स महिलियाणं च। जाणंता जे विरया, ते दुक्करकारए वंदे ॥ १ ॥" 'तम्हा उड्ढंति पासह'त्ति 'तस्माद्' योषित्परित्यागादूर्ध्वं यद्भवति तत्पश्यत यूयं, ये च कामान् रोगवद्-व्याधिकल्पान् 'अद्राक्षु-र्दृष्टवन्तस्ते सन्तीर्णसमा व्याख्याता-

१ पुष्पफलानां च रसं सुराया मांसस्य महिलिकाना च । जानन्तो ये विरतास्तान् दुष्करकारकान्वन्दे ॥ १ ॥

स्ते अतीर्णा अपि संसारोदन्वतस्तटोपान्तवर्त्तिन एवेति गाथार्थः ॥ २ ॥ पुनरप्युपदेशान्तरमाह—

**अग्गं वणिएहिं आहियं, धारंती राईणिया इहं। एवं परमा महव्वया, अक्खाया उ सराइभोइणो ॥ ३ ॥**

व्याख्या—वणिग्भिर्देशान्तरादाहित–मानीतं 'अग्ग्यं' प्रधानं रत्नाभरणादिकं ढौकितं राजानस्तत्कल्पा वा प्रधान-वणिज एव (इह जगति) धारयन्ति, कोऽर्थः? [यथा] वणिजो देशान्तरात्सुबहुमूल्यं रत्नाभरणादि आनयन्ति, परं तेषां प्रधानरत्नानां राजान एव भाजनं-राजान एव धारयन्ति, ईश्वरा वा बिभ्रति, तथा आचार्यैरानीतानां पञ्चमहाव्रतानां रात्रि-भोजन[विरमण]षष्ठानां साधव एव भाजनं, नान्ये इति गाथार्थः ॥ ३ ॥ किञ्च—

**जे इह सातागुगा नरा, अज्झोववन्ना कामेहिं मुच्छिया।**
**किवणेण समं पगब्भिया, नवि जाणंति समाहिमाहितं ॥ ४ ॥**

व्याख्या—ये इहलोके मनुष्याः 'सातानुगाः' सुखशीलाः गारवत्रयेऽध्युपपन्नाः-गृद्धास्तथा कामेषु शब्दादिषु मूर्च्छिताः 'कृपणा' दीनाः वराकाः इन्द्रियैः पराजिताः 'तत्समा' स्तद्वत्कामासेवने 'प्रगल्भिताः' धृष्टतां गताः, किमनेन स्तोकेन प्रमादेन संयमविराधना भविष्यतीत्येवं प्रमादवन्तः कर्त्तव्येषु समस्तमपि संयमं पटवन्मलिनीकुर्वन्ति, ईदृशाश्च ते वीतरागोक्तं समाधिं धर्मध्यानादिकं न जानन्तीति गाथार्थः ॥ ४ ॥ पुनरप्युपदेशान्तरमाह—

**वाहेण जहा व विच्छए, अबले होइ गवं पचोइए। से अंतसो अप्पथामए, नाइवहइ अबले विसीयती ॥५**

व्याख्या—'व्याधेन' लुब्धकेन यथा 'गव'त्ति मृगादिः पशुर्विविधमनेकप्रकारेण कूटपाशादिना [ क्षतः— ] परवशीकृतः श्रमं वा ग्राहितः 'प्रतोदितोऽपि' प्रेरितोऽप्यबलो भवति, जातश्रमत्वाद्गन्तुमसमर्थो भवति, यदि वा वाहयतीति वाहः-शाकटिकस्तेन यथावद्वहन् गौ-र्वृषभः प्रतोदादिना 'क्षतः' प्रेरितोऽपि अबलो विषमपथादौ गन्तुमसमर्थो भवति, स चान्तशो-मरणान्तमपि यावदल्पसामर्थ्यो नातीव वोढुं शक्तो भवति, एवम्भूतश्च अबलो भारं वोढुमसमर्थस्तत्रैव पङ्कादौ विषीदतीति गाथार्थः ॥ ५ ॥ दार्ष्टान्तिकमाह—

**एवं कामेसणं विऊ, अज्ज सुए पयहेज्ज संथवं। कामी कामे ण कामए, लद्धे वा वि अलद्ध कण्हुई ॥ ६ ॥**

व्याख्या—तथा अनन्तरोक्तया नीत्या कामभोगप्रार्थनासक्तः पुमान् अवसीदति, परं कामभोगाँस्त्यक्तुं नालं भवति, ईदृशोऽपि यदि परमद्य श्वो वा कामभोगसम्बन्धं संस्तवं प्रजह्यात्, न चैहिकामुष्मिकापायदर्शितया कामी भूत्वोपनतानपि कामान् जम्बूस्वामिवद्वैरस्वामिवद्वा न कामये-न्नाभिलषेत् क्षुल्लककुमारवद्वा लब्धानपि कामान्महासत्त्वतया अलब्धसमान्मन्यमानो निःस्पृहो भवेदिति गाथार्थः ॥ ६ ॥ किमिति कामपरित्यागो विधेय ? इत्याशङ्क्याह—

**मा पच्छ असाधुता भवे, अच्चेही अणुसास अप्पगं । अहियं च असाहु सोयती, से थणती परिदेवती बहुं॥७**

व्याख्या—मा पश्चा-न्मरणकाले भवान्तरे वा कामानुषङ्गादसाधुता कुगतिगमनरूपा 'भवेत्' प्राप्नुयात्, इति विचिन्त्य विषयेभ्य आत्मानं 'अत्येहि'त्याजय, तथाऽऽत्मानं शिक्षय, यथा-रे जीव ! असाधु[-रशुभ]कर्मकारी दुर्गतौ

पतितोऽधिकं शोचति, तथा च परमाधार्मिकैश्चात्यर्थं कदर्थ्यते, तिर्यग्गतावपि क्षुत्तृष्णाशीतोष्णादिदुःखैः पीड्यमानोऽत्यन्तं
'स्तनति' करुणं क्रन्दति-सशब्दं निःश्वसिति 'परिदेवते' विलपत्याक्रन्दति सुबह्विति-"हा मातर्म्रियत इति, त्राता
नैवास्ति साम्प्रतं कश्चित्। किं वा शरणं मे स्या-दिह दुष्कृतचरितस्य पापस्य ॥ १ ॥" इत्येवमादीनि
दुःखानि पापकारिणः प्राप्नुवन्ति, तेन विषयाभिष्वङ्गो न विधेय इत्यात्मानुशासनं कुर्विति गाथार्थः ॥ ७ ॥

इह जीवियमेव पासहा, तरुण एव वासस[याउ]तस्स तुट्टती ।

इत्तरवासे य बुज्झह, गिद्धनरा कामेसु मुच्छिया ॥ ८ ॥

व्याख्या—अस्मिन्नसारे संसारे धनधान्यादयोऽन्ये पदार्थाः दूरे तिष्ठन्तु, एकं जीवानामायुरप्यशाश्वतं, यतो वर्षशत-
प्रमाणमप्यायुस्तरुणत्वे एव त्रुट्यति, तदाऽऽयुर्वर्षशतप्रमाणमपि सागरोपमापेक्षया मेषोन्मेषप्रमाणं वर्त्तते, स्तोककालावस्थानप्रायं
वा समस्ति इति ज्ञात्वा रे जीव ! बुध्यस्व, मा मुहः । ईदृशेऽप्यायुषि अशाश्वते एके अविवेकिनः 'गृद्धाः' कामभोगेषु
मूर्च्छिता एव तिष्ठन्ति, ततश्च नरकादिषु कदर्थनामाप्नुवन्तीति गाथार्थः ॥ ८ ॥ अपिच—

जे इह आरंभनिस्सिया, आतदंडा एगंतलूसगा । गंता ते पावलोगयं, चिररायं आसुरियं दिसं ॥ ९ ॥

व्याख्या—'इह' मनुष्यलोके ये केचन महामोहाकुलिताः पुरुषा अविवेकिनो हिंसा(दि)सावद्यानुष्ठाने आरम्भे 'निश्रिताः'
आसक्ताः सन्ति ते नरा आत्मनो दण्डकाः, ते चैकान्तेनैव जन्तूनां 'लूषका' हिंसकाः सदाचारस्य वा ध्वंसका, एवम्भूताश्च

'गन्तारो' यास्यन्ति, क ? पापकर्मकारिणां यो लोको नरकादिस्तत्र चिररात्रमवस्थास्यन्ति, यद्यपि बालतपश्चरणादिना तथाविधदेवत्वावाप्तिस्तथाप्यासुरीं दिशं यान्ति, अपरप्रेष्याः किल्बिषिका देवाधमा भवन्तीति गाथार्थः ॥ ९ ॥ किञ्च—

**ण य संखयमाहु जीवियं, तहवि य बालजणो पगब्भती। पच्चुप्पन्नेण कारियं, के दट्ठुं परलोगमागते ? ॥**

व्याख्या—'न च' नैव 'संस्कर्तुं' सन्धातुं शक्यते त्रुटितमायु-र्जीवितव्यं, एवमाहुः—सर्वज्ञाः। एवमायुषि सन्धातुमशक्ये 'बालो' मूर्खो जनः असदनुष्ठाने प्रगल्भते, असदाचारे प्रवर्त्तमानो न लज्जते, स च बालो निर्विवेकतया पापकर्म कुर्वन् केनापि वारितः सन् धृष्टतया अलीकपाण्डित्याभिमानितया इदमुत्तरमाह—प्रत्युत्पन्नेन—वर्त्तमानकालभाविना सुखेन मे प्रयोजनं, एवं च सति इहलोक एव विद्यते, न परलोकः, कः परलोकं दृष्ट्वा इहायातः ? परलोकं दृष्ट्वा कश्चिदायातो भवति तदा तदुक्त्या ज्ञायते अस्त्येव परलोकः, तस्मान्न विद्यते परलोकः ॥ १० ॥ एवं नास्तिकेनोक्ते सति प्रत्युत्तरमाह—

**अदक्खुव ! दक्खुआहितं, (तं)सद्दहसु अदक्खुदंसणा ! ।**
**हंदि हु सुनिरुद्धदंसणे, मोहणिज्जेण कडेण कम्मुणा ॥ ११ ॥**

व्याख्या—अपश्यो—ऽन्धः, कार्याकार्यविवेकचक्षुर्विकलत्वादन्धस्तस्यामन्त्रणं—हे अपश्यवत्—अन्धसदृश ! 'पश्येन' सर्वज्ञेन 'आहितं' कथितं आगमं 'श्रद्धस्व' प्रमाणीकुरु। 'अदक्खुदंसणा' अपश्यको—ऽसर्वज्ञस्तस्य दर्शनं अभ्युपगतमाश्रितं येन तस्यामन्त्रणं अदक्खुदंसणा ! त्वं श्रीवीतरागभाषितं श्रद्धस्व, इहलोकसुखमेव प्रार्थ्यते 'नास्ति परलोक' इति मा वद,

यदि प्रत्युत्पन्नं विना अतीतानागतं न मन्यसे तर्हि पितृपितामहादयोऽपि नाभूवन्, पुत्रपौत्रादिसन्ततेरपि व्यवच्छेदः, अतीतानागतयोरनाश्रयणात् इहलोकाश्रयणात् प्रत्युत्पन्नमेव मन्यमानस्त्वं सर्वव्यवहारविलोपेन हन्त !! हतोऽसि, असर्वज्ञाभ्युपगतदर्शनाश्रयणेन सर्वव्यवहारबाह्योऽसि, अतः असर्वज्ञानुयायिन्! आत्मीयं कदाग्रहं परित्यज्य सर्वज्ञोक्ते मार्गे श्रद्धानं कुरु। किमिति स पुमान् सर्वज्ञोक्ते मार्गे श्रद्धानं न करोति? तत्राह–'हंदि हु सुनिरुद्धदंसणे' स प्राणी 'हंदी'ति खेदे, + मोहनीयेन कर्मणा मिथ्यादर्शनेन ज्ञानावरणीयादिकेन कर्मणा वा 'सुनिरुद्धदर्शनः' स्थगितविवेकचक्षुः, तेन सर्वज्ञोक्तं मार्गं न श्रद्धत्ते, अतस्तन्मार्गश्रद्धानं प्रति प्रोत्साह्यत इति गाथार्थः ॥ ११ ॥ पुनरप्युपदेशान्तरमाह—

**दुक्खी मोहे पुणो पुणो, निव्विंदेज्ज सिलोगपूयणं। एवं सहितेऽहिपासते, आयतुलं पाणेहिं संजए ॥१२॥**

व्याख्या—'दुःखं' असातवेदनीयं, तदस्यास्तीति दुःखी प्राणी पुनःपुनर्मोहं याति-सदसद्विवेकविकलो भवति, कोऽर्थः? असातोदयाद्दुःखमनुभवन्नार्त्तः सन् मूढस्तत्तत्करोति येन पुनःपुनर्दुःखी संसारसागरमनन्तं कालं पर्यटति। तदेवम्भूतं मोहं परित्यज्य 'निर्विद्येत' जुगुप्सयेत्परिहरेत् आत्मश्लाघां स्तुतिरूपां तथा पूजनं वस्त्रादिलाभरूपं परिहरेत्। एवं परिवर्त्तमानः × सहितो–ज्ञानादियुक्तो वा 'संयतः' प्रव्रजितो सुखार्थिभिरात्मतुला–मात्मतुल्यतां दुःखाप्रियत्वं सुखप्रियत्वरूपामधिकं पश्येत्–आत्मतुल्यान् सर्वानपि प्राणिनः पालयेदिति गाथार्थः ॥ १२ ॥ किञ्च—

+ "हु शब्दो वाक्यालङ्कारे, मोहनीयेन स्वकृतेन कर्मणा"। × "सह हितेन वर्त्तत इति सहितो" इति हर्ष०।

गारंपि य आवसे नरे, अणुपुव्विं पाणेहिं संजए । समता सव्वत्थ सुव्वते, देवाणं गच्छे स लोगयं ॥ १३ ॥

व्याख्या—गृहवासेऽपि वसन्नरः अनुक्रमेण धर्मं श्रुत्वा व्रतादि प्रतिपद्य सर्वजीवेषु दयालुः सन् सर्वत्र समतापरिणामे वर्त्तमानो गृहधर्मं पालयन्नपि–गृहस्थोऽपि चेद्देवलोकं व्रजेत्तर्हि यतीनां किमुच्यते ? ॥ १३ ॥

सोच्चा भगवाणुसासणं, सच्चे तत्थ करिज्जुवक्कमं । सव्वत्थऽवणीयमच्छरे, उंछं भिक्खु विसुद्धमाहरे ॥१४॥

व्याख्या—स साधुः 'भगवतः' श्रीसर्वज्ञस्य '(अनु)शासनं' आज्ञां आगमं वा श्रुत्वा, तत्र आगमे संयमे वा, कथम्भूते ? [सद्भ्यो हिते–] सत्ये उपक्रमं कुर्यात् सर्वत्र मत्सरं अपनीय क्षेत्रवस्त्रोपधिशरीरनिष्पिपासः 'उंछं' भैक्ष्यं 'शुद्धं' द्विचत्वारिंशद्दोषरहितमाहारं गृह्णीयादभ्यवहरेदिति गाथार्थः ॥ १४ ॥ किञ्च—

सव्वं नच्चा अहिट्ठए, धम्मट्ठी उवहाणवीरिए । गुत्ते जुत्ते सदा जए, आयपरे परमायतट्ठिते ॥१५॥

व्याख्या—सर्वं हेयोपादेयं ज्ञात्वा सर्वं संवररूपं अधितिष्ठे–दाश्रयेत् 'धर्मार्थी' धर्मप्रयोजनवान् 'उपधानं' तपस्तत्र वीर्यवान्–अनिगूहितबलवीर्यः, तथा मनोवाक्कायगुप्तो, युक्तो ज्ञानादिभिः सदा यतेत आत्मनि परस्मिंश्च । किं विशिष्टः सन् ? अत आह–'परम' उत्कृष्ट 'आयतो' दीर्घः सर्वकालभवनान्मोक्षस्तदर्थिक–स्तदभिलाषी, पूर्वोक्तविशेषणविशिष्टो भवेदिति गाथार्थः ॥ १५ ॥ पुनरुपदेशमाह—

वित्तं पसवो य नाईओ, तं बाले सरणंति मन्नइ । एते मम तेसुवी अहं, नो ताणं सरणं नु विज्जइ ॥१६॥

व्याख्या—‘ वित्तं ’ धनधान्यहिरण्यादि ‘ पशवो ’ गोमहिषीतुरगादयस्तथा स्वजना-मातृपितृपुत्रकलत्रादयस्तदेतत्सर्वं- ‘ बालो ’ मूर्खः शरणं मन्यते, एते मम सर्वे परिभोगे उपयोक्ष्यन्ते, अहं त्वेतेषामुपयोगे समेष्यामि, न पुनरेवं जानीते- यदर्थं धनादि मृग्यते तदेव वपुरशाश्वतं, क्व वित्ताद्युपयोगे समेष्यति? “ रिद्धी सहावतरला, रोगजराभंगुरं हयं सरीरं। दोण्हं पि गमणसीलाणं, किच्चिरं होज्ज संबंधो? ॥ १ ॥” तथा “ मातापितृसहस्राणि, पुत्रदारशतानि च। प्रतिजन्मनि वर्त्तन्ते, कस्य माता पिताऽपि वा ॥ १ ॥” ‘ नो ’ नैव वित्तादिकं संसारे कथमपि त्राणं भवति नरकादौ पतितस्य रोगादिना वा पीडितस्य क्वचित्त्राणं ( शरणं वा ) विद्यत इति गाथार्थः ॥ १६ ॥ इत्येतदेवाह—

अब्भागमितंमि वा दुहे, अहवा उक्कमिते भवंतिए।
एगस्स गती य आगती, विदुमंता सरणं न मन्नई ॥ १७ ॥

व्याख्या—पूर्वकृतदुष्कर्मोदये दुःखमायाति, तद्दुःखमेक एवानुभवति, तथा मरणेऽप्यागते एक एव म्रियते, एक एव जन्ममरणादिदुःखमनुभवति, गतिरेकस्य आगतिरप्येकस्यैव, संसारे गमनागमनं कुर्वतो नापरः कोऽपि सहायो भवति, दुःखार्त्तस्य वित्ताद्यपि न शरणं, एवं ज्ञात्वा [ विद्वान् ] न कमपि [ तावद् ] विनैकं धर्मं शरणतया मन्यत इति गाथार्थः ॥ १७ ॥ किञ्च—

१ ऋद्धिः स्वभावतरला रोगजराभङ्गुरं हतकं शरीरं। द्वयोरपि गमनशीलयोः कियच्चिरं भवेत्सम्बन्धः? ॥ १ ॥

सव्वे सयकम्मकप्पिया, अवियत्तेण दुहेण पाणिणो ।
हिंडंति भयाउला सढा, जाइजरामरणेहिऽभिद्दुता ॥ १८ ॥

व्याख्या—सर्वेऽपि संसारिणः प्राणिनः स्वकृतेन कर्मणा 'कल्पिताः' सूक्ष्मबादरपर्याप्तापर्याप्तभेदेन व्यवस्थापितास्तेनैव कर्मणा अव्यक्तेन दुःखेन दुःखिताः प्राणिनः 'हिण्डन्ति' पर्यटन्ति भयाकुलाः शठकर्मकारित्वाच्छठाः भ्रमन्ति नवनवासु योनिषु जन्मजरामरणादिदुःखैरभिद्रुता इति गाथार्थः ॥ १८ ॥ किञ्च—

इणमेव खणं वियाणिया, णो सुलभं बोहिं च आहितं ।
एवं सहितेऽहियासए, आह जिणे इणमेव सेसगा ॥ १९ ॥

व्याख्या—इदमेवावसरं ज्ञात्वा यदुचितं तद्विधेयं, तथा[हि—] 'बोधिं च' सम्यग्दर्शनावाप्तिलक्षणां नो सुलभां, इत्येवमवगम्य तदवाप्तौ तदनुरूपमेव कुर्यात्, नो सुलभां बोधिं इत्येवमाख्यातमवगम्य सहितो ज्ञानादिभिः परीषहान् उदीर्णान् अधिसहेत, एतच्चाह 'जिनो' भगवान्नाभेयोऽष्टापदे सुतानुद्दिश्य, तथाऽन्येऽपि शेषकाः जिना अभिहितवन्त इत्येतदाह ॥ १९ ॥ तथा च—

अभविंसु पुरावि भिक्खवो !, आएसा वि भवंति सुव्वता ।
एयाइं गुणाइं आहु ते, कासवस्स अणुधम्मचारिणो ॥ २० ॥

व्याख्या—सर्वज्ञाः स्वशिष्यानेवमामन्त्रयन्ति–भो भिक्षवः ! ये पुरा जिना अभूवन् आगमिष्याश्च ये भविष्यन्ति ते 'सुव्रताः' शोभनव्रता एतानन्तरोदितान् गुणान् आहु–रभिहितवन्तः । अत्र जिनानां न कश्चिन्मतभेदः, अतः सर्वेऽपि जिनाः सदृशमेव भाषन्ते, न जिनानां वचो व्यभिचरति, ते च 'काश्यपस्य' ऋषभस्य वर्द्धमानस्वामिनो वा सर्वेऽप्यनुचीर्णधर्मचारिणः, इत्यनेन च सम्यग्दर्शनज्ञानचारित्रात्मक एव मोक्षमार्ग इति गाथार्थः ॥ २० ॥

तिविहेण वि पाण मा हणे, आयहिए अनियाणसंवुडे ।
एवं सिद्धा अणंतसो, संपइ जे अ अणागयावरे ॥ २१ ॥

व्याख्या—त्रिविधेन योगेन प्राणिनो मा हन्यात् आत्महितः 'अनिदानो' निदानरहितः, तथा 'संवृतः' त्रिगुप्त इत्यर्थः । एवम्भूतश्चावश्यं सिद्धिमवाप्नोतीत्येतद्दर्शयति–एवमनन्तरोक्तानुष्ठानेन अनन्ताः सिद्धाः वर्त्तमानकाले सिद्ध्यन्ति अनागते च काले सेत्स्यन्ति, नापरः सिद्धिमार्गोऽस्तीति भावः, एवं श्रीसुधर्मस्वामी जम्बूस्वामिप्रभृतिशिष्येभ्यः प्रतिपादयतीति गाथार्थः ॥ २१ ॥

एवं से उदाहु अणुत्तरनाणी, अणुत्तरदंसी अणुत्तरनाणदंसणधरे ।
अरहा नायपुत्ते भगवं, वेसालिए वियाहिए त्ति बेमि ॥ २२ ॥

व्याख्या—एवं स ऋषभस्वामी स्वपुत्रानुद्दिश्योदाहृतवान्–अनुत्तरज्ञानी [ अनुत्तरदर्शी ] अनुत्तरज्ञानदर्शनधरः अर्हन्

ज्ञातपुत्रो वर्द्धमानस्वामी विशालयां नगर्यां अथवा विशालकुलोद्भवो ऋषभस्वामी एवमुदाहृतवानिति गाथार्थः ॥ २२ ॥

इति श्रीखरतरगणमण्डनसाधुरङ्गगणिवरनिर्मितायां श्रीसूत्रकृताङ्गदीपिकायां द्वितीये वैतालीयाध्ययने तृतीयोद्देशकः समाप्तः । तत्समाप्तौ च वैतालीयाध्ययनं समाप्तमिति ।

उक्तं द्वितीयमध्ययनं, साम्प्रतं तृतीयमारभ्यते, संयमं पालयतां साधूनां परीषहा उत्पद्यन्ते, ते च सम्यक्सोढव्याः, अयमधिकारोऽस्मिन्नध्ययने, तेनेदं परीषहाध्ययनं, तत्रेयमादिगाथा—

**सूरं मन्नंति अप्पाणं, जाव जेयं न पस्सति । जुज्झंतं दढधम्माणं, सिसुपालोव महारहं ॥ १ ॥**

व्याख्या—यथा कश्चिल्लघुप्रकृतिकः पुमान् आत्मानं शूरं मन्यते—न मत्सदृशोऽपरः कश्चित्सुभटोऽस्तीति आत्मश्लाघापरो निस्तोयाम्बुद इव वाग्भिर्विस्फूर्जन् गर्जति तावद्यावत्स्वतोऽप्यधिकतरं निष्कोशीकृतासिं पुरो जेतारं न पश्यति, तस्मिन् दृष्टे निर्मदो भवति । अत्रार्थे दृष्टान्तमाह—यथा शिशुपाल आत्मश्लाघाप्रधानं गर्जितवान्, पश्चाद्युद्ध्यमानं दृढधर्माणं 'महारथं' नारायणं दृष्ट्वा प्राग्गर्जा[रव]प्रधानोऽपि क्षोभं गतः, + एवमुत्तरत्र दार्ष्टान्तिकेन योजयिष्यते, इति गाथार्थः ॥ १ ॥

साम्प्रतं सार्वजनीनं दृष्टान्तमाह—

+ निर्मदो जात इति भावः ।

**पयाया सूरा रणसीसे, संगामम्मि उवट्ठिते। मायापुत्तं न याणाइ, जेएण परिविच्छत्ते ॥ २ ॥**

व्याख्या—प्रकर्षेण विकटपादपातं 'रणशिरसि' सङ्गाममूर्द्धनि नाशीरत्वे× योजिताः 'शूराः' सुभटंमन्याः। कथम्भूते रणे? सर्वत्राकुलीभूतत्वान्माता स्वकटीतो भ्रश्यन्तं पुत्रं न जानाति, इत्येवममातापुत्रीये सङ्ग्रामे परानीकसुभटेन जेत्रा तीक्ष्णैर्नाराचप्रभृतिभिः शस्त्रैर्विविधं 'क्षतो' हतश्छिन्नो वा यथा कश्चिदल्पसत्त्वो भङ्गमुपयातीति गाथार्थः ॥ २ ॥

अथ दार्ष्टान्तिकमाह—

**एवं सेहे वि अपुट्ठे, भिक्खायरिया अकोविए। सूरं मन्नति अप्पाणं, जाव लूहं न सेवए ॥ ३ ॥**

व्याख्या—यथा यत्र माता स्वकटीतो भ्रश्यन्तं स्तनन्धयं न वेत्ति, एवंविधे विषमे रणशिरसि कश्चिच्छूरंमन्यः परानीकनिक्षिप्तसायकघोरणीभिः विह्वलीभूतः सन् भङ्गमुपयाति—दीनत्वं भजते, एवं शिष्यकोऽभिनवप्रव्रजितः परीषहैरस्पृष्टः—अनुत्पन्नपरीषहपीडः प्रव्रज्यायां किं दुष्करं? इत्येवं गर्जन् भिक्षाचर्यायामनिपुणः अन्यस्मिन्नपि साध्वाचारे अप्रवीणः सन् आत्मानं शिशुपालवत् शूरं मन्यते यावज्जेतारमिव 'रूक्षं' निरास्वादं वालुकाकवलवत् संयमं न भजते, गृहीते तु संयमे परीषहैरभिद्रुता अल्पसत्त्वाः प्राणिनो भङ्गमुपयान्ति, संयमाद्भ्रश्यन्ते, कण्डरीकवदिति गाथार्थः ॥ ३ ॥

संयमरूक्षत्वप्रतिपादनायाह—

---

× सेनामुखे।

जया हेमंतमासम्मि, सीतं फुसइ सवायगं । तत्थ मंदा विसीयंति, रज्जहीणा व खत्तिया ॥ ४ ॥

व्याख्या—यदा हेमन्तमासे पौषादौ शीतं सहिमकणवातं 'स्पृशति' लगति, तस्मिन् असह्ये शीते लगति सति एके 'मन्दा' गुरुकर्माणो विषीदन्ति, राज्यभ्रष्टाः क्षत्रिया इव–राजान इवेति गाथार्थः ॥ ४ ॥ अथोष्णपरीषहमाह—

पुट्ठो गिम्हाहितावेणं, विमणे सुपिवासिए । तत्थ मंदा विसीयंति, मच्छा अप्पोदए जहा ॥ ५ ॥

व्याख्या—'ग्रीष्मे' उष्णर्त्तौ 'अभितापेन' आतपेन व्याप्तो विमनस्कस्तथा 'तृष्णया' उदन्यया पराभूतो 'मन्दो'ऽल्पसत्त्वः संयमाद्भङ्गमुपयाति, यथा मत्स्यः अल्पोदके विषीदति–यथा मत्स्यः पानीयविरहे जीवितं त्यजति, तथा साधुरपि कोऽप्यल्पसत्त्वः संयमं त्यक्त्वा दूरे भवतीति गाथार्थः ॥ ५ ॥ अथ याच्ञापरीषहमाह—

सदा दत्तेसणादुक्खं, जायणा दुप्पणोल्लिया । कम्मत्ता दुब्भगा चेव, इच्चाहंसु पुढोजणा ॥ ६ ॥

व्याख्या—यतीनां हि 'सदा' सर्वकालं दन्तशोधनाद्यपि परेण दत्तमेषणीयमुपभोक्तुं कल्पते, ततश्च क्षुधादिवेदनार्त्तानां यावज्जीवं परदत्तैषणादुःखं भवति, किं ? "लाघवं याच्ञा" इति वचनात्तत्र याच्ञापरीषहे कातराः विषीदन्ति । अथ पश्चार्द्धेन आक्रोशपरीषहं दर्शयति–'प्राकृतपुरुषा' अनार्या एवं भाषन्ते–य एते यतयस्ते जल्लाविलदेहा लुञ्चितशिरसः क्षुधाग्रस्ता अदत्तदानाः पूर्वकृतदुष्कर्मणां फलमनुभवन्ति, यदि वा 'आर्त्ताः' सर्वकर्मसु 'अशक्ताः' सर्वथा अकिञ्चित्कराः, अत एव जठरपूरणा[य] असमर्थाः सन्तो यतयो जाताः, यतः–" स्वाध्यायध्यानकृच्छ्राणि, भिक्षाभ्रमण एव च ।

प्रायः पौरुषहीनानां, जीवनोपायकौशलम् ॥ १ ॥ " इति वचनात् । तथा पुनरेते 'दुर्भगाः' पुत्रदारादिपरित्यक्ताः निर्गतिकाः सन्तः प्रव्रज्यां प्रतिपन्ना इति गाथार्थः ॥ ६ ॥

एते सद्दे अचायंता, गामेसु नगरेसु वा । तत्थ मंदा विसीयंति, संगामम्मिव भीरुणो ॥ ७ ॥

व्याख्या—एतान् आक्रोशरूपान् शब्दान् सोढुमशक्नुवन्तो ग्रामेषु नगरेषु अरण्यादिषु वा व्यवस्थिताः, एके यतयो 'मन्दा' अविवेकिनस्तुच्छप्रकृतयो 'विषीदन्ति' विमनस्का जायन्ते, संयमाद्भ्रश्यन्ति, यथा भीरवो भटाः सङ्ग्रामे शस्त्रझलत्कारं सुभटकोलाहलाकर्णनेन समाकुलाः सन्तो भज्यन्ते, पौरुषं परित्यज्यायशश्च पुरस्कृत्य निर्ह्रीकाः सङ्ग्रामात्पराङ्मुखा वलन्ति, एकमेके-केचन, न सर्वे, आक्रोशशब्दाकर्णनादल्पसत्त्वा विषीदन्तीति गाथार्थः ॥ ७ ॥

अप्पेगे खुधितं भिक्खुं, सुणी दंसति लूसए । तत्थ मंदा विसीयंति, तेउपुट्ठा व पाणिणो ॥ ८ ॥

व्याख्या—कश्चिच्छ्वादिर्लूपकः-प्रकृत्यैव क्रूरो भक्षकः 'क्षुधितं' बुभुक्षितं भिक्षामटन्तं साधुं दशति-अङ्गावयवान् विलुम्पति त्रोटयति । 'तत्र' तस्मिन् श्वादिभक्षणपरीषहे उदीर्णे सति मन्दा 'विषीदन्ति' दैन्यं भजन्ते, यथा 'तेजसा' अग्निना 'स्पृष्टाः' दह्यमानाः प्राणिनो 'विषीदन्ति' गात्रं सङ्कोचयन्ति एवं साधुरपि क्रूरसत्त्वैरभिद्रुतः संयमाद्भ्रंशमुपयाति, यथाऽग्निना दह्यमानाः जन्तवो जीवितं त्यजन्तीति गाथार्थः ॥ ८ ॥

दुस्सहा ग्रामकण्टकाः पुनरपि तानधिकृत्याह—

अप्पेगे पडिभासंति, पडिपंथियमागता । पडियारगता एते, जे एते एव जीविणो ॥ ९ ॥

व्याख्या—केचन ग्रामीणा अनार्याः पामराः साधुषु द्वेषभावमुपगताः शत्रुप्राया एवं निष्ठुरं भाषन्ते, यथा-एते वराकाः प्राग्जन्मोपार्जितमशुभकर्मफलमनुभवन्ति, ये इमे परगृहभिक्षयोपजीवन्ति, मध्याह्ने प्रस्वेदमलाविला रजोऽवगुण्डिताः परगृहेषु भिक्षायै अटन्ति, य एवंजीविन इति, लुञ्चितशिरसः अदत्तदानाः सर्वथा भोगवञ्चिता दुःखं जीवन्तीति गाथार्थः ॥९॥ किञ्च—

अप्पेगे वइजुंजुंति, नगिणा पिंडोलगाहमा । मुंडा कंडूविणट्ठंगा, उज्जल्ला असमाहिता ॥ १० ॥

व्याख्या—अपि 'एके' केचन अनार्या ईदृशं वाचं 'प्रयुञ्जन्ति' भाषन्ते, एते जिनकल्पिकाः नग्नास्तथा 'पिण्डोलग'त्ति पिण्डप्रार्थका अधमा मलाविला 'मुण्डा' मुण्डितशिरसः कण्डूविनष्टाङ्गाः-विकृतशरीराः कुष्ठिनः सनत्कुमारवद्विनष्टदेहाः 'उज्जल्लाः' शुष्कप्रस्वेदवन्तः बीभत्साः दृष्टा वा जन्तूनामसमाधिमुत्पादयन्तीति गाथार्थः ॥१०॥

अथैतद्भाषकाणां विपाकं दर्शयति—

एवं विप्पडिवन्नेगे, अप्पणा उ अजाणया । तमातो ते तमं जंति, मंदा मोहेण पाउडा ॥ ११ ॥

व्याख्या—एवमेके अपुण्यकर्माणः अज्ञानिनो 'विप्रतिपन्नाः' साधुद्वेषिणः स्वयमात्मना अज्ञानिनः अन्येषां विवेकिनां च शिक्षादानोद्यतानां वचनं अकुर्वन्तस्तमसोऽज्ञानरूपात्तदुत्कृष्टं तमो यान्ति, अथवा अधस्तादप्यधस्तनीं गतिं गच्छन्ति, किमिति ? यतस्ते मन्दा 'मोहेन' अज्ञानेन 'प्रावृता' आच्छादिता मिथ्यादर्शनेन वा स्थगिताः पिङ्गप्रायाः साधु-

विद्वेषिणः ईदृशा एव भवन्तीति गाथार्थः ॥ ११ ॥ अथ दंशमशकपरीषहमधिकृत्याह—

**पुट्ठो य दंसमसएहिं, तणफासमचाइया । न मे दिट्ठे परे लोए, जइ परं मरणं सिया ॥ १२ ॥**

व्याख्या—सिन्धुताम्रलिप्तकोङ्कणादिषु देशेषु प्रायो दंशमशकाः स्युः, अथ साधुः कदाचित्तत्र देशे गतः सन् दंशमशकादिभिः 'स्पृष्टो' भक्षितः, तथा वस्त्रप्रावरणादिरहितस्तृणेषु शयानस्तत्परीषहं सोढुमशक्तस्सन् कदाचित्तदार्त्तिपतित एवं चिन्तयेत्-ईदृश्यो दुष्कराः क्रियाः परलोकाय विधीयमानाः सन्ति, इदमनुष्ठानं परलोकसाधनाय साधुभिर्विधीयते, स तु परलोकः केनापि न दृष्टः, न कोऽपि परलोकं दृष्ट्वा आयातः, मयाऽपि न दृष्टः, ( यदि ) परमनेन क्लेशेन परलोको न भविष्यति, परं दंशमशकैः पीडितस्य मे मरणं निश्चयेन भविष्यति, अनेन परीषहोपसर्गेण मरणं विना नान्यत् किञ्चित्फलमस्तीति गाथार्थः ॥ १२ ॥ अपि च—

**संतत्ता केसलोएणं, बंभचेरपराइया । तत्थ मंदा विसीयंति, मच्छाविट्ठा व केयणे ॥ १३ ॥**

व्याख्याः—केचन कातराः केशलोचेन 'सन्तप्ताः' पीडिताः सरुधिरकेशोत्पाटनेन महती शिरसि व्यथा जायते, तया च व्यथया व्यथिताः सन्तो 'दूयन्ते' भज्यन्ते संयमाद्भग्नचित्ता जायन्ते, तथा ब्रह्मचर्येण-बस्तिनिरोधेन पराजिताः सन्तः केशोत्पाटनेन अतिदुर्जयकन्दर्पदर्पेण वा पराजिताः सन्तो 'मन्दा' जडाः विषीदन्ति-संयमे शैथिल्यं प्रतिपद्यन्ते, यथा 'केतने' मत्स्यबन्धने प्रविष्टाः सन्तो मत्स्याः निर्गतिका जीवितं त्यजन्ति, एवं ते वराकाः कामकदर्थिताः केशोत्पाटन-

पीडया च पीडिताः संयमं त्यजन्तीति गाथार्थः ॥ १३ ॥ किञ्च—

आयदंडसमायारा, मिच्छासंठियभावणा । हरिसप्पओसमावन्ना, केइ लूसंतिऽणारिया ॥ १४ ॥

व्याख्या—तथा केचन अनार्याः आत्मदण्डसमाचाराः, येनानुष्ठानेन मुधा आत्मा खण्ड्यते-धर्माद्भ्रश्यते तेनानुष्ठानेन संयुक्ताः सन्तो मिथ्यासंस्थितभावनाः-मिथ्यात्वोपहतदृष्टयः, तथा 'हर्षप्रद्वेषमापन्ना' रागद्वेषोपहताः, ते एवम्भूताः सदाचारं साधुं क्रीडया प्रद्वेषेण वा क्रूराः कदर्थयन्ति दण्डादिभिर्वाग्भिर्वेति गाथार्थः ॥ १४ ॥ एतदेव दर्शयति—

अप्पेगे पलियंतंसि, चारो चोरोत्ति सुव्वयं । बंधंति भिक्खुयं बाला, कसायवयणेहि य ॥ १५ ॥

व्याख्या—अप्येके अनार्याः पूर्वगाथोक्तगुणयुक्ताः मिथ्यादृशः रागद्वेषवन्तः अनार्यदेशे विचरन्तं साधुं चरोऽयं चौरोऽयमिति बुद्ध्या 'सुव्रतं' सदाचारमपि कदर्थयन्ति, चौरोऽयमिति कृत्वा बध्नन्ति 'बालाः' अज्ञानिनो विवेकविकलाः 'कषायवचनैः' कटुकवचनैर्निर्भर्त्सयन्तीति गाथार्थः ॥ १५ ॥ तथा पुनः—

तत्थ दंडेण संवीते, मुट्ठिणा अदु फलेण वा । नातीणं सरती बाले, इत्थी वा कुद्धगामिणी ॥ १६ ॥

व्याख्या—तथा अनार्यदेशेषु विहरन् साधुः अनार्यैर्दण्डेन वा मुष्टिना वा 'संवीतः' प्रहतोऽथवा फलेन (मातुलिङ्गादिना) खड्गादिना वा कदर्थितो भापितो वा अपरिणतो बालः ज्ञातीनां स्वजनानां वा स्मरति, तद्यथा-यदि कश्चिन्मदीयः स्वजनो भवति तदा नाहमेवं कदर्थनामवाप्नुयामिति, दृष्टान्तमाह-यथा स्त्री 'क्रुद्धा सती' गृहमानुषेभ्यो रुष्टा सती

रोषेण गृहान्निर्गता सती निराश्रया मांसपेशीव सर्वस्पृहणीया सर्वतोऽभिगमनीया चौरादिभिरभिद्रुता सती सञ्जातपश्चात्तापा स्वगृहमानुपाणां स्मरति, एवं साधुरपि अनार्यैः कदर्थितः ज्ञातीनां स्मरतीति गाथार्थः ॥ १६ ॥ उपसंहरन्नाह—

एए भो ! कसिणा फासा, फरुसा दुरहियासया ।

हत्थी वा सरसंवीते, कीवा अवसा गया गिहं तिबेमि ॥ १७ ॥

व्याख्या—भो इति शिष्यामन्त्रणं, एते परीषहाः पूर्वोक्ता अनार्यकृताः 'कृत्स्नाः' सम्पूर्णाः 'परुषाः' कर्कशाः अल्पसत्त्वैर्दुःखेनाधिसह्यन्ते, ततश्च असहमानाः लज्जां त्यक्त्वा अश्लाघामङ्गीकृत्य पुनर्गृहवासमाश्रयन्ते, रणशिरसि शरजालैः संवीताः हस्तिन इव भङ्गमुपयान्ति 'क्लीबाः' असमर्था—अवशाः कर्मायत्ताः पुनर्गृहं गच्छन्तीति, ब्रवीमिति पूर्ववत् ॥ १७ ॥

इत्युपसर्गपरिज्ञायाः प्रथमोद्देशकः समाप्तः ।

अथ द्वितीयः समारभ्यते, तथाहि—उपसर्गा द्विधा, अनुकूलाः प्रतिकूलाश्च, तत्र प्रथमोद्देशके प्रतिकूलाः प्रतिपादिताः, अथ द्वितीये अनुकूलाः प्रतिपाद्यन्ते, तत्रेयमादिगाथा—

आहिमे सुहुमा संगा, भिक्खूणं जे दुरुत्तरा । जत्थ एगे विसीयंति, न चयंति जवित्तए ॥ १ ॥

व्याख्या—अथ (?) अथानन्तरं एते सूक्ष्माः सङ्गाः अनुकूलाः, यथा प्रतिकूलाः शरीरन्यथाकारिणस्ते बादरा अभिधीयन्ते, तथा इमे आन्तराश्चेतोविकारकारिणः 'सङ्गाः' मातापितादिसम्बन्धाः 'भिक्षूणां' साधूनामपि 'दुरुत्तरा' दुर्लङ्घ्या, प्रायो

मायरं पियरं पोस, एवं लोगो भविस्सइ । एवं खु लोइयं तात !, जे उ पालेंति मायरं ॥ ४ ॥

व्याख्या—मातरं पितरं ' पुषाण ' पोषय, एवं च कृते तवोभयलोकसिद्धिः, तात ! इदमेव लौकिकं–अयमेव लोका-
चीर्णः पन्थाः, यद्वद्वयोर्मातापित्रोः पालनं, यतः—" सुंच्चिय जयम्मि जाओ, सुच्चिय कुलविमलनहयलमियंको ।
जो जणणिजणयबंधव–गुरूण आसाओ पूरेइ ॥ १ ॥ " इति वचनात् । [इति] गाथार्थः ॥ ४ ॥ अपि च—

उत्तरा महुरुल्लावा, पुत्ता ते तात ! खुड्डया । भारिया ते णवा तात !, मा सा अन्नं जणं गमे ॥ ५ ॥

व्याख्या—' उत्तरा ' उत्तरोत्तरजाता ' मधुरोल्लापाः ' मधुरभाषिणः, तात ! तव पुत्राः मन्मनालापाः क्षुल्लकास्ते
लघवः, तथा भार्या ते ' नवीना ' नवयौवना, नवोढा च माऽसौ त्वया परित्यक्ताऽन्यं जनं गच्छे–दुन्मार्गचारिणी मा
भूयादयं च महाँल्लोकापवाद इति गाथार्थः ॥ ५ ॥ अपि च—

एहि ताय ! घरं जामो, मा तं कम्मसहा वयं । बितियं पि ताय ! पासामो, जामु ताय ! सयं गिहं ॥६॥

व्याख्या—जानीमो वयं, यथा–त्वं गृहकार्यभीरुस्तथाप्येह्यागच्छ गृहं यामो, मा त्वं किमपि कर्म कृथा, अपि तु
समुत्पन्ने कार्ये वयं सहाया भविष्यामः, एकवारं त्वं गृहकार्येभ्यो भग्नः परमधुना द्वितीय[मपि]वारं द्रक्ष्यामो यदस्माभिः
सहायैस्तव न किञ्चिद्विनक्ष्यति, तदेहि गृहं याम, एतदस्मद्वचनं कुर्विति गाथार्थः ॥ ६ ॥ किञ्च—

१ स एव जगति जातः स एव कुलविमलनभस्तलमृगाङ्कः । यो जननीजनकबान्धव–गुरूणां आशाः पूरयति ॥ १ ॥

गंतुं ताय ! पुणो गच्छे, ण तेणासमणो सिया । अकामगं परिकम्म, को ते वारेउ मरिहई ? ॥७॥

व्याख्या—हे तात ! गृहं गत्वा पुनरागच्छेः संयमाय, एकवारं गृहगमनेन अश्रमणो न भविष्यसि 'अकामकं' गृहव्यापारेच्छारहितं स्वमनोरुच्या अनुष्ठानं कुर्वन्तं कस्ते वारयिता ? यदिवा अकामगं—वृद्धावस्थायां मदनेच्छारहितं पुनः संयमाय गच्छन्तं कस्त्वां 'निवारयितुं' निषेधयितुमर्हति ? को वारयिष्यतीति गाथार्थः ॥ ७ ॥ अन्यच्च

जं किं चि अणगं तात !, तं पि सव्वं समीकतं । हिरण्णं ववहाराई, तं पि दाहामु ते वयं ॥ ८ ॥

व्याख्या—'तात' पुत्र ! यत्किमपि त्वदीयं ['अणगं'ति] 'ऋणं' देयद्रव्यमासीत्तत्सर्वमस्माभिः सम्यग्विभज्य समीकृतं, यदि वा 'समीकृतं' सुदेयत्वेन व्यवस्थापितं, पुनर्यत्किञ्चिद् हिरण्यं व्यवहारादावुपयुज्यते तत्सर्वं वयं दास्यामो, निर्द्धनोऽहमिति मा कृथा भयमिति गाथार्थः ॥ ८ ॥ उपसंहारार्थमाह—

इच्चेव णं सुसेहंति, कालुणियं समुट्ठिया । विबद्धो नायसंगेहिं, ततोऽगारं पहावई ॥ ९ ॥

व्याख्या—इत्येवं पूर्वोक्तया नीत्या मातापित्रादयः करुणामुत्पादयन्तः स्वयं वा दैन्यमुपस्थितास्तं प्रव्रजितं—'सुसेहंति'त्ति सुष्ठु शिक्षयन्ति—व्युद्ग्राहयन्ति, स चापरिणतधर्माऽल्पसत्त्वो ज्ञातिसङ्गैर्विबद्धो—मातृपितृपुत्रकलत्रादिमोहितः प्रव्रज्यां परित्यज्य 'अगारं'गृहं प्रति धावतीति गाथार्थः ॥ ९ ॥ किञ्चान्यत्—

जहा रुक्खं वणे जायं, मालुया पडिबंधई । एवं णं पडिबंधंति, णातयो असमाहिणा ॥ १० ॥

व्याख्या-[ यथा ] अटव्यां जातं वृक्षं 'मालुया'वल्ली 'प्रतिबध्नाति' वेष्टयति, तथा 'ज्ञातयः' स्वजनास्तं यतिं असमाधिना प्रतिबध्नन्ति, ते ज्ञातयस्तथा तथा कुर्वन्ति यथा यथा साधोरसमाधिरुत्पद्यत + इति गाथार्थः ॥ १० ॥

**विबद्धो नातिसंगेहिं, हत्थी वा वि नवग्गहे । पिट्ठतो परिसप्पंति, सूयगोव्व अदूरए ॥ ११ ॥**

व्याख्या-'विबद्धो'बद्धः-परवशीकृतः [ज्ञातिसङ्गै-र्मातापित्रादिसम्बन्धैः] 'ज्ञातयः' सगीनाः सर्वमनुकूलमनुतिष्ठन्तस्तथा धृतिमुत्पादयन्ति यथा हस्ती नवीनधृतो धृत्युत्पादनार्थमिक्षुशकलैरुपचर्यते, एवमसावपि साधुः सर्वानुकूलैरुपायैरुपचर्यते । दृष्टान्तान्तरमाह-यथा नवप्रसूता गौर्निजवत्सकस्य स्नेहबद्धा 'अदूरगा' समीपवर्तिनी सती पृष्ठत एव 'परिसर्पति' गच्छति, तथा ते स्वजनास्तमुत्प्रव्रजितं पुनर्जातमिव [ मन्यमानाः ] पृष्ठतोऽनुसर्पन्तीति गाथार्थः ॥ ११ ॥ सङ्गदोपदर्शनायाह—

**एते संगा मणूसाणं, पाताला व अतारिमा । कीवा जत्थ य किस्संति, नायसंगेहि मुच्छिया ॥१२॥**

व्याख्या—एते पूर्वोक्ताः 'सङ्गाः' स्वजनसम्बन्धाः कर्मबन्धहेतवः, मनुष्याणां 'पाताला इव' समुद्रा इव 'अतारिमा' दुस्तराः, अल्पसत्त्वैर्दुःखेनातिलङ्घ्यन्ते, येषु सङ्गेषु 'क्लीबाः' कातराः क्लेशमनुभवन्ति-संसारे दुःखभागिनो भवन्ति, ज्ञातिसङ्गैर्मूर्च्छिताः-गृद्धाः सन्तो न चिन्तयन्त्यात्मानं संसारान्तर्वर्त्तिनमिति गाथार्थः ॥ १२ ॥ अपि च—

**तं च भिक्खू परिन्नाय, सव्वे संगा महासवा । जीवियं नावकंखिज्जा, सोच्चा धम्ममणुत्तरं ॥ १३ ॥**

+ " यदुक्तं-अमित्तो मित्तवेसेण, कंठे घेत्तूण रोयइ । मा मित्ता! सोग्गइं जाह, दोवि गच्छाम्ु दुग्गइं ॥१॥ " इति हर्ष०

व्याख्या—'तं च' ज्ञातिसङ्गं संसारैकहेतुं भिक्षुर्ज्ञात्वा ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया परिहरेत्, किमिति ? यतस्ते सङ्गाः महाश्रवाः—महाश्रवद्वाराणि वर्त्तन्ते, तत एवंविधैरनुकूलोपसर्गैरुपस्थितैः असंयमजीवितं—गृहवासं 'नाभिकाङ्क्षेत्' नाभिलषेत्, प्रतिकूलैरुपसर्गैर्जीविताभिलाषी न स्यात्, किं कृत्वा ? श्रुत्वा धर्मं 'अनुत्तरं' प्रधानं मौनीन्द्रमिति गाथार्थः ॥ १३ ॥ अन्यच्च—

**अहिमे संति आवट्टा, कासवेणं पवेइया । बुद्धा जत्थावसप्पंति, सीयंति अबुहा जहिं ॥ १४ ॥**

व्याख्या—'अथ' इत्यनन्तरं इमे प्रत्यक्षाः सर्वजनविदिताः आवर्त्ताः सन्ति, आवर्त्तयन्ति—प्राणिनं भ्रामयन्तीत्यावर्त्ताः, ते च भावावर्त्ता विषयाभिलाषसम्पादक—सम्पत्प्रार्थनाविशेषाः 'काश्यपेन' श्रीमहावीरेण 'देशिताः' कथिताः, येषु आवर्त्तेषु सत्सु 'बुद्धा' ज्ञाततत्त्वा अवसर्पन्ति—अप्रमत्ततया तानावर्त्तान् दूरतस्त्यजन्ति, अबुद्धाः पुनर्निर्विवेकतया तेष्ववसीदन्ति—अत्यासक्तिं कुर्वन्तीति गाथार्थः ॥ १४ ॥ तानेवावर्त्तान् दर्शयति—

**रायाणो रायमच्चा य, माहणा अदुव खत्तिया । निमंतयंति भोगेहिं, भिक्खुयं साहुजीविणं ॥१५॥**

व्याख्या—राजानो राजमन्त्रिणो ब्राह्मणाः क्षत्रियाः स्वाचारव्यवस्थितं [ भिक्षुकं ] भोगेषु निमन्त्रयन्ति, यथा ब्रह्मदत्तचक्रवर्त्तिना नानाविधैर्भोगैश्चित्रसाधुर्निमन्त्रितः, यद्वा श्रेणिकेन [अनाथि]निर्ग्रन्थसाधुर्भोगेषु निमन्त्रितः, एवं राजादयो विषयैर्निमन्त्रयन्ति—भोगोपभोगसम्मुखं कुर्वन्ति, कं ? भिक्षुकं साधुजीविनं, साध्वाचारेण जीवतीति तं साधुजीविनमिति

गाथार्थः ॥ १५ ॥ एतदेव दर्शयितुमाह—

हत्थऽस्सरहजाणेहिं, विहारगमणेहि य । भुंज भोगे इमे सग्घे, महरिसी ! पूजयामु तं ॥ १६ ॥

व्याख्या—हस्त्यश्वरथयानैः तथा विहारगमनैश्च–उद्यानादौ क्रीडया गमनैः, चशब्दादन्यैरपि मनोऽनुकूलैर्विषयैर्निमन्त्रयन्तिस्म, तद्यथा–भुङ्क्ष्व भोगान् इमान् 'श्लाघ्यान्' मनोहरान् महर्षे ! त्वामेतैरुपकरणैः 'पूजयामः' सत्कारयाम इति गाथार्थः ॥ १६ ॥ किञ्चान्यत्—

वत्थगंधमलंकारं, इत्थीओ सयणाणि य । भुंजाहि इमाइं भोगाइं, आउसो ! पूजयामु तं ॥ १७ ॥

व्याख्या—वस्त्रैर्गन्धैरलङ्कारैः स्त्रीभिः प्रत्यग्रयौवनाभिः शय्यासनैश्च त्वं भोगान् भुङ्क्ष्व, आयुष्मन् !–साधो ! त्वां पूजयाम इति गाथार्थः ॥ १७ ॥

जो तुमे नियमो चिण्णो, भिक्खुभावम्मि सुव्वया !। आगारमावसंतस्स, सव्वो संविज्जए तहा ॥१८॥

व्याख्या—यस्त्वया पूर्वं भिक्षुत्वे 'नियमो' महाव्रतादिरूपश्चीर्णः, हे सुव्रत ! स सर्वोऽप्यगारं–गृहं आवसतो गृहस्थत्वेऽपि भवतस्तथैव विद्यत इति, नहि सुचीर्णस्य सुकृतस्य नाशोऽस्ति, सुचीर्णं हि सुकृतं न क्वापि यातीति गाथार्थः ॥१८॥ किञ्च—

चिरं दूइज्जमाणस्स, दोसोदाणिं कुतो ! तव । इच्चेव णं निमंतिंति, नीवारेणेव सूयरं ॥ १९ ॥

व्याख्या—चिरकालं संयमानुष्ठानेन 'दूइज्जमाणस्स' विहरतः सतः गृहवासेऽपि साम्प्रतं न ते दोषः, चिरकालं

त्वया संयममनुष्ठितं साम्प्रतं गृहवासे वसतो नानाविधैर्विषयोपकरणैर्भोगान् भुक्तवतस्तव न किमपि दूषणं, एवं साधुं भोगैर्निमन्त्रयन्ति–भोगबुद्धिं कारयन्ति, यथा ' नीवारेण ' व्रीहिविशेषकणदानेन शूकरं कूटके + प्रवेशयन्ति, एवं साधुमपि प्रलोभयन्तीति गाथार्थः ॥ १९ ॥ अथोपसंहारार्थमाह—

**चोइया भिक्खुचरियाए, अचयंता जवेत्तए । तत्थ मंदा विसीयंति, उज्जाणंसि व दुब्बला ॥ २० ॥**

व्याख्या—' भिक्षुचर्या ' दशविधचक्रवालसामाचारी, तया सीदन्तः–तत्करणं प्रति पौनःपुन्येन प्रेर्यन्ते, ततः प्रेरिताः सन्तस्तत्प्रेरणां दीयमानां शिक्षां अशक्नुवन्तः कर्तुं, संयमानुष्ठानेन आत्मानं यापयितुमसमर्थाः सन्तस्तत्र संयमे ' मन्दाः ' जडा ' विषीदन्ति ' शीतलविहारिणो भवन्ति, संयमं त्यजन्तीत्यर्थः । दृष्टान्तमाह–' उज्जाणंसि 'त्ति उद्यानशिरसि–महाविषमे पथि शकटभारे योत्रिता दुर्बला ' उक्षाणो ' वृषभाः ग्रीवामधःकृत्वा नीचैः पतित्वा तिष्ठन्ति, नोत्सहन्ते तं शकटभारमुद्वोढुं, तथा साधवोऽपि पञ्चमहाव्रतभारभग्ना एके कण्डरीकादिवत्संयमधुरमुत्सृज्य दूरे भवन्तीति गाथार्थः ॥२०॥ किञ्च—

**अचयंता व लूहेणं, उवहाणेण तज्जिया । तत्थ मंदा विसीयंति, उज्जाणंसि जरग्गवा ॥ २१ ॥**

व्याख्या—' रूक्षेण ' संयमेन आत्मानं निर्वाहयितुमशक्नुवन्तः, तथा ' उपधानेन ' बाह्याभ्यन्तरभेदभिन्नेन तपसा ' तर्जिताः ' बाधिताः परीषहैश्च जिता एके अल्पसत्त्वाः संयमे विषीदन्ति । ' उद्यानशिरसि ' उद्धङ्कमस्तके × दुर्बलो गौरिव,

+ पिञ्जरे । × अतिविषमाध्वनि ।

महाविषमे पथि यूनोऽपि अवसीदनं सम्भाव्यते, किम्पुनर्जरद्गवस्य ? तथाऽत्रैरुपसर्गितानां मन्दानां साधूनामवसीदनं युक्तमेवेति गाथार्थः ॥ २१ ॥

एवं निमंतणं लध्धुं, मुच्छिया गिद्ध इत्थिसु। अज्झोववन्ना कामेहिं, चोइज्जंता गया गिहं ति ।२२। त्तिबेमि·

व्याख्या—एवं पूर्वोक्तप्रकारेण कामभोगेषु निमन्त्रिताः मूर्च्छिताः धनकनकादिषु तथा स्त्रीषु गृद्धाः दत्तावधाना रमणीरागमोहिताः कामेषु अध्युपपन्नाः कामगतचित्ताः संयमेऽवसीदन्तोऽपरेणोद्युक्तविहारिणा ' शिक्षिताः ' संयमं प्रति-प्रोत्साह्यमाना अपि केऽपि गुरुकर्माणः संयमं परित्यज्य अल्पसत्त्वा गृहं गताः—गृहस्थीभूताः, इतिः परिसमाप्तौ, ब्रवीमीति पूर्ववत्, इति गाथार्थः ॥ २२ ॥

इत्युपसर्गपरिज्ञायां द्वितीयोद्देशकटीका समाप्ता ।

अथ तृतीयोद्देशकः प्रारभ्यते—

जहा संगामकालम्मि, पिट्ठतो भीरु पेहति। वलयं गहणं नूमं, को जाणइ ? पराजयं ॥ १ ॥

व्याख्या—मन्दमतयो हि दृष्टान्तं विना न बुद्ध्यन्ते तेन पूर्वं दृष्टान्तः प्रतिपाद्यते, यथा कश्चिद्भीरुर्युद्धे समुपस्थिते पूर्वमेव परित्राणाय दुर्गादिकं विषमस्थानमवलोकयति, तदेवाह—' वलयं ' वलयाकारेण उदकवेष्टितं तथा ' गहनं ' धवादि-कण्टकिवृक्षैः परिच्छन्नं ' णूमं 'ति प्रच्छन्नं गिरिगुहादिकं नाशाय आत्मनो त्राणभूतं तथाविधं किञ्चित्स्थानं गवेषयति,

भग्नः सन् अत्र प्रविश्यामि, को जानाति युद्धे को जयति कः पराजयति " युद्धस्य हि गतिर्दैवी, कस्तत्र जयनिश्चयः । " इति वचनात् स्तोकैर्बहवो जीयन्ते, कार्यसिद्धयो हि दैवायत्ता, इति बुद्ध्या भीरुः पूर्वमेव वलयादिकं विलोक्यैव युद्धे प्रविशतीति गाथार्थः ॥ १ ॥ किञ्च—

**मुहुत्ताणं मुहुत्तस्स, मुहुत्तो होइ तारिसो । पराजियाऽवसप्पामो, इति भीरू उवेहती ॥ २ ॥**

व्याख्या—मुहूर्त्तानां × मध्ये एकः कोऽपि तादृशो मुहूर्त्तः + समेति यत्र जयश्चिन्त्यते तत्र पराजयोऽपि स्यात्, तदा भङ्गे सति का गतिः स्यात् ? इति कातरस्तु पूर्वमेव त्राणाय विषमं स्थानं दुर्गादिकं विलोकयतीति गाथार्थः ॥ २ ॥

अथ दार्ष्टान्तिकं दर्शयति—

**एवं तु समणा एगे, अबलं नच्चाण अप्पगं । अणागयं भयं दिस्स, अविकप्पंतिमं सुयं ॥ ३ ॥**

व्याख्या—एवं पूर्वोक्तकातरदृष्टान्तेन कोऽपि कातरः श्रमणः स्वं यावज्जीवं संयमभारं उद्वोढुं अबलं ज्ञात्वा, एतावता संयमभारोद्वहनाय असमर्थः सन् अनागतं भयं दृष्ट्वा, यथा अकिञ्चनोऽहं मम वृद्धावस्थायां ग्लानत्वे दुर्भिक्षे वा आजीविकाभयं उत्प्रेक्ष्य इमं श्रुतं व्याकरणं ज्योतिष्कं वैद्यकं मन्त्रादिकं ममावसरे त्राणाय भविष्यतीत्येवं कल्पयन्ति—परिकल्पयन्ति त्राणभूतं मन्यन्ते[कातराः श्रमणाः], एतावता आजीविकाकृते व्याकरणज्योतिष्कादिकं शास्त्रं शिक्षयतीति गाथार्थः ॥ ३ ॥ तथा च—

× " एकस्य वा मुहूर्त्तस्य " । + " कालविशेषः " इति हर्ष० ।

**को जाणइ ? विउवातं, इत्थीओ उदगाउ वा । चोइज्जंता पवक्खामो, ण णो अत्थि पगप्पियं ॥४॥**

व्याख्या—साधुः कातरः सन् एवं चिन्तयति, यथा—को जानाति ? मम कुतोऽपि ['व्यापातः'] संयमभ्रंशो भविष्यति, न जाने स्त्रीतः सचित्तोदकपरिभोगाद्वा, कर्मणां विचित्रा गतिः, को जानाति ? व्यापातं—संयमजीविताद्भ्रंशं, एवं ते वराकाः अनागतामेव चिन्तां प्रकल्पयन्ति, यथा—पूर्वोपार्जितं नास्माकं कञ्चन द्रव्यजातमस्ति यत्तस्यां वेलायां कार्ये समेति, अन्यद्वा ज्योतिष्कमन्त्रतन्त्रकुण्टलविण्टलादिकं न विद्मो यत्परेण पृष्टाः सन्तः प्रयोक्ष्यामः—कथयिष्यामः, इति विचिन्त्य हीनसत्त्वाः साधवः पापश्रुतादौ प्रवर्त्तन्ते, न च तथापि भाग्यहीनानां कार्यसिद्धिर्जायत इति गाथार्थः ॥ ४ ॥

**इच्चेवं पडिलेहांति, वलयप्पडिलेहिणो । वितिगिच्छसमावन्ना, पंथाणं व अकोविया ॥ ५ ॥**

व्याख्या—इत्येवं यथा भीरवः सङ्ग्रामे प्रविशन्तः वलयादिप्रत्युपेक्षिणो भवन्ति, एवं प्रव्रजिता अपि अल्पसत्त्वाः आजीविकाभयान्मन्त्रतन्त्रादिकं जीवनोपायत्वेन परिकल्पयन्ति, कीदृशाः सन्तः ? विचिकित्सासमापन्ना, विचिकित्सा—चित्तविप्लुतिः, यथा वयमेनं संयमभारं निर्वोढुं समर्था उत नेति विकल्पपराः, यथा पान्थाः पन्थानं प्रति 'अकोविदाः' मार्गानभिज्ञाः किमयमध्वा विवक्षितं स्थानं यास्यति न वेति चिन्तापरा भवन्ति, तथा साधवोऽपि संयमभारोद्वहने असमर्थाः कुण्टलविण्टलादिकं आजीविकाकृते अभ्यसन्तीति गाथार्थः ॥ ५ ॥ साम्प्रतं महापुरुषचेष्टिते दृष्टान्तमाह—

**जे उ संगामकालम्मि, नाता सूरपुरंगमा । नो ते पिट्ठमुवेहिंति, किं परं मरणं सिया ? ॥ ६ ॥**

व्याख्या—ये महासत्त्वाः पुरुषाः 'ज्ञाताः' लोके प्रसिद्धिं प्राप्ताः सर्वेषां सुराणां 'अग्रेसराः' प्रधाना अभङ्गबिरुदं वहन्तः सङ्ग्रामे प्रविशन्तो न पराङ्मुखमवलोकन्ते, न नाशयोग्यं स्थानमन्वेषयन्ति, केवलमेवं चिन्तयन्ति-मरणादधिकं किम्भविष्यति ? परं भङ्गे यशोजीवितमेव याति, अतो मरणेऽपि य(श एव )शोऽपि (?) रक्ष्याम इति चिन्तयन्तीति गाथार्थः ॥ ६ ॥

**एवं समुट्ठिए भिक्खू, वोसिज्जाऽगारबंधणं । आरंभं तिरियं कट्टु, अत्तत्ताए परिवए ॥ ७ ॥**

व्याख्या—एवं महाशूरपुरुषदृष्टान्तेन साधुरपि संयमे सावधानः संयमयशोरक्षणायोद्यत अगारबन्धनं त्यक्त्वा 'आरम्भं' सावद्यानुष्ठानं तिर्यक्कृत्वा विहायेत्यर्थः, एतावता सर्वं गृहपाशबन्धनादि व्युत्सृज्य 'आत्मा' मोक्षस्तदर्थाय × यतेत, मोक्षाय सावधानो भवेदिति गाथार्थः ॥ ७ ॥

अध्यात्मविषीदनाधिकारो गतः, अथ परवादिवचनं द्वितीयमर्थाधिकारमधिकृत्याह—

**तमेगे परिभासंति, भिक्खुयं साहुजीविणं । जे एवं परिभासंति, अंतए ते समाहिए ॥ ८ ॥**

व्याख्या—एके असाधवोऽन्यतीर्थिकास्तं भिक्षुं साधुजीविनं-स्वाचारे प्रवर्त्तमानं परिभाषन्ते-साधुनिन्दां कुर्वन्तीत्यर्थः । ये च गोशालकमतीया दिगम्बरा वा एवंविधस्य साधोर्निन्दां कुर्वन्ति ते 'समाधेः' सम्यगनुष्ठानात् मोक्षाद्दूरे ज्ञेया इति गाथार्थः ॥ ८ ॥ अथ यत्ते परिभाषन्ते तदाह—

× "आत्मत्वाय-शेषकर्मरहितत्वाय" इति हर्ष० ।

संबद्धसमकप्पा हु, अन्नमन्नेसु मुच्छिता । पिंडपातं गिलाणस्स, जं सारेह दलाह य ॥ ९ ॥

व्याख्या—ते परतीर्थिका एवं भाषन्ते, भो भिक्षवः ! यूयं 'सम्बद्धाः' गृहिणस्तत्समकल्पाः–गृहस्थसदृशा इत्यर्थः । कथं ? यथा गृहिणः परस्परमुपकारे वर्त्तन्ते, यथा माता पुत्रं पालयति तथा पुत्रोऽपि मातरमिति अन्योऽन्यं मूर्च्छिताः परस्परं परोपकारनिरतास्तथा भवन्तोऽपि गुरुशिष्याद्युपकारिणो गृहिवत्, यथा गृहिणः परस्परमुपकारिणो दानादिना, तथा यूयमपीति भावः । तदेव दर्शयति–पिण्डपातं ग्लानस्य 'सारेह' त्ति गवेषय, यथा–ग्लानोपकाराय आहारमानीय दद्ध्वं, एवं परस्परं, गुरोश्च वैयावृत्त्यं कुरुध्वं, एवं भवन्तो गृहस्थसमकल्पा इति गाथार्थः ॥ ९ ॥

अथैतद्भाषिणां दोषदर्शनायाह—

एवं तुब्भे सरागत्था, अन्नमन्नमणुव्वसा । नट्ठसप्पहसब्भावा, संसारस्स अपारगा ॥ १० ॥

व्याख्या—एवं परस्परोपकारेण गृहस्था इव सरागस्थाः–सरागिणः, तथा अन्योन्यं 'वशमुपागताः' परस्परायत्ताः–मिथोऽधीनाः, यतयो हि न कस्याप्यधिना, निस्सङ्गतया स्वाधीना एव भवन्ति, अयं तु गृहिणामाचारो यत्परस्पराधीनत्वं, अत एव नष्टसत्पथसद्भावा यूयं सन्मार्गानभिज्ञाः, अतो न संसारपारगामिन इति गाथार्थः ॥ १० ॥

अयं पूर्वपक्षः, अस्य दूषणायाह—

अह ते परिभासेज्जा, भिक्खू मोक्खविसारए । एवं तुब्भे पभासंता, दुप्पक्खं चेव सेवह ॥ ११ ॥

व्याख्या—अथ भिक्षुस्तान्–परतीर्थिकान् साधुनिन्दापरानुद्दिश्य 'परिभाषेत' ब्रूयात्, कथम्भूतो भिक्षुः ? 'मोक्षविशारदः' मोक्षमार्गस्य प्ररूपकः । भो तीर्थिकाः ! एवं साधून्निन्दमाना यूयं द्विपक्षासेवका–रागद्वेषात्मकं पक्षद्वयं सेवध्वं, सदोषस्यात्मपक्षस्य समर्थनाद्रागः साधुनिन्दया तु द्वेषः, एवं द्विपक्षासेवकाः, यद्वा बीजोदकोद्दिष्टभोजनाद्गृहस्था वेषमात्रधारकत्वाद्वयं प्रव्रजिताश्चेत्येवं पक्षद्वयसेविनः, यदि वा स्वतोऽसदनुष्ठानपरा अपरं च सदनुष्ठानवर्ती च निन्दया द्विपक्षसेविनो यूयमिति गाथार्थः ॥ ११ ॥

अथ ते प्रोचुः–कथं वयमसदाचारवन्तः ? इति अधुना तेषामसदाचारं प्रकटयन्नाह—

**तुब्भे भुंजह पाएसु, गिलाणा अभिहडंमि य । तं च बीओदगं भोच्चा, तमुद्दिस्सा य जं कडं ॥ १२ ॥**

व्याख्या—वयमपरिग्रहा–निष्काञ्चना इति बुद्ध्या कांस्यपात्रेषु भुंग्ध्वं, गृहस्थपात्रेषु भुञ्जानास्तत्परिग्रहात्सपरिग्रहा जाता यूयमिति, तथा ग्लानस्य गृहस्थपार्श्वादाहाराद्यानयने अभ्याहृतदोषश्च भवतां प्रकट एव, तथा बीजोदकभोजिन उद्देशिकभोजिनश्च, एवं प्रकटमेव भवतामसदाचारपरत्वमिति गाथार्थः ॥ १२ ॥

**लित्ता तिव्वाभितावेणं, उज्झिया असमाहिया । नातिकंडूइयं सेयं, अरुयस्सावरज्झती ॥ १३ ॥**

व्याख्या—भो तीर्थिकाः ! यूयं षड्जीव[नि]कायविराधनारूपेण साधुनिन्दारूपेण च तीव्रेण सन्तापेन लिप्तास्थ, तथा 'उज्झिया' इति विवेकशून्या 'असमाहिया' शुभध्यानरहिताः, यथाऽरुषो[अरुकस्य]व्रणस्यातिकण्डूयनं 'न श्रेयो'

न शोमनं, अतिकण्डूयने हि व्रणो गाढतरं दोषमावहति, तथा अतिसाधुनिन्दा च भवतां न श्रेयसे इति गाथार्थः ॥ १३ ॥

**तत्तेण अणुसिट्ठा ते, अपडिन्नेण जाणया । न एस णियए मग्गे, असमिक्खा वदी किती ॥ १४ ॥**

व्याख्या—'तत्त्वेन' परमार्थेन यथावस्थितार्थप्ररूपणया ['ते'] गोशालकमतीया बोटिकाश्च 'अनुशासिताः' शिक्षां ग्राहिताः। कथम्भूतेन साधुना ? 'अप्रतिज्ञेन' असदपि समर्थनीयमित्येवं प्रतिज्ञारहितेन, पुनः कीदृशेन ? 'जानता' हेयोपादेयार्थपरिच्छेदकेन। कथं अनुशासिता ? इत्याह—'न एस नियए मग्गे' एष भवदीयो मार्गो न नियतो—न युक्तिसङ्गतः—अयुक्त इत्यर्थः। कथं ? यदस्मानुद्दिश्योक्तं—'यद्यूयं गृहस्थकल्पाः' तेषा (? भवता) मसमीक्ष्याभिहिता अपर्यालोच्योक्तैषा वाग्, तथा 'कृतिः' करणमपि भवदीयं कर्त्तव्यमपि असमीक्षितमेव—अनालोचितमेव, असम्बद्धमेवेति गाथार्थः ॥ १४ ॥ एतदेव दृष्टान्तेनाह—

**एरिसा भो ! वई एसा, अग्गवेणुव करिसिता। गिहिणो अभिहडं सेयं, भुंजिउं णउ भिक्खुणं ॥१५॥**

व्याख्या—भो वादिनः ! येयमीदृक्षा वाग्, यथा—यतिना ग्लानस्यानीय न देयमित्येषा अग्रे 'वेणुवत्' वंशवत्कर्षिता 'तन्वी' दुर्बलेत्यर्थः, युक्तिं न क्षमते। केयं वाग् ? यद्भवतोच्यते—ग्लानस्य गृहिणा आनीतमाहारं योग्यं कल्पते, परं यतेर्न यतिना आनीतं कल्पते, इत्येषा वाक् अयुक्ता, वयं तु एवं ब्रूमः—गृहिणा आनीतमुत्सर्गेण ग्लानस्य अकल्पनीयं, साधुना-

ऽऽनीतं तु कल्पते, साधोरभावे गृहिणाप्यानीय देयं ग्लानाय, कारणे न दोषः×, साधुसद्भावे दोष एवेति गाथार्थः ॥ १५ ॥

**धम्मपन्नवणा एसा, सारंभाण विसोहिया । णउ एयाहिं दिट्ठीहिं, पुव्वमासि पगप्पियं ॥ १६ ॥**

व्याख्या—या एषा धर्मदेशना भवदीया यतीनां दानादिना गृहिणा उपकर्त्तव्यं, इत्येषा देशना ' सारम्भाणां ' गृहस्थानां विशोधिका, गृहिणा दानं देयं " गृही दानेन शुद्ध्यति " इति वचनात् । परन्तु यतिना दानं न देयं, यतेर्दानाधिकारो नास्ति, यतयः स्वकीयानुष्ठानेन शुद्ध्यन्ति, इत्येषा [या] भवदीया धर्मदेशना सा न भवदीयतीर्थंकरेण प्ररूपिता, न भवत्तीर्थंकरेण प्ररूपितमिदं, यद्गृहस्थेनैव ग्लानावस्थायां यतेरुपकर्त्तव्यं, न तु यतिभिः परस्परमित्येवं सर्वज्ञैः पूर्व–मादौ प्ररूपितमासीदित्येषा भवद्देशना मिथ्या, यतो न सर्वज्ञा ईदृशमर्थं प्ररूपयन्ति, यथा भवन्त ईदृग्धर्मदेशनया प्ररूपयन्ति न तथा सर्वज्ञैः प्ररूपितमिति गाथार्थः ॥ १६ ॥

**सव्वाहिं अणुजुत्तीहिं, अचयंता जवित्तए । ततो वायं णिराकिच्चा, ते भुज्जोवि पगब्भिया ॥ १७ ॥**

व्याख्या—ते सर्वेऽपि गोशालकमतीया बोटिकाश्च सर्वाभिरप्यनुयुक्तिभिः स्वपक्षं यापयितु–आत्मानं स्वपक्षे स्थापयितुं ' अचयंता ' अशक्नुवन्तः, ततो वादं निराकृत्य भूयोऽपि प्रगल्भिताः सन्तो धृष्टत्वं कुर्वन्ति, वादपरित्यागेऽपि धृष्टाः सन्त एवं भाषन्ते–अस्माकं परम्परैव प्रमाणं, यदस्माकं गुरुपरम्परागतं तदेव श्रेयः प्रमाणं " पुराणं [ शास्त्रं ] मानवो धर्मः,

× ' कारणे सति श्रावकेणानीतमाहारादिर्ग्लानयतेः कल्पते ' इत्यक्षरघटना ।

साङ्गो वेदश्चिकित्सितम् । आज्ञासिद्धानि चत्वारि, न हन्तव्यानि हेतुभिः ॥ १ ॥" अत्र धर्मविधौ युक्तयो न विस्तार्यन्ते, युक्तिभिः किं प्रयोजनं ? इति गाथार्थः ॥ १७ ॥ अपि च—

**रागद्दोसाभिभूतप्पा, मिच्छत्तेण अभिद्दुता । आउसे सरणं जंति, टंकणा इव पव्वयं ॥ १८ ॥**

व्याख्या—तेऽन्यतीर्थिकाः रागद्वेषाभिभूता मिथ्यात्वेन अभिद्रुताः–सद्युक्तिभिर्वादं कर्त्तुं असमर्थाः आक्रोशवचनानि ब्रुवते तथा दण्डयष्ट्यादिभिश्च घ्नन्ति, यदा युक्तिभिरुत्तरं दातुमसमर्थास्तदा आक्रोशान् दण्डयष्ट्यादिभिश्च हननव्यापारं शरणतया श्रयन्ते, यष्टिमुष्टिप्रहारं कुर्वन्तीत्यर्थः । यथा 'टङ्कणा' म्लेच्छाः शस्त्रादिभिर्युद्धं कर्त्तुमसमर्थास्तदा पर्वतं शरणं कुर्वन्ति तथा तेऽपि दण्डयष्ट्यादिना हननव्यापारं शरणतया मन्यन्त इति गाथार्थः ॥ १८ ॥

**बहुगुणप्पगप्पाइं, कुज्जा अत्तसमाहिए । जेणऽन्ने णो विरुज्झेज्जा, तेण तं तं समायरे ॥ १९ ॥**

व्याख्या—बहवो गुणाः स्वपक्षसिद्धि–परदोषोद्भावनादयो माध्यस्थ्यादयो वा प्रकल्पन्ते–प्रादुर्भवन्ति आत्मनि येषु अनुष्ठानेषु तानि बहुगुणप्रकल्पान्याश्रयन्ते साधवः । प्रतिज्ञाहेतुदृष्टान्तोपनयनिगमनादीनि माध्यस्थ्यवचनप्रकाराणि [ वा ] भाषन्ते तेषां बोधार्थं, न पुनर्वाक्कलहादिकं कुर्वते आत्मसमाधये, यथा स्वपरयोश्चित्तसमाधिः स्यात्तथा वक्तव्यं, न परदुःखोत्पादकं वचो भाषणीयं साधुभिः, युक्त्यैव बोधयन्तीति भावः, न च ते आक्रोशपरानप्यात्मनाऽऽक्रोष्टव्याः, एवं च चिन्तयेत्तद्यथा–" आक्कोसहणणमारण–धम्मब्भंसाण बालसुलभाणं । लाभं मन्नइ धीरो, जहुत्तराणं अभावम्मि

॥ १ ॥ " एवं विचिन्त्यात्मसमाधिं कुर्वन्ति, येन हेतुदृष्टान्तेनोपन्यस्तेन आत्मसमाधिः स्यात्, येन च भाषितेन अन्ये तीर्थिका न विरुध्यन्ते–न विद्वेषं यान्ति, तद्वचो भाषणीयं तचानुष्ठानं कुर्यादिति गाथार्थः ॥ १९ ॥

तदेवं परमतं निराकृत्य स्वमतस्थापनायाह—

**इमं च धम्ममादाय, कासवेणं पवेइयं । कुज्जा भिक्खू गिलाणस्स, अगिलाए समाहिए ॥ २० ॥**

व्याख्या—इमं धर्मं समादाय 'काश्यपेन' श्रीमहावीरेण प्ररूपितं चैतत् यथा–साधुना ग्लानस्य वैयावृत्त्यं कार्यं परं अग्लान्या आत्मसमाधिना–यथा आत्मनो ग्लानस्य च समाधिरुत्पद्यते तथा वैयावृत्त्यं कार्यमित्ययं धर्मः श्रीमहावीरेण प्ररूपित इति गाथार्थः ॥ २० ॥

**संखाय पेसलं धम्मं, दिट्ठिमं परिनिव्वुडे । उवसग्गे नियामित्ता, आमोक्खाय परिव्वएज्जासि ॥२१॥ त्ति बेमि**

व्याख्या—सर्वज्ञप्रणीतं धर्मं 'पेशलं' सुकुमारं–मनोहरं 'सङ्ख्याय' ज्ञात्वा 'दृष्टिमान्' यथावस्थितवस्तुपरिच्छेदवान् उपसर्गान् 'नियम्य' संयम्य–निरुध्य 'उपसर्गितोऽपि' कदर्थितोऽपि नासमञ्जसं मनो विदध्यादित्येवं साधुरामोक्षाय परिव्रजेत्–संयमानुष्ठानोद्युक्तो भवेदित्यहं ब्रवीमीति पूर्ववदिति गाथार्थः ॥ २१ ॥

इत्युपसर्गपरिज्ञायास्तृतीयोद्देशकः समाप्तः ।

उक्तस्तृतीयोद्देशकः, अधुना चतुर्थ आरभ्यते, यद्यनुकूल–प्रतिकूलोपसर्गैः साधुः क्षोभं यायात्तदा अनेन प्रज्ञापना

क्रियते, अनेन सम्बन्धेनायातस्यास्योद्देशकस्यादिसूत्रं—

**आहंसु महापुरिसा, पुव्विं तत्ततवोधणा । उदएण सिद्धिमावन्ना, तत्थ मंदे विसीयती ॥ १ ॥**

व्याख्या—अविदितपरमार्थाः केचन एवमाहुः–रुक्तवन्तः, 'पूर्वं' पूर्वस्मिन् काले महापुरुषास्तारागणर्षिप्रभृतयस्त[प्त]-पोधनाः–पञ्चाग्न्यादितपस्साधका अपि 'शीतोदकेन' सचित्तोदकपरिभोग–कन्दमूलफलाद्युपभोगेन च 'सिद्धिमापन्नाः' सिद्धिङ्गताः, इत्याकर्ण्य 'मन्दो'ऽज्ञः अस्नानादिपरीषहतर्जितः प्रासुकोदकपरिभोगभग्नः संयमानुष्ठाने विषीदति, अप्रासुकोदकमेवाश्रयते, एवं मूर्खाः न विदन्ति यत्कर्मणां क्षयेन भरतादीनां मोक्षावाप्तिर्जाता, न तु शीतोदकपरिभोगादिति गाथार्थः ॥ १ ॥ किञ्च—

**अभुंजिया नमी विदेही, रामगुत्ते य भुंजिया । बाहुए उदगं भोच्चा, तहा नारायणे रिसी ॥ २ ॥**

व्याख्या—केचन कुतीर्थिकाः साधुविप्रतारणार्थमेवं भाषन्ते–विदेहदेशीयो नमीराजा अशनादिकमभुक्त्वा सिद्धिं गतः, तथा रामगुप्तो राजर्षि 'भुक्त्वा' आहारादिपरिभोगं कृत्वा सिद्धिं गतः । तथा बाहुकर्षिः +नारायणर्षिश्च, एतौ द्वावपि शीतलोदकपरिभोगादेव सिद्धाविति गाथार्थः ॥ २ ॥

---

+ मूलेनार्थसाङ्गत्य त्वेवमेवास्ति, परं शीतोदकादिपरिभोगं कृत्वा तथा नारायणो नाम महर्षिः परिणतोदकादिपरिभोगात्सिद्ध इति बृहद्वृत्तौ ।

आसिले देविले चेव, दीवायणमहारिसी । पारासरे दगं भोच्चा, बीयाणि हरियाणि य ॥ ३ ॥

व्याख्या—एते सर्वेऽपि ऋषयः उदकेन बीजकाय-हरितकायपरिभोगादेव सिद्धिं प्राप्ता इति गाथार्थः ॥ ३ ॥

एते पुव्वमहापुरिसा, आहिता इह संमया । भोच्चा बीओदगं सिद्धा, इति मेयमणुस्सुयं ॥ ४ ॥

व्याख्या—एते पूर्वोक्ता महापुरुषाः बीजसचित्तोदकपरिभोगात्सिद्धिं प्राप्ताः, एवं कुतीर्थिका अथवा सुखशीलाः स्वयूथ्याः पार्श्वस्थादयो भाषन्ते-यथाऽस्माभिर्भारतपुराणादौ श्रुतं तथा वयमप्येवमेव सिद्धिं साधयिष्यामः इति गाथार्थः ॥ ४ ॥

तत्थ मंदा विसीयंति, वाहच्छिन्ना व गद्दभा । पिट्ठतो परिसप्पंति, पिट्ठसप्पी व संभमे ॥ ५ ॥

व्याख्या—ईदृशं कुश्रुत्युपदेशं श्रुत्वा मन्दा 'विषीदन्ति' संयमे भग्नचित्ता जायन्ते, न पुनरेवं विदन्ति-यद्बीजोदकसचित्तपरिभोगात् सिद्धिर्न जायते, सिद्धिस्तु जातिस्मरणादिना सम्यग्ज्ञानदर्शनचारित्रावाप्त्या च जायते, मरुदेवास्वामिनी-भरत-पृथ्वीचन्द्रगुणचन्द्र-वल्कलचीरिप्रभृतीनामिव, नहि शीतोदक-बीजाद्युपभोगेन जीवोपमर्दप्रायेणानुष्ठानेन कर्मक्षयो जायते । विषीदने दृष्टान्तमाह-'वाहो' भारस्तेन 'छिन्ना' स्त्रुटिता रासभा इव, यथा रासभा अर्द्धपथ एव भारमुत्सृज्य निपतन्ति, तथा तेऽपि संयमभारं विहाय शीतलविहारिणो भवन्ति । पुनर्दृष्टान्तान्तरमाह-यथा भग्नगतयो मनुष्या अग्न्यादिसम्भ्रमे व्याकुलाः नश्यतां मानवानां पृष्ठपरिसर्पिणो भवन्ति, नाग्रगामिनः स्युः, अपितु अग्न्यादिसम्भ्रमे विनश्यन्ति, एवं तेऽपि संयमे शिथिलाः सन्तो मोक्षं प्रति प्रवृत्ता अपि न मोक्षङ्गतयो भवन्ति, अनन्तमपि कालं संसारे

पर्यटन्तीति गाथार्थः ॥ ५ ॥ अथ मतान्तरमाह—

**इहमेगे उ भासंति, सातं सातेण विज्जती । जे तत्थ आरियं मग्गं, परमं च समाहियं ॥ ६ ॥**

व्याख्या—इह एके शाक्यादयः स्वयूथ्या वा लोचादिना पीडिता एवं भाषन्ते, किं तदित्याह–' सातं ' सुखं सातेनैव स्यात्, एतावता को भावः ? सुखेनैव सुखावाप्तिर्जायते, यत उक्तं–" सर्वाणि सत्त्वानि सुखे रतानि, सर्वाणि दुःखाच्च समुद्विजन्ते । तस्मात्सुखार्थी सुखमेव दद्यात्, सुखप्रदाता लभते सुखानि ॥ १ ॥ " यतः कारणानुरूपं कार्यमुत्पद्यते, यथा शालिबीजाच्छाल्यङ्कुरो, न यवाङ्कुरः, तथा सुखात्सुखं दुःखाद्दुःखं, न च लोचादिकष्टान्मुक्तिरिति, एवं ये स्वयूथ्याः शाक्यादयो वा भाषन्ते ते आर्यमार्गं सर्वज्ञभाषितं परिहरन्ति, तथा परमं च समाधिं ज्ञानदर्शनचारित्रात्मकं ये त्यजन्ति ते अज्ञा–मूढमतयो भवोदधौ पर्यटन्तीति गाथार्थः ॥ ६ ॥

**मा एयमवमन्नंता, अप्पेणं लुंपहा बहुं । एतस्स अमोक्खाए, अओहारिव्व झूरह ॥ ७ ॥**

व्याख्या—एनमार्यमार्गं सर्वज्ञभाषितं ' सुखं सुखेनैव जायत ' इति भाषमाणा मोहमोहिताः भो तीर्थिकाः ! यूयं ' अवमन्यमानाः ' सर्वज्ञभाषितं मार्गं परिहरन्तः अल्पेन सांसारिकसुखेन बहुं परमार्थसुखं मोक्षाख्यं मा लुम्पथ–मा विध्वंसथ, एवंविधस्यासत्पक्षस्य ' अमोक्षे ' अपरित्यागे अयोवाहकपुरुषवज्झूरयिष्यथ, यथा लोहवाहकः अपान्तराले रूप्यसुवर्णरत्नादिलाभेऽपि दूरमानीतमिति कृत्वा लोहं नोज्झितवान्, पश्चात्स्वस्थानं प्राप्तः अल्पलाभे आत्मानं पश्चात्तापेन दह्यमानो निनन्द

पश्चात्तापं कृतवान्, एवं भवन्तोऽपि झूरयिष्यन्तीति गाथार्थः ॥ ७ ॥ पुनरपि शाक्यादीनां दोष दर्शनायाह—

**पाणाइवाए वट्टंता, मुसावाए असंजया । अदिन्नादाणे वट्टंता, मेहुणे य परिग्गहे ॥ ८ ॥**

व्याख्या—एतेषु प्राणातिपातादिषु वर्त्तमानाः यूयमेकान्तेन असंयता अल्पेन विषयसुखेन बहुं मोक्षसुखं विलुम्पथ, तथाहि-पचनपाचनादिक्रियां कुर्वतां भवतां सावद्यानुष्ठानारम्भतया प्राणातिपातापत्तिः, तथा वयं प्रव्रजिता इति ब्रुवतां पुनर्गृहस्थाचरणान्मृषावादः, त्रसस्थावरजीवानां शरीरोपभोगे तानि शरीराणि तत्स्वामिभिरदत्तानि, अतोऽदत्तग्रहणमापन्नं भवतां, गोमहिष्य[जा]गजोष्ट्रादिपरिग्रहात्तन्मैथुनानुमोदनादब्रह्म, धनधान्यादिपरिग्रहात्परिग्रहः । अत एव यूयमेकान्तेनासंयता इति गाथार्थः ॥ ८ ॥ अथ पुनरपि परमतं दूषयितुमाह—

**एवमेगे उ पासत्था, पन्नवंति अणारिया । इत्थीवसं गया बाला, जिणसासणपरम्मुहा ॥ ९ ॥**

व्याख्या—एवमनेन प्रकारेण एके पार्श्वस्थादयः अनार्याः 'प्रज्ञापयन्ति' प्ररूपयन्ति स्त्रीणां वशङ्गताः-स्त्रीणां वशवर्त्तिनो 'बाला' अज्ञाः-विवेकविकलाः स्त्रीपरीषहं सोढुमसमर्थाः शासनपराङ्मुखाः-जिनशासनविद्विषः एवं भाषन्ते इति गाथार्थः ॥ ९ ॥ किं भाषन्ते ? तदेवाह—

**जहा गंडं पिलागं वा, परिपीलेज्ज मुहुत्तगं । एवं विन्नवणित्थीसु, दोसो तत्थ कओ सिया? ॥१०॥**

व्याख्या—यथा कश्चित्पुरुषो 'गण्डं' स्फोटकं समुत्थितं ज्ञात्वा तत्पीडोपशमार्थं तत्पिटकं परिपीडय पूतिं रुधिरादिकं

निर्गाल्य मुहूर्त्तं सुखितो भवति, न च कोऽपि दोषः समुत्पद्यते, मुहूर्त्तमात्रं सुखं विन्दति, तथा स्त्रीविज्ञापनायां—स्त्रीसेवायां गण्डपरिपीडनवत्कुतो दोषः ? अपितु न कोऽपि, स्यादपि यदि काऽपि पीडोत्पद्यते, न चासाविहास्तीति गाथार्थः ॥ १० ॥

**जहा मंधाद(णे)ए (?) नाम, थिमितं भुञ्जती दगं। एवं विन्नवणित्थीसु, दोसो तत्थ कओ सिया? ॥११॥**

व्याख्या—नाम इति सम्भावनायां, यथा [ मन्धादन ] 'मण्वादो' मेषः स्तिमितं—अनालोडयन्नुदकं पिबति न च उदकं पीडयति आत्मानं च पुनः प्रीणयति, एवं स्त्रीसम्बन्धे न काचिदन्यस्य पीडा आत्मनश्च प्रीणनमतः स्त्रीसेवायां कुतो दोषः ? अपि तु न कोऽपीति गाथार्थः ॥ ११ ॥ दृष्टान्तान्तरमाह—

**जहा विहंगमा पिंगा, थिमितं भुंजती दगं। एवं विन्नवणित्थीसु, दोसो तत्थ कओ सिया**

व्याख्या—यथा 'पिङ्गाः' कपिञ्जला 'विहङ्गमाः' पक्षिणी आकाशस्था स्तिमितमुदकमापिबति ापि गर्भ-प्रदानपूर्विकया पुत्राद्यर्थं स्त्रीसम्बन्धं कुर्वतोऽपि न दोष इति गाथार्थः ॥ १२ ॥

**एवमेगे उ पासत्था, मिच्छदिट्ठी अणारिया। अज्झोववन्ना कामेहिं, पूयणा इव तरुणए ॥ १३ ॥**

व्याख्या—एवं गण्डपीडनादिबलेन निर्दोषं मैथुनमिति मन्यमानाः एके पार्श्वस्थादयो मिथ्यादृष्टयोऽनार्याः कामेषु 'अध्युपपन्नाः' मूर्च्छिताः विषयैषिणो मूर्च्छिताः भवन्ति, अत्रार्थे दृष्टान्तमाह—'पूयण'त्ति+ गड्डरिका आत्मीयेऽपत्ये

---

\+ "पूतना'—डाकिनी 'तरुणके' स्तनन्धयेऽध्युपपन्ना" इति बृहद्वृत्तौ।

मूर्च्छिता भवति, सर्वासु तिर्यग्जातिषु गड्डरिकाया अपत्यस्नेहो महान् भवति, यथा किल सर्वपशूनामपत्यानि निरुदके कूपे अपत्यस्नेहपरीक्षार्थं क्षिप्यन्ते, तत्र चापरा मातः स्वकीयस्तनन्धयशब्दाकर्णनेऽपि कूपतटस्था रुदन्त्यस्तिष्ठन्ति, उरभ्री त्वपत्यस्नेहेनान्धा अपायमनपेक्ष्य तत्रैवात्मानं क्षिप्तवतीत्यतोऽपरपशुभ्यः स्वापत्ये मूर्च्छिता भवति, तथा तेऽपि पार्श्वस्थादयो विषयेषु मूर्च्छिता इति गाथार्थः ॥ १३ ॥

अथ तेषां दोषं दर्शयति—

अणागयमपस्संता, पच्चुप्पन्नगवेसगा । ते पच्छा परितप्पंती, खीणे आउम्मि जोव्वणे ॥ १४ ॥

व्याख्या—कामभोगेभ्यो ये न निवृत्तास्ते आगामिनि काले नरकादिषु महद्दुःखमपश्यन्तस्तथा 'प्रत्युत्पन्नं' वर्त्तमानमेव वैषयिकं सुखाभासं गवेषयन्तो नानाविधैरुपायैर्भोगान् प्रार्थयन्त पश्चाद् गते यौवने क्षीणे च स्वायुषि परितप्यन्ते—पश्चात्तापं विदधति, यतः—" कीरंति जाइजुव्वण-मएण अवियारिऊण कज्जाइं । वयपरिणामे सरियाइं, ताइं हियए खुडुक्कंति ॥ १ ॥ " किञ्च—" हतं मुष्टिभिराकाशं, तुषाणां खण्डनं कृतम् । यन्मया प्राप्य मानुष्यं, सदर्थे नादरः कृतः ॥ २ ॥ " [ इति गाथार्थः ॥ १४ ॥ ] ये तु द्राक्षामिव बालत्वेऽपि मधुरा विवेकिनस्तपश्चरणादि कुर्वन्ति न ते पश्चाच्छोचन्तीति दर्शयति—

जेहिं काले परिक्कंतं, न पच्छा परितप्पए । ते धीरा बंधणुम्मुका, नावकंखंति जीवियं ॥ १५ ॥

व्याख्या—यैर्विवेकिभिः ‘ काले ’ धर्मार्जनावसरे ‘ पराक्रान्तं ’ धर्मोद्यमो विहितस्ते ‘ पश्चात् ’ मरणकाले न परितप्यन्ते–न शोचन्ते, ये च बाल्यात्प्रभृति विषयेभ्यो निवृत्तास्ते धीरा ‘ बन्धनेन ’ स्नेहरागेण मुक्ता असंयमजीवितं नाऽवकांक्षन्ति, अथवा जीविते मरणे वा निस्पृहाः संयमोद्यममतयो भवन्तीति गाथार्थः ॥ १५ ॥ अन्यच्च—

**जहा नई वेयरणी, दुत्तरा इह संमता । एवं लोगंसि नारिओ, दुत्तरा अमईमया ॥ १६ ॥**

व्याख्या—यथा सर्वनदीभ्यो वैतरणी दुस्तरा ‘ सम्मता ’ सर्वजगत्प्रसिद्धा चैषा वार्ता, तथा लोके नारी निर्विवेकिभिः पुरुषैः दुस्तरा–दुर्लङ्घनीया ज्ञातव्येति गाथार्थः ॥ १६ ॥

**जेहिं नारीण संजोगा, पूयणा पिट्ठतो कता । सव्वमेयं निराकिच्चा, ते ठिया सुसमाहिए ॥ १७ ॥**

व्याख्या–यैर्महासत्त्वैर्नारीणां संयोगाः परित्यक्ताः, तथा तत्सङ्गार्थमात्मनः पूजना–वस्त्रालङ्कारमाल्यादिभिर्विभूषा ‘पृष्ठतः कृता’ परित्यक्ता ‘ सर्वमेतत् ’ स्त्रीसङ्गविभूषादिकं क्षुत्पिपासाद्यनुकूलप्रतिकूलोपसर्गादिकं च निराकृत्य, महापुरुषसेवितं पन्थानमाश्रिताः, सुसमाधिना–स्वस्थचित्तवृत्तिरूपेण व्यवस्थिता ज्ञेया इति गाथार्थः ॥ १७ ॥ परीषहजयस्य फलमाह—

**एए ओघं तरिस्संति, समुद्दं ववहारिणो । जत्थ पाणा विसन्नासि, किच्चंति सयकम्मुणा ॥ १८ ॥**

व्याख्या—एते अनन्तरोक्तपरीषहोपसर्गजेतारः ‘ ओघं ’ संसारं दुस्तरमपि तरिष्यन्ति, यथा व्यवहारिणो यानपात्रेण समुद्रं तरन्ति, ‘ यत्र ’ भावौघे–संसारसागरे प्राणिनः स्त्रीविषयसङ्गाद्विषण्णाः सन्तः ‘ कृत्यन्ते ’ छिद्यन्ते स्वकृतेन

पापकर्मणा असातावेदनीयोदयरूपेणेति गाथार्थः ॥ १८ ॥

तं च भिक्खू परिन्नाय, सुव्वते समिते चरे । मुसावायं च वज्जिज्जा—ऽदिन्नादाणं च वोसिरे ॥ १९ ॥

व्याख्या—स च भिक्षुः संयमवान् एतत् पूर्वोक्तं वैतरणीनदीवद्दुस्तरा नार्यो यैः परित्यक्तास्ते समाधिस्थाः संसारं तरन्ति, अन्ये परीषहपराजिताः स्वकृतेन कर्मणा पीड्यन्ते, इत्यादि सर्वं ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया परिहरन् चरेत्–संयमानुष्ठानं विदध्यात् । कथम्भूतो भिक्षुः ? 'सुव्रतः' पञ्चमहाव्रतयुक्तः समितः पञ्चसमितिभिः, एवंविधः संयमानुष्ठानं विदध्यात्, मृषावादं वर्जयेत् । अदत्तादानं–दन्तशोधनमात्रमप्यदत्तं न गृह्णीयात् । एवं मैथुनपरिग्रहावपि त्यजन् संयमानुष्ठानं कुर्यादिति गाथार्थः ॥ १९ ॥ अथापरव्रतानां वृत्तिकल्पत्वादहिंसायाः प्राधान्यख्यापनार्थमाह—

उड्ढमहे तिरियं वा, जे केइ तसथावरा । सव्वत्थ विरयं कुज्जा, संतिनिव्वाणमाहियं ॥ २० ॥

व्याख्या—ऊर्ध्वमधस्तिर्यक् सर्वलोके ये केचन त्रसाः स्थावराश्च जन्तवः सन्ति, तेषां सर्वेषां विरतिं कुर्यान्मनोवाक्कायैः करणकारणाऽनुमतिभिश्च प्राणातिपातविरतिं कुर्यात् । शान्तिरिति शान्तिकर्म एतदेव निर्वाणमप्येतदाख्यातं यत्सर्वप्राणिनां प्राणरक्षणमिति गाथार्थः ॥ २० ॥ समस्ताऽध्ययनार्थोपसंहारार्थमाह—

इमं च धम्ममादाय, कासवेण पवेइयं । कुज्जा भिक्खू गिलाणस्स, अगिलाए समाहितं ॥ २१ ॥

व्याख्या—इमं 'काश्यपेन' श्रीमहावीरेण 'प्रवेदितं' कथितं धर्ममादाय–गृहीत्वा भिक्षुर्ग्लानस्य वैयावृत्त्यं अग्ला-

[नतया]नेन (?) कुर्यात् । आत्मना समाधिं मन्यमानः धन्योऽहं यत् साधोर्वैयावृत्त्यं करोमि, कृतकृत्योऽहमिति मन्यमानो वैयावृत्त्यं कुर्यादिति गाथार्थः ॥ २१ ॥

**संखाय पेसलं धम्मं, दिट्ठिमं परिनिव्वुडे। उवसग्गेऽहियासित्ता, आमोक्खाए परिव्वएज्जासि त्ति बेमि ॥**

व्याख्या—सम्यक् ज्ञात्वा स्वसंमत्या जातिस्मरणादिना अन्यतो वा श्रुत्वा 'पेशलं' सुकुमारं धर्मं श्रुतचारित्रात्मकं श्रुत्वा ज्ञात्वा 'दृष्टिमान्' सम्यग्दर्शनी परिनिर्वृतः—कषायपरित्यागाच्छीतीभूतः उपसर्गानधिसह्य आमोक्षं यावत् परिव्रजेत् । संयमानुष्ठाने गच्छेदितिः परिसमाप्त्यर्थे, ब्रवीमीति पूर्ववत् ।

इति श्रीपरमसुविहितखरतरगच्छविभूषणमहोपाध्याय-श्रीमत्साधुरङ्ग-गणिवरगुम्फितायां श्रीसूत्रकृताङ्गदीपिकाया-मुपसर्गपरिज्ञायाश्चतुर्थोद्देशकः समाप्तस्तत्समाप्तौ च समाप्तमुपसर्गपरिज्ञाख्यं तृतीयमध्ययनम् ॥

अथ स्त्रीपरिज्ञाख्यं चतुर्थमारभ्यते ॥

प्राक्तने अध्ययने अनुकूलाः प्रतिकूला उपसर्गाः प्रतिपादितास्तेष्वपि स्त्रीपरीषहो दुर्जयः, अतस्तज्जयार्थमिदं स्त्रीपरीषहाध्ययनं प्रारभ्यते । तत्रेयमादिगाथा ॥

**जे मायरं च पियरं च, विप्पजहाय पुव्वसंजोगं । एगे सहिते चरिस्सामि, आरतमेहुणो विवित्तेसी ॥ १ ॥**

व्याख्या—यो भिक्षुर्मातापित्रादीनां पूर्वसंयोगं श्वशुरादीनां च पश्चात् संयोगं त्यक्त्वा, ज्ञानदर्शनचारित्रसहितः संयमं पालयिष्ये, एवं कृतप्रतिज्ञः चरिष्यामि, कथम्भूतो भिक्षुः—'आरतमेहुणो' विरतमैथुनः 'विवित्तेसी' स्त्रीपशुपण्डकरहितोपाश्रयं गवेषयन् विचरतीति गाथार्थः ॥ १ ॥

एवंविधस्यापि साधोरविवेकिस्त्रीजनाद्यद्भवति, तदाह ।

**सुहुमेणं तं परक्कम्म, छन्नपएण इत्थिओ मंदा ।**
**उवायं पि ताउ जाणंसु, जहा लिस्संति भिक्खुणो एगे ॥ २ ॥**

व्याख्या—'तं' महापुरुषं साधुं 'सूक्ष्मेण' अपरकार्यमिषेण 'छन्नपदेन' छद्मना—कपटजालेन 'पराक्रम्य' तत्समीपमागत्य, स्त्रियो नानाविधकपटशतपूरिताः साधुसमीपमागत्य संयमाद् ध्वंसयन्ति । 'मन्दा' मायाविन्यः उपायमपि जानन्ति येनोपायेन साधुः संयमाद् भ्रश्यति । एवंविधाः स्त्रियः हावभावविब्बोकवत्य उपसाधुमागत्य उपविशन्ति, तथा

भाषन्ते मायाप्रधाना विलासवचनानि, यथा मागधिकावचनैः कूलवालकवत्साधुः संयमाद्भ्रंशमुपयातीति गाथार्थः ॥ २ ॥

अथ तानेव सूक्ष्मविप्रतारणोपायान् दर्शयितुमाह—

पासे भिसं णिसीयंति, अभिक्खणं पोसवत्थं परिहिंति ।
कायं अहे वि दंसंति, बाहुमुद्धट्टु कक्खमणुव्वजे ॥ ३ ॥

व्याख्या—विश्रम्भमुत्पादनार्थं पार्श्वे समागत्य निषीदन्ति। साधुप्रतारणार्थं + परिधानं शिथिलीकृत्य पुनर्निबध्नन्ति। तथा अधःकायमूर्वादिकमनङ्गोद्दीपनाय दर्शयन्ति-प्रकटयन्ति। तथा 'बाहुमुद्धृत्य' कक्षामादर्श्य अनुकूलं साध्वभिमुखं व्रजेदिति गाथार्थः ॥ ३ ॥

सयणासणेहिं जोग्गेहिं, इत्थीओ एगया निमंतंति। एताणि चेव से जाणे, पासाणि विरूवरूवाणि ॥४॥

व्याख्या—काचित् स्त्री शयनासनैः एकदा सस्नेहवचनैर्निमन्त्रयति, तदा स साधुः तानि शयनासनानि 'विरूपरूपं' नानाप्रकारं 'पाशं' बन्धनस्थानं जानाति, यद्यत्र एतद्वचनैरुपविष्टस्तदा पाशे पतित एवेति चिन्तयतीति गाथार्थः ॥ ४ ॥

नो तासु चक्खुं संधिज्जा, नो विय साहसं समभिजाणे। णो सहियंपि विहरेज्जा, एवमप्पा सुरक्खिओ होज्जा॥

व्याख्या—साधुर्नो तासु स्त्रीषु चक्षुः सन्धयेत्—न तासु सम्मुखं विलोकयेत्—न तद्दृष्टौ दृष्टिं निवेशयेत् न च साहसम-

+ 'अभीक्ष्णं' अनवरत 'पोषवस्त्रं'।

कार्यकरणादि समनुजानीयात्—अकार्यकरणं न प्रतिपद्यते, तथा नैव स्त्रीभिः सार्द्धं ग्रामादौ विहरेत्—न ताभिः सार्द्धं विविक्तासनो भवेत् । एवं स्त्रीसङ्गवर्जनेनात्मा सर्वापायस्थानेभ्यः सुरक्षितो भवतीति गाथार्थः ॥ ५ ॥

आमंतिय ओसविया, भिक्खुं आयसा निमंतंति । एताणि चेव से जाणे, सद्दाणि विरूवरूवाणि ॥६॥

व्याख्या—स्त्रियः साधुमामन्त्रयन्ति, यथाहममुकवेलायामागमिष्यामि, इत्येवं सङ्केतं ग्राहयित्वा, ओसवियत्ति संस्थाप्य—उच्चावचैर्विश्रम्भजनकैरालापैर्विश्वास्य आत्मोपभोगाय साधुं निमन्त्रयन्ति । यदि वा साधोर्भयापहरणार्थं कथयन्ति, नहि मद्भर्त्तुस्त्वया कापि शङ्का विधेया, तत्संमतैवेहागतास्मि, त्वया निर्भीकेन भाव्यं, इत्यादिवचोभिर्विश्रम्भमुत्पादयन्ति, तत्र यत्किञ्चिल्लघु वा महद्वा कार्यमुत्पद्यते तत्राहं नियोजनीया, मत्वं साधयिष्यामि । एवं प्रलोभयन्ति, स चावगततत्त्वो भिक्षुरेतान् विरूपरूपान् शब्दादीन् विषयान् ज्ञपरिज्ञया जानीयाद्यथैते शब्दादयो विषयाः दुर्गतिगमनैकहेतवः, इत्येनमवबुध्य प्रत्याख्यानपरिज्ञया परिहरेदिति गाथार्थः ॥ ६ ॥ तथा—

मणबंधणेहिं णेगेहिं, कलुणविणीयमुवगसित्ताणं । अदु मंजुलाइं भासंति, आणवयंति भिन्नकहाहिं ॥

व्याख्या—मनसो बन्धनभूतानि मनोबन्धनानि—मञ्जुलालापस्निग्धावलोकनाङ्गप्रत्यङ्गप्रकटनादीनि, तैस्तथा करुणालापविनयपूर्वकं उपसंश्लिष्य—समीपमागत्य, अथवा मञ्जुलानि—पेशलानि विश्रम्भकारीणि भाषन्ते तथा भिन्नकथाभीरहस्यालापैः साधोश्चित्तमादाय अकार्यकरणं प्रत्याज्ञापयन्ति, कर्मकरवदाज्ञां कारयन्तीति गाथार्थः ॥ ७ ॥

**सीहं जहा व कुणिमेणं, निब्भयमेगचरं ति पासेणं। एवं इत्थियाउ बंधंति, संवुडमेगतियं अणगारं ॥८॥**

व्याख्या—यथा बन्धनविधिज्ञाः सिंहं मासादिना प्रलोभ्य निर्भयत्वादेकचरं पाशेन-गलयन्त्रादिना बध्नन्ति । बध्वा च बहुप्रकारं कदर्थयन्ति । एवं स्त्रियोऽपि 'एगतियं' एकं कञ्चन तथाविधमनगारं मञ्जुलभाषणादिभिः संवृतमपि बध्नन्ति, असंवृतस्य पुनः किं वाच्यमिति गाथार्थः ॥ ८ ॥

**अह तत्थ पुणो नमयंति, रहकारो व णेमि आणुपुव्वीए। बद्धे मिए व पासेणं, फंदंतेणं न मुच्चए ताहे ।**

व्याख्या—यथा 'रथकारो' सूत्रधारः नेमिकाष्ठं चक्रबाह्यं भ्रमिरूपं आनुपूर्व्या नामयति एवं ताः स्त्रियोऽपि साधुं स्वाभिप्रेतवस्तुनि नमयन्ति-स्वकार्ये प्रवर्त्तयन्ति, स च साधुर्मृगवत्पाशबद्धो मोक्षार्थं प्रयत्नं कुर्वन्नपि न मुच्यते इति गाथार्थः ॥९॥

**अह सेऽणुतप्पती पछा, भोच्चा पायसं व विसमिस्सं । एवं विवेगमायाय, संवासो न कप्पए दविए ॥**

व्याख्या—स साधुः स्त्रीपाशे पतितः सन् पश्चात्तापं करोति, यो गृहवासे पतितस्तस्यैतत्स्तोकतरं, स्त्रीपाशे पतितानां किञ्चित् घनतरं विलोक्यते एवं अनुतप्यते, यथा कश्चित् विषमिश्रितं पायसं भुक्त्वा पश्चादनुतप्यते, किमिति मया मन्दबुद्धिना विषमिश्रितमिदं बुभुजे ?, तथा साधुरपि स्ववशं नीतः कर्मकरवदाज्ञां ग्राहितः ऐहिकामुष्मिकभ्रष्टः अहर्निशं तदावर्जनव्याकुलितमतिः परितप्यते । अथ तेन विवेकमादाय स्त्रीभिः सार्द्धं संवासोऽवश्यं विवेकिनामपि सदनुष्ठानविघातकारीति मत्वा परिहार्यः । 'दविए' मुक्तिगमनयोग्यः साधुरिति गाथार्थः ॥ १० ॥

तम्हा उ वज्जए इत्थी, विसलित्तं व कंटगं नच्चा । ओए कुलाणि वसवत्ती, आघाति ण से वि निग्गंथे ॥११॥

व्याख्या—यस्माद्विपाककटुकाः स्त्रियस्तस्माच्चा विपलिप्तकण्टकवद्दूरतस्त्यजेत् । यथा विषकण्टको भग्नः सन्ननर्थं जनयति तथा स्त्रियोऽप्यनर्थहेतव इति मत्वा दूरतस्त्यजेत् । तथा ओज–एकोऽद्वितीयः मन् कुलानि–गृहिणां गृहाणि गत्वा स्त्रीवशवर्त्ती अवेलायां धर्मकथां करोति, सोऽपि न निर्ग्रन्थः–निपिद्धाचरणसेवनेन न सम्यक् प्रव्रजितः, कदाचित् कारणे धर्मोपदेशं दातुं याति तदा द्वितीयं साधुं सहायं कृत्वा याति, तदभावे एकाक्यपि बहुपरिवारवृतायाः पुरः स्त्रीनिन्दाविषयजुगुप्साप्रधानं वैराग्योत्पादकं विधिना धर्मं कथयेदपीति गाथार्थः ॥ ११ ॥

जे एयं उंछं अणुगिद्धा, अन्नयरा हुंति कुसीलाणं । सुतवस्सिए वि से भिक्खू, नो विहरे सह णमित्थीसु ।

व्याख्या—ये भिक्षवः एतत् 'उञ्छ' गर्हणीयं स्त्रीसम्बन्धादिकं एकाकिनी स्त्रीपुरो धर्मकथनादिकं वा, तं प्रति ये 'गृद्धा' आसक्तास्ते 'कुशीलानां' पार्श्वस्थादिपञ्चप्रकाराणां मध्ये अन्यतरा भवन्ति, तेऽपि पार्श्वस्थादिमध्ये गण्यन्ते । अतः 'सुतपस्व्यपि' महातपा अपि स्त्रीभिः सह न विहरेत्, ज्वलिताङ्गारवद्दूरतः स्त्रियो वर्जयेत्, स इति भिक्षुः, णमिति वाक्यालङ्कारे इति गाथार्थः ॥ १२ ॥

अवि धूयराहिं सुण्हाहिं, धातीहिं अदुव दासीहिं । महतीहिं वा कुमारीहिं, संथवं न कूज्जा से अणगारे ॥१३

व्याख्या—'दुहितृभिरपि' सुताभिः, सह न विहरेत्, तथा स्नुपाभिः, तथा पञ्चप्रकाराः धात्र्यो जननीकल्पास्ताभिश्च

साकमेकान्ते न स्थेयं। किं बहुना १-या 'दास्यः' कर्मकर्यस्ताभिः सह संसर्गं परिहरेत्। महतीभिर्लघ्वीभिर्वा कुमारीभिः सह सम्पर्कं सोऽनगारो न कुर्यात् "मात्रा स्वस्रा दुहित्रा वा, न विविक्तासनो भवेत्। बलवानिन्द्रियग्रामः, पण्डितोऽप्यत्र मुह्यति ॥ १ ॥" "जइ वि न से वयभंगो, तहवि कुसंगाओ होइ अववाओ। दोस-निहालणनिउणो, सव्वो पायं जणो जेण ॥ २ ॥" तेन तत्संसर्गः सर्वथा त्याज्य एवेति गाथार्थः ॥ १३ ॥

अदु णाइणं च सुहीणं वा, अप्पियं दट्ठु एगता होंति। गिद्धा सत्ता कामेहिं, रक्खणपोसणे मणुस्सोसि? ॥१४

व्याख्या–एकान्ते योषिता सार्द्धमनगारमेकदा दृष्ट्वा ज्ञातीनां सुहृदां च मनसि अप्रियं भवति, एवम्भूतो मलिनांशुको भिक्षा-भोज्यप्यनया सह निर्ह्रीकस्तिष्ठति "मुण्डं शिरो वदनमेतदनिष्टगन्धं, भिक्षाटनेन भरणं च हतोदरस्य। गात्रं मलेन मलिनं गतसर्वशोभं, चित्रं तथापि मनसो मदनेऽस्ति वाँछा ॥१॥" ततश्च तं भिक्षुं योषिद्वदनावलोकनासक्तं दृष्ट्वा एवं भाषन्ते–भो भिक्षो! त्वमस्याः स्त्रियो[रक्षणपोषणे] मनुष्योऽसि–पतिरसि? यत्त्वमनया सार्द्धं विमुक्ताऽन्यव्यापारस्तिष्ठसि एषापि त्वया सार्द्धमेकाकिन्यहर्निशं परित्यक्तसर्वव्यापारा तिष्ठति। एवं लोकनिन्दा स्यादिति गाथार्थः ॥१४॥ किञ्चान्यत्–

समणंपि दट्ठुदासीणं, तत्थ वि ताव एगे कुप्पंति। अदुवा भोयणेहिं णत्थेहिं, इत्थीदोससंकिणो होंति ॥१५

व्याख्या—श्रमणं उदासीनमपि–रागद्वेषविगमान्मध्यस्थमपि [रहसि] स्त्रिया सहालापं कुर्वाणं दृष्ट्वा एके तावत्

१ यद्यपि न तस्य व्रतभङ्गस्तथापि कुसङ्गाद्भवत्यपवादः। दोषनिभालननिपुणः सर्वः प्रायो जनो यस्मात् ॥ १ ॥

कुप्यन्ति, किं पुनः कृतविकारमिति, अथवा मनस्याशङ्कामानयन्ति–नानाविधैर्भोजनैर्न्यस्तैः–साध्वर्थमुपकल्पितैरियमेनमुपचरति, तेनायं भिक्षुः सदाऽत्रैवायाति, एषापि न सुशीला, या एनं विविधाहारैः पोषयति, एषाप्यनेन स्वायत्तीकृतास्ति, एवं शङ्केरन् । अथवा श्वशुरादीनां अर्द्धपरिवेषिते भोज्ये साध्वागमने सा वधूः समाकुलीभूताऽन्यस्मिन् दातव्येऽन्यत्परिवेषयति, तथापि स्त्रीदोषाशङ्किनो भवन्ति, ×यथेयं दुःशीलेति गाथार्थः ॥ १५ ॥ किञ्च—

**कुव्वंति संथवं ताहिं, पब्भट्ठा समाहिजोगेहिं । तम्हा समणा ण समेंति, आतहिताए सन्निसेज्जाओ ॥१६**

व्याख्या–स्त्रीसंसर्गं कुर्वन्ति ये ते श्रमणाः समाधि[योगेभ्यः]–शुद्धमार्गतो प्रभ्रष्टाः, एतावता स्त्रीसंसर्गकारिणः समाधियोगेभ्यो भ्रश्यन्त एव, एवं ज्ञात्वा श्रमणः आत्महिताय स्त्रिया सह निषद्या–आसनादिपरिचयं न करोतीति गाथार्थः ॥ १६ ॥

**बहवे गिहाइं अवहट्टु, मिस्सीभावं पत्थुया एगे । धुवमग्गमेव पवयंती, वायावीरियं कुसीलाणं ॥१७॥**

व्याख्या—बहवो मनुष्याः गृहं त्यक्त्वा चारित्रं प्रतिपद्य मोहोदयात् पुनरपि मिश्रीभावं प्रपद्यन्ते, द्रव्यलिङ्गिनो भवन्ति, न गृहिणो न वा प्रव्रजिता इति, तदेवम्भूता अपि एवं भाषन्ते, यथाऽयमेवास्मदारब्धो मध्यमः पन्था एव श्रेयान्, अस्मिन् पथि प्रवृत्तानां प्रव्रज्या सुखेन निर्वहति । तथाहि–ते द्रव्यलिङ्गधारिणो वाङ्मात्रेणैव ' वयं प्रव्रजिता ' इति ब्रुवते, न तु

× " यथा कयाचिद्वध्वा ग्राममध्यप्रारब्धनटप्रेक्षणगतचित्तया पतिश्वशुरयोर्भोजनार्थमुपविष्टयोस्तण्डुला इति कृत्वा राइकाः संस्कृत्य दत्ताः । ततश्चासौ श्वशुरेणोपलक्षिता पत्या क्रुद्धेन ताडिताऽन्यगतचित्तेत्याशङ्कया गृहान्निर्द्धाटितेति " हर्ष० ।

तेषां शीतलविहारिणां सदनुष्ठानकृतं वीर्यमस्ति । 'ध्रुवमार्गो' मोक्षः संयमो वा अस्मदीयादेव मार्गात् इति कुशीलानां वाचा कृतं वीर्यं नानुष्ठानकृतमिति गाथार्थः ॥ १७ ॥

**सुद्धं रवइ परिसाए, अह रहस्संमि दुक्कडं करेति । जाणंति य णं तहा विया, मायल्ले महासढेऽयं ति ॥१८**

व्याख्या-सः कुशीलः पर्षन्मध्ये आत्मानं शुद्धं 'रौति' भाषते, अथ रहस्येकान्ते 'दुष्कृतं' अनाचारं करोति । तस्य तदनाचारं गोपायतोऽपि जानन्ति, [तथाविदाः] 'कोविदाः' इङ्गिताकारकुशला निपुणाः, स प्रच्छन्नाकार्यकारी त्वेवं जानाति-न मां कोऽपि वेत्ति, रागान्ध एवं मन्यते । एतदुक्तं भवति-यद्यप्यपरः कश्चित्तदकर्त्तव्यं न वेत्ति, प्रच्छन्नकृतत्वात्, तथापि सर्वज्ञा विदन्ति । असौ मायावी महाशठश्चायं, इति सर्वज्ञास्तत्कृतमकर्त्तव्यं च प्रच्छन्नकृतमपि जानन्तीति । अथवा आत्मकृतमनाचारमात्मा जानाति यन्मयैतदकर्त्तव्यं कृतमिति । अथ च ज्ञानिनो वा सर्वे विदन्ति, [ तथा चोक्तं ] "नं य लोणं लोणिज्जई, ण य तुप्पिज्जइ घयं व तिल्लं वा । किह सक्को ? वंचेउं, अत्ता अणुहूयऽकल्लाणो ॥ १ ॥" इति वचनात् । प्रच्छन्न कृतमकार्यं आत्मैव जानाति सर्वज्ञो वेति गाथार्थः ॥ १८ ॥ किञ्चान्यत्—

**सयं दुक्कडं च न वदति, आइट्ठो वि पकत्थती बाले । वेयाणुवीइ मा कासी, चोइज्जंतो गिलाइ से भुज्जो ॥१९**

व्याख्या—स प्रच्छन्नाकार्यकारी अपरेणाऽऽचार्यादिना वा पृष्टो न वदति यथैतदकृत्यं मया कृतमिति । स च प्रच्छन्नकृत-

१ न च लवणं लवणीयते न च म्रक्ष्यते घृतं वा तैलं वा । कथं शक्यो ? वञ्चयितुं आत्माऽनुभूताकल्याणः ॥ १

पापो मायावी परेण 'आदिष्टः' शिक्षितः सन् 'बालो' मूढः आत्मानं श्लाघमानोऽकार्यमपलपति, वदति च यथा—नाहमीदृशमकार्यं करिष्ये, इत्येवं धार्ष्ट्यात्प्रकत्थते । तथा पुनरपि केनापि हितेन प्रोक्तं—भो महाभाग ! 'वेयाणुवीइ' त्ति वेदः-पुंवेदोदयस्तस्यानुवीचिरानुकूल्यं—मैथुनाभिलापं मा कार्षीरिति, एवं केनापि शिक्षिते 'ग्लायति' ग्लानिमुपयाति, × शृणोत्यपि न, मर्मविद्धो वा सखेदमिव भाषते इति गाथार्थः ॥ १९ ॥

**ऊसिया वि इत्थिपोसेसु, पुरिसा इत्थिवेदखेदन्ना । पन्नासमन्निया वेगे, नारीणं वसं उवकसंति ॥२०॥**

व्याख्या—ये पुरुषाः स्त्रीपोषकानुष्ठानविशेषेषु उषिताः भुक्तभोगिनोऽपि 'स्त्रीवेदखेदज्ञाः' स्त्रीवेदो मायाप्रधानः, स्त्रियो हि मायावत्य अप्रधानभूताः, एवं जानन्तोऽपि 'प्रज्ञासमन्विता' बुद्धिवन्तोऽपि [ एके ] पुरुषाः मोहोदयात् स्त्रीणां वशे वर्त्तन्ते । किमुक्तं भवति ? एके पुरुषाः बहुशो भुक्तभोगा अपि 'स्त्रियो हि संसारहेतवः कारणं परमं' एवं जानन्तोऽपि मोहोदयात्पुनरपि स्त्रीणां वशे पतन्ति, ताः यत्कथयन्ति तत् किङ्करा इव कुर्वन्ति इति गाथार्थः ॥ २० ॥

अथेहलोकेऽपि स्त्रीसम्बन्धविपाकं दर्शयितुमाह—

**अवि हत्थपायछेदाय, अदुवा वद्धमंसउक्कत्ते। अवि तेयसाऽभितावणाइं, तच्छियखारसिंचणाइं च ॥२१**

व्याख्या—कुशीलिनः पुरुषाः हस्तपादच्छेदादिकं प्राप्नुवन्ति, अथवा चर्ममांसोत्कर्त्तनमपि तैजसा—ऽग्निनाऽभितापनानि-

× श्रुतमश्रुतं विधत्त इति भावः, फः ।

स्त्रीसम्बन्धिभिः पुरुषैरुत्तेजितैः राजपुरुषैर्भटित्रिकाण्यपि क्रियन्ते पारदारिकास्तथा वाम्यादिना तक्षयित्वा क्षारोदकसेचनानि च प्रापयन्तीति गाथार्थः ॥ २१ ॥ अपि च—

**अदु कण्णनासच्छेज्जं, कंठच्छेदणं तितिक्खंती । एत्थ पावसंतत्ता, न य बिंति पुणो न काहिंति ॥२२**

व्याख्या—पारदारिकाः स्वकृतदुष्कृतेन कर्णनासाछेदादिकं प्राप्नुवन्ति, दुस्सहां विडम्बनामस्मिन्नेव जन्मनि स्वकृतपापकर्मोदयाः सन्तप्ता नरकातिरिक्तां वेदनामनुभवन्ति, न पुनरेवंविधमकृत्यं न करिष्याम इत्येवं विरतिं कुर्वन्ति, गुरुकर्म्माणो हि एवंविधां विडम्बनां प्राप्नुवन्तोऽपि न विरतिं प्रतिपद्यन्त इति गाथार्थः ॥ २२ ॥

**सुतमेयमेवमेगेसिं, इत्थीवेदेत्ति हु सुअक्खायं । एवं पिता वदित्ताणं, अदुवा कम्मुणा अवकरिंति ॥२३**

व्याख्या—एतत् पूर्वोक्तं स्त्रीसङ्गतिफलं+ गुरुसमीपे श्रुतं लोकतो वा यत् स्त्रियो निर्विवेकिन्यो निस्त्रपा दुर्विज्ञेयचित्ताः

---

+ " श्रुत-मुपलब्धं गुर्वादेस्सकाशाल्लोकतो वा एतदिति-यत्पूर्वमाख्यातं, तद्यथा-दुर्विज्ञेयं स्त्रीणां चित्तं, दारुणः स्त्रीसम्बन्धविपाकस्तथा चपलस्वभावाः स्त्रियो दुष्प्रतिचारा अदीर्घप्रेक्षिण्यः प्रकृत्या लघ्व्यो भवन्त्यात्मगर्विताश्चेत्येवमेकेषां स्वाख्यातं भवति, लोकश्रुतिपरम्परया चिरन्तनाख्यासु वा परिज्ञातं भवति, तथा स्त्रियं यथावस्थितस्वभावतस्तत्सबन्धविपाकतश्च 'वेदयति' ज्ञापयतीति स्त्रीवेदो-वैशिकादिकं स्त्रीस्वभावाविर्भावक शास्त्रमिति । × × × × किञ्च-अकार्यमहं न करिष्यामीत्येवमुक्त्वाऽपि वाचा ' अदुव 'त्ति तथापि ' कर्मणा ' क्रिययाऽपकुर्वन्तीति-विरूपमाचरन्ति । यदि वाऽग्रतः प्रतिपद्यापि शास्तुरेवापकुर्वन्तीति ।" बृहद्वृत्तौ ।

आत्मगर्विताश्च, अथवा चिरन्तनाऽऽख्यायिकासु वा परिज्ञातं, इति ज्ञात्वाऽपि ये तत्र रज्यन्ते तत्र कर्मैव कारणमिति गाथार्थः ॥ एतस्याः गाथायाः सम्यगर्थो नावगतस्तेन सविस्तरो न लिखितोऽस्ति, क्षूणं किमपि न प्रकाश्यमिति ॥ २३ ॥

अथ सूत्रकार एव तत्स्वरूपमाविष्करणायाह—

**अन्न मणेण चिंतिंति, वाया अन्नं च कम्मुणा अन्नं । तम्हा न सद्दहे भिक्खू, बहुमायाओ इत्थिओ णच्चा ॥ २४ ॥**

व्याख्या—स्वभावेन स्त्री अन्यत् मनसि चिन्तयति, अन्यद्भाषते वचनेन कायेन चान्यदेव करोति, एवं वनिता मायाबहुला, अत एव भिक्षुस्तत्कृतां मायां न श्रद्दधाति, तद्वचसि न विश्वसिति, तद्वचो नाद्रियत इति गाथार्थः ॥ २४ ॥

किञ्चान्यत्—

**जुवती समणं बूया, विचित्तऽलंकारवत्थगाणि परिहित्ता ।**
**विरता चरिस्सऽहं लूहं, धम्ममाइक्ख णे भयंतारो ! ॥ २५ ॥**

व्याख्या—काचिद्युवती विचित्रालङ्कारवस्त्रादि परिधाय नवयौवनाऽभिरामा साधुसमीपमागत्य भाषते, भो भिक्षो ! विरक्ताऽहं गृहपाशात्, भर्त्ता मां नाद्रियते, यद्वा मत् प्रियो दुर्भगः अतो मे न रोचते, तस्मादहं विरक्ता तेन वाऽहं त्यक्ता, नालापयति मां प्रियवचनैः, अतो विरक्ता संसारात् । अहं धर्मार्थिनी 'रूक्षं' संयमं चरिष्यामि । धर्मं कथय भगवन् ! एवं मायाप्रपञ्चान्निकटवर्त्तिनी भूत्वा कूलवालकमिव साधुं धर्माद्भ्रंशयतीति गाथार्थः ॥ २५ ॥

**अदु सावियापवाएणं, अहमंसि साहम्मिणी तु समणाणं। जउकुंभे जहा उवजोई, संवासेवि उ विसीएज्जा॥**

व्याख्या—अथवा सा योषित् अमुना 'प्रवादेन' पाखण्डेन साधुं समेत्य वक्ति, यथाहं श्राविका साधूनां साधर्मिका, इत्यादिप्रपञ्चेन साधुं धर्माद् भ्रंशयति। यथा जातुपः कुम्भो उपज्योतिषो-ऽग्नेः समीपव्यवस्थितः-उपज्योतिवर्त्ती विलीयते, एवं योषितां संनिधाने विद्वानपि साधुर्धर्मानुष्ठानं प्रति विषीदेत, संयमात् शिथिलीभवतीति गाथार्थः ॥ २६ ॥

समीपवर्त्तिन्याः स्त्रियो दोषं प्रकाश्य अथ तत् संस्पर्शदोषं कथयति—

**जउकुंभे जोइ उवगूढे, आसुऽभितत्ते णासमुवयाति। एवित्थियाहिं अणगारा, संवासेण णासमुवयंति॥**

व्याख्या—यथा जातुपः कुम्भो अग्निनोपगूढो-ऽग्निनाऽभितप्तः क्षिप्रं नाशमुपयाति-विलीयते क्षिप्रमेव, एवं स्त्रीभिः सह संवसनेन-परिभोगेन अनगारा नाशमुपयान्ति। सर्वथा जातुपकुम्भवद्व्रतकाठिन्यं परित्यज्य संयमशरीराद्भ्रश्यन्तीति गाथार्थः ॥ २७ ॥ अपि च—

**कुव्वंति पावगं कम्मं, पुट्ठा वेगे एवमाहंसु। नोहं करेमि पावं ति, अंके साइणी ममेस त्ति ॥ २८ ॥**

व्याख्या—एकः कोऽपि मोहोदयेन 'अनाचारं' मैथुनं सेवते, ततः केनापि गुर्वादिना पृष्टो भाषते, नाऽहमीदृग्विधमनाचारं सेवे, अहं तु कुलीनोऽस्मि, एषा तु मम दुहितृसमाना, एषा शिशुत्वेऽपि ममाङ्कशायिन्येवाभूत्, अधुनापि पूर्वपरिचयान्ममाङ्कमागत्य स्वपिति, परं नाहं प्राणात्ययेऽपि व्रतभङ्गं करोमीति गाथार्थः ॥ २८ ॥ किञ्च—

बालस्स मंदयं बितियं, जं च कडं अवजाणई भुज्जो । दुगुणं करेई से पावं, पूयणकामी विसण्णेसी ॥ २९ ॥

व्याख्या—'बालस्य' अज्ञानिनोऽविवेकिनः एतद् द्वितीयं 'मन्दत्वं' बालत्वं, एकं तावदकार्यकरणेन चतुर्थव्रतभङ्गः कृतः, द्वितीयं तदपलपनेन मृषावादः, तदेव दर्शयति—असदाचरणं कृत्वा अपरेण पृष्टोऽपलपति—नैतन्मया कृतं, एवं स कृतापलपनेन द्विगुणं पापं करोति, किमर्थमपलपति ? पूजासत्कारकामी सन्, मा लोके अवर्णवादः स्यादित्यकार्यं प्रच्छादयति, स एवम्भूतो विषण्णो—असंयमस्तदन्वेषीति गाथार्थः ॥ २९ ॥ किञ्चान्यत्—

संलोकणिज्जमणगारं, आयगयं निमंतणेणाहंसु । वत्थं वा तायि ! पायं वा, अन्नं पाणगं पडिग्गहे ॥३०॥

व्याख्या—'संलोकनीयं' सुन्दराकारं सुरूपमनगारं दृष्ट्वा काश्चन स्वैरिण्यो 'निमन्त्रणेन' निमन्त्रणापूर्वमेवमाहु—रुक्तवत्यः—अहो त्रायिन् ! वस्त्रपात्रादिकं येनकेनचिद्भवतः प्रयोजनं तदहं सर्वं सम्पादयिष्यामि, मद्गृहमागत्य प्रत्यहं प्राह्यमशनं पानकं भेषजादि, सर्वं भवते दास्यामीति गाथार्थः ॥ ३० ॥

नीवारमेयं बुज्झिज्जा, णो इच्छे अगारमागंतुं । बद्धे विसयपासेहिं, मोहमावज्जइ पुणो मंदे ॥३१॥ त्ति बेमि

व्याख्या—एतद्योषितां वस्त्रपात्रादिकृते निमन्त्रणं नीवारकल्पं 'बुध्येत्' जानीयात्, यथा 'नीवारेण' भक्ष्यविशेषेण शूकरादिर्वशमानीयते, एवं निमन्त्रणेन साधुरपि वशमानीयते । अथोत्तमसाधुरपि स्त्रीनिमन्त्रणं नीवारकल्पं ज्ञात्वा तद्गृहं गन्तुं नेच्छेत् । यदि तद्गृहे गच्छति तदा विषयपाशैर्बद्ध्यते, ततो मोहावर्त्ते पतति ततः स्नेहपाशं त्रोटयितुम-

समर्थो दुःखी स्याच्चित्तव्याकुलत्वमागच्छति। किंकर्त्तव्यतामूढो भवति, पौनःपुन्येन 'मन्दो' जडः। इतिः परिसमाप्तौ ब्रवीमीति पूर्ववत् ॥ ३१ ॥

॥ इति स्त्रीपरिज्ञायां प्रथमोद्देशकः समाप्तः ॥

॥ अथ द्वितीयः प्रारभ्यते ॥

**ओए सदा न रज्जेज्जा, भोगकामी पुणो विरज्जेज्जा। भोगे समणाण सुणेह, जह भुंजते भिक्खुणो एगे ॥१॥**

व्याख्या—सुसाधुः 'ओज' एकाकी, रागद्वेषरहितत्वात् 'सदा' सर्वकालमनर्थखनिषु वनितासु न रज्येत। तथा यदि कदाचिन्मोहोदयाद्भोगाभिलाषी स्यात्तथापि परलोके इहलोके च महापायपरिभीत्या पुनस्ताभ्यो विरज्येत, भोगाभिलाष्यपि ज्ञानाङ्कुशेन उत्पथान्मनोद्विरदं निवर्त्तयेत्। तथा श्रमणानामपि भोगा इत्येतच्छृणुत यूयं, गृहिणामपि विडम्बनाः प्रायाः भोगाः यतीनां तु किं वाच्यं? तथा भोगान् एके–श्रमणा अपुष्टधर्माणो विडम्बना प्रायान् भुञ्जते तथा शृणुत अग्रेतनोद्देशकगाथासूत्रेण वक्ष्यमाणेनेति गाथार्थः ॥ १ ॥

**अह तं तु भेदमावन्नं, मुच्छितं भिक्खुं काममतिवट्टं। पलिभिंदिया णं तो पच्छा, पादमुद्धत्तु मुद्धे पहणंति॥**

व्याख्या—अथ सा स्त्री 'तं' भिक्षुं 'भेदमापन्नं' चारित्राद्भ्रष्टं ज्ञात्वा 'कामगृद्धं' आत्मवशवर्त्तिनं ज्ञात्वा, इत्थमित्थं मया तवोपकृतं, मया लज्जाधर्मादीन् परित्यज्य तव जगुप्सनीयस्य आत्मा दत्तः, त्वं पुनरकिञ्चित्कर इत्यादि यदा

कुपिता सती भाषते तदा स विषयत्राहितः सन् तस्याः कुपितायाः प्रसादनार्थे पादयोर्निपतति, ततश्च सा एवं जानाति यदसौ वराकः कृष्णश्वेतप्रतिपत्ता मद्वशवर्त्ती, यदहं वच्मि तत्सर्वं प्रतिपद्यते । ततश्च सा(ताः) आत्मवशगं ज्ञात्वा, वामपादमुद्धृत्य मूर्ध्नि ' प्रघ्नन्ति ' ताडयन्ति । इत्यादि विडम्बनां दर्शयन्ति इति गाथार्थः ॥ २ ॥ अन्यच्च—

जइ केसि[या]ता णं मए भिक्खु !, णो विहरे सह णमित्थीए ।
केसाणि वि हु लुंचिस्सं, नन्नत्थ मए चरिज्जासि ॥ ३ ॥

व्याख्या—यदि काचित् स्त्री एवं मायावचनं भाषते, भो श्रमण ! यदि त्वं मया केशवत्या सह विहरन् 'शङ्कसे' लज्जसे तर्ह्यहं केशानपनयिष्यामि । यत्त्वं कथयिष्यसि तदहं सर्वं करिष्यामि परमेतत् प्रार्थये-मया विना न क्वापि त्वया विहर्त्तव्यं, अहमपि त्वदायत्तास्मि, इत्यादिवचनैर्विश्वासमुत्पाद्य कपटनाटकनायिकास्तास्तं साधुमात्मवशगं ज्ञात्वा कर्मकरव्यापारैरपवादैः 'प्रेरयन्ति' नियोजयन्ति ॥ ३ ॥ तानेव दर्शयितुमाह—

अह णं से होई उवलद्धो, तो पेसिंति तहाभूतेहिं । अलाउच्छेदं पेहाहि, वग्गुफलाइं आहराहि त्ति ॥ ४ ॥

व्याख्या—अथ स भिक्षुस्ताभिरुपलब्धः यदसावस्माकं कर्मकरप्रायो जातः, ततश्च ताः तथाभूतैः कर्मकरव्यापारैः प्रेषयन्ति, एतावता दासवद्भ्रामयन्ति । कर्मकरव्यापारान् दर्शयितुमाह 'लाउ'त्ति अलाबुछेदनयोग्यं शस्त्रं 'प्रेक्षस्व' निरूपय-कुतोऽप्यानय, येन अलाबुपात्रकमुखं समारयामः, अथवा ' वग्गूनि ' फलानि-नालिकेरादीनि ' आहराहि 'त्ति आनय,

अथवा वाक्फलानि धर्मकथादिना लब्धानि वस्त्रादिलाभरूपाणि, तान्याहर—आनयेति गाथार्थः ॥ ४ ॥ अपि च—

**दारूणि सागपागाए, पज्जोओ वा भविस्सती राओ। पाताणि य मे रयाहि, एहि ता मे पिट्ठओ मद्दे ॥५**

व्याख्या—' दारूणि ' इन्धनान्यानय येन शाकपाकः क्रियते, अथवेन्धनान्यानय येनाग्निः प्रज्वाल्यते रात्रावुद्द्योतः स्यात्। तथा मदीयानि पात्राणि रञ्जय लेपादिना, येनाहारं सुखेन आनये+, तथेहागच्छ, उपविश, मदीयमङ्गं दुष्यति तेन संवाहय पृष्ठिं, इत्यादिष्वधर्मेषु कार्येषु नियोजयन्तीति गाथार्थः ॥ ५ ॥

**वत्थाणि य मे पडिलेहेहि, अन्नं पाणमाहराहि त्ति। गंधं च रओहरणं च, कासवगं मे समणुजाणाहि। ६।**

व्याख्या—वस्त्राणि मम जीर्णानि जातानि, अन्यानि नवीनानि ' प्रतिलेखय ' गवेषय, यदि वा मलिनानि रजकस्य समर्पय। तथा अन्नपानकादि ' आहराहि ' आनय, गन्धं कर्पूराद्यानय, रजोहरणमानय, लोचं कारयितुमहमशक्ता, ततो मस्तकमुण्डनाय नापितमानयेति गाथार्थः ॥ ६ ॥

**अदु अंजणिं अलंकारं, कुक्कयं च मे पयच्छाहि। लोद्धं च लोद्धकुसुमं च, वेणुपलासियं च गुलियं च ॥७॥**

व्याख्या—अथवा प्रकारान्तरेण दर्शयति—पूर्वं यतिवेषोपकरणान्यधिकृत्य दर्शितं, अथ गृहस्थोपकरणमधिकृत्य कथ्यते। 'अञ्जनिकां' कज्जलभाजनमानय, तथाऽलङ्कारं वा कटककुण्डलकेयूराद्यानय, 'कुक्कयं' खुंखुणकं× 'मे' मम प्रयच्छ, येनाऽहं

---

+ " अथवा ( मम ) पादौ रञ्जयालक्तकादिना " इति हर्ष०। × आभरणविशेषम्।

विभूषिता सती वीणां वादयामि त्वत्पुरः-तवाग्रतः, तथा लोध्रं लोध्रकुसुमं च, तथा 'वेणुपलासियं' वंशमया काष्ठिका, सा दन्तैर्वामहस्तेन [ वा ] प्रगृह्य दक्षिणहस्तेन वीणावद्वाद्यते । तथौषधगुटिकां [ तथाभूतां ] आनय, येनाऽहमविनष्टयौवना सुखेन तिष्ठामीति गाथार्थः ॥ ७ ॥

कुट्ठं अगरं तगरं च, संपिट्ठं सम्मं उसीरेण । तेल्लं मुहभिंजाए, वेणुफलाइं संनिधाणाए ॥ ८ ॥

व्याख्या— कुट्ठं [ ति कुष्ठमुत्पलं ] अगरं तगरं चानय, सुगन्धिद्रव्यं, एतच्च ' उसीरेण ' वालकेन पिष्टं सुगन्धि भवति । तथा तैलं लोध्रकुङ्कुमादिना संस्कृतं मुखाऽभ्यंगाय आनय, तेन मुखमभ्यक्तं कान्तिमान् जायते । 'वेणुफलाइं'ति वंशकरण्डकपेटिकादीनि वस्त्रादेः संनिधानं-व्यवस्थापनं, तदर्थमानयेति गाथार्थः ॥ ८ ॥

नंदीचुण्णगाइं पाहराहि, छत्तोवाणहं च जाणाहि । सत्थं च सूवच्छेयाए, आनीलं च वत्थं रयावेहि ॥९॥

व्याख्या—नन्दीचूर्णं तु द्रव्यसंयोगनिष्पादित ओष्ठमृक्षणार्थं चूर्णविशेषस्तदानय, तथाऽऽतपे दृष्टितेजो रक्षणार्थं छत्रं तथा उपानहौ च ' अनुजानीहि ' आनय । तथा शस्त्रं चूल्हेत्रादि (?) पत्रशाकच्छेदनार्थं दात्रादि वा ढौकय । तथा वस्त्रं गुलिकादिना रञ्जय, यथाऽयं नीलं स्यात्, मञ्जिष्ठादिना वा रञ्जयेति गाथार्थः ॥ ९ ॥

सुफणिं च सागपागाए, आमलगाइं दगाहरणं च ।
तिलगकरणिमंजणसलागं, उसिणे विधूणयं विजाणाहि ॥ १० ॥

व्याख्या—'सुफणिं' स्थालीपिठरादिशाकपाकार्थमानय, आमलकानि स्नानार्थं पित्तोपशमाय [वा] अभ्यवहारार्थमानय, उदकाहरणं घटादिघृततैलाद्याहरणं सर्वं गृहोपस्कराद्यानय, तिलकः क्रियते यया सा तिलककरणी, दन्तमयी सुवर्णमयी वा शलाका, यया गोरोचनादियुक्तया तिलकः क्रियते। अञ्जनशलाका—रजतमयीशलाका अक्ष्णो रञ्जनार्थमानय, तथा उष्णे तापनिवारणाय 'विधूनकं' व्यञ्जनकमानयेति गाथार्थः ॥ १० ॥

**संडासगं च फणिहं च, सीहलिपासगं च आणाहि। आदंसगं च पयच्छाहि, दंतपक्खालणं पवेसाहि ॥११॥**

व्याख्या—'सण्डाशिकं' नासिकाकेशोत्पाटनं 'फणिहं' केशसंयमनार्थं कङ्कतकं, तथा 'सीहलिपासगं'ति वेणीसंयमनार्थमूर्णामयं कङ्कणं, तमानय, 'आदर्शं' दर्पणं प्रयच्छ 'दंतपक्खालणं' दन्तपावनं मदन्तिके प्रवेशयेति गाथार्थः ॥ ११ ॥

**पूयफलं तंबोलं, सूयं सुत्तगं च जाणाहि। कोसं च मोयमेहाए, सुप्पुक्खलगं च खारगालणं च ॥१२॥**

व्याख्या—पूगीफलं, ताम्बूलं, सूचीं तथा सूत्रं 'जानाहि' ददस्व। 'मोयमेहाए'त्ति 'मोचः' प्रश्रवणं—कायिका, रात्रौ प्रश्रवणार्थं वारकादिभाजनं (पाळो इति लोकविश्रुतं) आनय, बहिर्गन्तुमसमर्था रात्रौ भयादतो मम यथा बहिर्गमनं न भवति तथा कुरु। अन्यस्मिन्नप्यधमकार्ये नियोजयन्ति। सूर्पं उदूखलं तथा सार्जिकादेः क्षारस्य गालनकमित्येवमाद्युपकरणं सर्वमप्यानयेति गाथार्थः ॥ १२ ॥

**चंदालगं च करगं च, वच्चघरं च आउसो! खणाहि। सरवायं च जायाए, गोरहगं च सामणेराए ॥१३॥**

व्याख्या—' चन्दालगं ' देवताद्यर्चनार्थं ताम्रमयं भाजनं, तथा ' करको ' जलाधारो मदिराभाजनं वा, तदानय, तथा वर्चोगृहं युष्मन् मदर्थं च ' खन ' संस्कुरु । तथा ' शरपातं ' धनुः ' जाताय ' मम पुत्राय ढौकय, तथा 'गोरहगं'ति त्रिवर्षं बलीवर्दं ढौकय, ' सामणेराए 'त्ति श्रमणपुत्राय गन्त्र्यादिकृते भविष्यतीति गाथार्थः ॥ १३ ॥

घडिगं च सडिंडिमयं च, चोलगोलं कुमारभूयाए । वासं समभियावन्नं, आवसहं च जाण भत्तं च ॥१४॥

व्याख्या—घटिकां मृण्मयकुल्हडिकां डिण्डिमेन–पटहिकादिवादित्रविशेषेण सहितामानय, तथा ' चोलगोलं'ति वस्त्रात्मकं कन्दुकं ' कुमारभूताय ' [ क्षुल्लकरूपाय राजकुमारभूताय ] वा मत्पुत्राय क्रीडनार्थमानय, तथा च वर्षा समापन्नोऽभिमुखः, अतः ' आवसथं ' गृहं वर्षाकालनिवासयोग्यं तथा भक्तं च वर्षाकालयोग्यं [ तण्डुलादि ] जानीहि, तादृशं गृहं वर्षाकालयोग्यं प्रच्छादय येन वर्षाकालं सुखेनाऽतिवाह्यते ॥ १४ ॥

आसंदियं च नवसुत्तं, पाउल्लाइं संकमट्ठाए । अदु पुत्तदोहलट्ठाए, आणप्पा होंति दासा वा ॥ १५ ॥

व्याख्या—' आसन्दिकां ' उपवेशनयोग्यां मञ्चिकां नवसूत्रां–नवीनेन सूत्रेण व्यूतां आनय, वध्रचर्मावनद्धां वा निरूपय, एवं ' पाउल्लाइं 'ति मोजकाः काष्ठपादुके वा सङ्क्रमणार्थं–चङ्क्रमणार्थमानय, यतो नाहं निरावरणपादा भूमौ पदमपि दातुमलं, अथवा पुत्रे गर्भस्थे ' दोहदः ' अन्तर्वर्तीफलादावभिलापविशेषः, तत्पूरणार्थं । पुरुषाः स्त्रीभिर्वशीकृताः ' दासा इव ' मौल्यगृहीता इव आज्ञाप्या–आज्ञाप्यन्ते, नीचेऽपि कर्मणि अलज्जितैर्दासा एव नियोज्यन्ते, तथा विषयार्थिनः पुरुषाः

वनिताभिर्यादृशे तादृशेऽपि कर्मणि वाह्यन्त इति गाथार्थः ॥ १५ ॥

**जाए फले समुप्पन्ने, गेह्सु वा णं अहवा जहाहि । अह पुत्तपोसिणो एगे, भारवहा हवंति उट्टा वा ॥१६**

व्याख्या—गृहवासतरोः फले पुत्रे जाते मति यादृक् विडम्बनाः भवन्ति ताः दर्शयति–अमुं पुत्रं गृहाण, अहं तु गृहव्यापारव्यापृता, न मे ग्रहणावसरः, अथवा एनं 'जहाहि' परित्यज, नाहमस्य वार्त्तामपि पृच्छामि, एवं कुपिता सती ब्रूते, मया नवमासानुदरेण वूढस्त्वं पुनस्तोककालमुत्सङ्गेऽप्युद्वहन्नुद्विजसे, ततः स स्त्रीवशगो अनुग्रहं मन्यमानो मुदितः संस्तदादेशं दासवद्विदधाति, ततस्ते पुत्रपोपिणो जायन्ते, सर्वाऽदेशकारिणो 'भारवाहा' उष्ट्रा इव परवशा भवन्तीति गाथार्थः ॥१६॥

**राओ वि उट्ठिया संता, दारगं संठविंति धाती वा। सुहिरामणा वि ते संता, वत्थधुवा हवंति हंसा वा ॥१७**

व्याख्या—रात्रावुत्थिताः सन्तो धात्रीवद्रुदन्तं पुत्रं संस्थापयन्ति । अनेकैरुल्लापनैरुल्लापयन्ति, स्त्रीवशाः पुरुषास्तत्तत्कुर्वन्ति येन सर्वत्रोपहसनीया भवन्ति । ' सुह्रीमनसोऽपि 'ये महालज्जावन्तस्तेऽपि हास्यजनकं जुगुप्सनीयं कर्म कुर्वन्ति । तदेव दर्शयति–' वत्थधुव 'त्ति वस्त्रधावकाः–[ वस्त्र]क्षालका ' हंसा इव ' रजका इव भवन्ति । किं बहूक्तेन ? उदकवहनादिकमपि कुर्वन्ति दासा इव पुरुषाः लज्जालवोऽपि, स्त्रियो हि जघन्येऽपि कर्मणि प्रेरयन्ति किं ? येनैवमभिधीयते–बाढं ताः प्रेरयन्ति, ते तु कुर्वन्ति दासा इवेति गाथार्थः ॥ १७ ॥ तदेवाह—

**एवं बहूहिं कयं पुव्वं, भोगत्थाए जेऽभियावन्ना । दासे मिते व पेसे वा, पसुभूते व से ण वा केई ॥१८॥**

व्याख्या—ए[वमे]तत् पूर्वोक्तं स्त्रीकिङ्करत्वं बहुभिः पुरुषैः कृतं, बहवः कुर्वन्ति, करिष्यन्ति च परे। ये पुरुषाः भोगाऽभिमुखास्ते एवं दासप्रायाः रागान्धाः स्त्रीणां वशवर्त्तिनः त(य)था वागुरापतितः परवशो मृग इव (?) न स्पन्दितुमपि शक्नोति, तथाऽसावपि परवशत्वाद्भोजनादि क्रिया अपि कर्तुं न लभते। तथा 'प्रेष्य इव' मौल्यगृहीतकिङ्कर इव वर्चःशोधनादावपि नियोज्यते। तथा स स्त्रीवशः पुमान् पशुभूत इव कर्त्तव्याकर्त्तव्यविवेकरहितत्वात् हिताऽहितप्राप्तिपरिहारशून्यत्वाच्च, यदि वा स स्त्रीवशको दासमृगप्रेष्यपशुभ्योऽप्यधमत्वान्न कश्चित्, सर्वाधमत्वान्न कस्याऽपि समः, सा काऽप्युपमा नास्ति याऽस्याऽधमस्य दीयत इति गाथार्थः ॥ १८ ॥ अथोपसंहारमाह—

**एवं खु तासु विन्नप्पं, संथवं संवासं च वज्जिज्जा। तज्जातिया इमे कामा-ऽवज्जकरा य एवमक्खाया ॥१९॥**

व्याख्य—इत्येतत् पूर्वोक्तं स्त्रीणां विज्ञप्यं सर्वं मायाप्रपञ्चकारणं, अतस्ताभिः सह संवासः परिचयो वा विवेकिना नरेण त्याज्य एव। स्त्रीसंसर्गादुत्पन्नाः कामभोगाः 'अवद्यकराः' पापहेतवः, अधोगतिदायकाश्चेत्येतत् तीर्थकरगणधरैरभिहितमिति गाथार्थः ॥ १९ ॥

**एवं भयं ण सेयाय, इइ से अप्पगं निरुंभित्ता। नो इत्थिं णो पसुं भिक्खू, णो सयं पाणिणा णिलिज्जेज्जा ॥**

व्याख्या—एवं पूर्वोक्तं स्त्रीसङ्गादिक सर्वं भयकारणं, न श्रेयस्कारणं, एतावता स्त्री सम्पर्को न श्रेयसे, इति ज्ञात्वा स्त्रीसम्पर्कादात्मानं निरुन्ध्य सन्मार्गे व्यवस्थाप्य यत् कुर्यात्तद्दर्शयति—न स्त्रियं नाऽपि पशुं 'लीयेत' आश्रयेत—स्त्रीपशुभ्यां

सह संवासं परित्यजेत्, स्त्रीपश्वादिकं स्वेन पाणिना न स्पृशेदिति गाथार्थः ॥ २० ॥

**सुविसुद्धलेसे मेहावी, परकिरियं च वज्जए नाणी। मणसा वयसा काएणं, सव्वफाससहे अणगारे ॥२१॥**

व्याख्या—सुविशुद्धलेश्यो 'मेधावी' पण्डितः परक्रियां संवाहनादिकां वर्जयेत् 'ज्ञानी' विदितवेद्यः। किमुक्तं भवति? अन्यस्य किमपि विषयार्थिना [न]विधेयं नाऽप्याऽत्मना स्त्रिया पादधावनादिकं कारयेत्, मनसा वाचा कायेन करणकारणाऽनुमतिभेदेनाऽब्रह्म वर्जयेत्। तथा सर्वानपि परीषहान् अधिसहेत। एवं सर्वस्पर्शसहोऽनगारः—साधुर्भवतीति गाथार्थः ॥ २१ ॥

क एवमाहेति दर्शयति—

**इच्चेवमाहु से वीरे, धुयरए धुयमोहे से भिक्खू।**
**तम्हा अज्झत्थविसुद्धे सुविमुक्के, आमोक्खाए परिव्वएज्जासि ॥ २२ ॥ त्ति बेमि**

व्याख्या—इत्येतत् पूर्वोक्तं सर्वं स्त्रीसंस्तवपरिहरणादिकं श्रीवीरो भगवान् 'आह' उक्तवान्। धुतरजा धुतमोहः, यत एवं तस्मात्स भिक्षुरध्यात्मविशुद्धः (सु)विमुक्तः स्त्रीसंसर्गेण, आमोक्षाय—अशेषकर्मक्षयं यावत् संयमोद्योगवान् भवेत्, इतिः परिसमाप्तौ, ब्रवीमीति पूर्ववत् ॥ २२ ॥ स्त्रीपरिज्ञाध्ययनं चतुर्थं परिसमाप्तम् ॥ ४ ॥

इति श्रीपरमसुविहितखरतरगच्छविभूषणश्रीमत्साधुरङ्गगणिवरगुम्फितायां श्रीमत्सूत्रकृताङ्गदीपिकायां चतुर्थे स्त्रीपरिज्ञाध्ययने द्वितीयोद्देशकः समाप्तस्तत्समाप्तौ च समाप्तमिद चतुर्थमध्ययनम्।

## अथ पञ्चमं नरकविभक्त्याख्यमध्ययनम् ।

उक्तं चतुर्थमध्ययनं, साम्प्रतं पञ्चमं प्रारभ्यते । तथा चतुर्थेऽध्ययने 'सम्यक् स्त्रीपरीषहः सोढव्यः' इत्येतत् प्रतिपादितं, साम्प्रतमुपसर्गभीरोः स्त्रीवशगस्य ध्रुवं नरकपातः स्यात्, तत्र च यादृक्षा वेदनाः प्रादुर्भवन्ति ताः पञ्चमाध्ययने नरकविभक्त्याख्ये प्रतिपाद्यन्ते, तत्रेयमादिगाथा—

पुच्छिस्सऽहं केवलियं महेसिं, कहं भितावा ? णरगा पुरत्था ।
अजाणतो मे मुणि ! बूहि जाण, कहं नु बाला नरयं उवेंति ? ॥ १ ॥

व्याख्या—जम्बूस्वामिना सुधर्मस्वामी पृष्टः-भगवन् ! किम्भूता नरकाः ? कैर्वा कर्मभिस्तत्रोत्पादः प्राणिनां जायते ? कीदृश्यो वा तत्र वेदनाः ? इत्येवं पृष्टः सुधर्मस्वाम्याह-यदेतद्भवता अहं पृष्टः, तदेतत् केवलिनं महर्षिं श्रीवर्द्धमानस्वामिनं पूर्वमहमपि पृष्टवानस्मि । यथा-'कथं' किम्भूता अभितापान्विता नरकावासाः भवन्ति ? इत्येतदजानतो 'मे' मम मुने ! त्वं जानन् केवलज्ञानेन ब्रूहि । कथं-केनाऽनुष्ठानेन 'बाला' अज्ञानिनो विवेकरहिताः [ 'नु' वितर्के ] नरकेषूपसामीप्येन यान्ति ? कथम्भूताश्च तत्र वेदना ? इत्यादि यथा त्वं मां पृच्छसि, तथैव मयाऽपि भगवान् पृष्ट इति गाथार्थः ॥ १ ॥

एवं मए पुट्ठे महाणुभावे, इणमब्बवी कासवे आसुपन्ने ।
पवेदइस्सं दुहमट्ठदुग्गं, आदाणियं दुक्कडियं दुरत्था ॥ २ ॥

व्याख्या—एवं मया महानुभावः श्रीमहावीरः पृष्ट आशुप्रज्ञ, स चैवं पृष्टो भगवानिदमाह–यदेतद्भवता पृष्टस्तदहं प्रवेदयिष्यामि–कथयिष्यामि, त्वं दत्ताऽवधानः शृणु। तदेवाह–दुःखमिति नरकं, अथवा दुःखमेव अर्थो यस्मिन् दुखार्थो नरकः, स च 'दुर्गो' विषमो, दुरुत्तरत्वादादानीयं–अत्यन्तदीनसत्त्वाश्रयं, तथा 'दुष्कृतं' असदनुष्ठानं पापं वा, तत्फलं वा असातावेदनीयोदयरूपं, तद्विद्यते यस्मिँस्तद् दुष्कृतिकं 'पुरस्ता'दग्रतः प्रतिपादयिष्ये, इति गाथार्थः ॥ २ ॥

यथाप्रतिज्ञातमेवाह—

जे केइ बाला इह जीवियट्ठी, पावाइं कम्माइं करिंति रुद्दा।
ते घोररूवे तिमिसंधयारे, तिव्वाऽभितावे नरए पडंति ॥ ३ ॥

व्याख्या—ये केचन 'बालाः' अज्ञा–अविवेकिनो मूर्खाः, महाऽऽरम्भपरिग्रहपञ्चेन्द्रियवधपिशितभक्षणादिके सावद्यानुष्ठाने प्रवृत्ताः, असंयमजीवितार्थिनः पापोपादानभूतानि कर्माणि 'रौद्राः' भयानका हिंसाऽनृतादीनि कर्माणि कुर्वन्ति। ते एवम्भूतास्तीव्रपापोदयवर्त्तिनो 'घोररूवे' अत्यन्तभयानके 'तिमिसंधयारे'त्ति बहलान्धकारे यत्राऽऽत्मापि नोपलभ्यते। केवलमवधिनाऽपि मन्दं मन्दमुलूका इवाह्नि पश्यन्ति। तस्मिन्नेवम्भूते नरके पतन्ति, कथम्भूते? तीव्राऽभितापे, तीव्रो–दुस्सहः खादिराङ्गारमहाराशितापादनन्तगुणोऽभितापः–सन्तापो यस्मिन् स तीव्राभितापस्तस्मिन्–एवम्भूते बहुवेदने नरके पतन्तीति गाथार्थः ॥ ३ ॥ किञ्च—

निच्चं तसे पाणिणो थावरे य, जे हिंसती आयसुहं पडुच्च ।
जे लूसए होइ अदत्तहारी, ण सिक्खती सेयवियस्स किंचि ॥ ४ ॥

व्याख्या—तथा ये पुरुषाः हिंसारसिकाः आत्मसुखार्थिनः, आत्मसुखहेतवे त्रसस्थावरान् प्राणिनो घ्नन्ति । तथा ये प्राणिनां लूषकाः—ध्वंसकाः, अदत्तहारिणः, परद्रव्यापहारिणः, तथा 'सेयवियस्स'त्ति प्रत्याख्यानादिकमपि नाऽभ्यसन्ति, अविरताः अप्रत्याख्यानिनः काकमांसादेरप्यनिवृत्ता इति गाथार्थः ॥ ४ ॥

पागब्भिपाणे बहुणेतिवाती, अनिव्वुते घातमुवेति बाले ।
णिहोणिसं गच्छति अंतकाले, अहोसिरं कट्टु उवेइ दुग्गं ॥ ५ ॥

व्याख्या—य ईदृशो भवति स अधोगतिं याति, अधः शिरः कृत्वा 'दुर्गं' विषमं यातनास्थानमुपैति, स इति कः ? यः 'प्रागल्भी' धृष्टः प्राणिनामतिपाति-विनाशकः, अतिपात्याऽपि प्राणिनो धार्ष्ट्याद्वदति, यथा वेदाऽभिहिता हिंसा हिंसैव न भवति इत्यादि धार्ष्ट्यात्प्रगल्भते । तथा 'अनिर्वृतः' कदाचिदप्यनुपशान्तः क्रोधाग्निना प्रज्वलन्नेवास्ते यो बालो रागद्वेषोदयवर्त्ती, सोऽन्तकाले-मरणकाले 'णिहो'त्ति, न्यग्-अधस्तात् 'णिसं'ति अन्धकारमधोऽन्धकारं गच्छति, अवाङ्शिरा नरके पततीत्यर्थः ॥ ५ ॥ अथ नारका यदनुभवन्ति तद्दर्शयितुमाह—

हण छिंदह भिंदह णं दंडेह, सद्दे सुणित्ता परहम्मियाणं ।

महालयंसि ।

अन्ने ॥ १० ॥

इत्युदके 'बोलंति' त्ति निमज्जन्ति । पुनस्तत्र च ल लयन्ति—चणकानिव तप्तवालुकायामितस्ततो घोलयन्ति । तत् कटाहके क्षिप्त्वा पचन्ति—भर्जयन्तीति गाथार्थः ॥ १० ॥

असूरियं नाम महाहितावं, अंधं तमं दुप्पतरं महंतं ।
उड्ढं अहेयं तिरियं दिसासु, समाहिओ जत्थऽगणी झियाई ॥ ११ ॥

व्याख्या—न यत्र सूर्यः, एवंविधे असूर्ये—महाऽन्धकारे कुम्भिकाऽऽकृतिनरकावासे, सर्वोऽपि नरकावासोऽसूर्य एव, तस्मिन् नरकावासे तमेवम्भूतं महाऽभितापं महाऽन्धतमसं 'दुष्प्रतरं' दुरुत्तरं 'महान्तं' विशालं नरकं महापापोदयाद्व्रजन्ति । तत्र च नरके ऊर्ध्व—मधस्तिर्यक्समाहितो—व्यवस्थापितोऽग्निर्मसुच्छ्रितः प्रज्वलति, तस्मिन् महाऽग्निकष्टे पतन्तीति गाथार्थः ॥ ११ ॥ किञ्चान्यत्—

जंसी गुहाए जलणाइवट्टे, अविजाणओ डज्झइ लुत्तपन्ने ।

जइ ते सुया वेयरणीभिदुग्गं, णिसिओ जहा खुर इव तिक्खसोया ।
तरंति ते वेयरणीं भिदुग्गं, उसुचोइया सत्तिसुहम्ममाणा ॥ ८ ॥

व्याख्या—सुधर्मस्वामी जम्बूस्वामिनं प्रति इदमाह–यदि 'ते' त्वया श्रुता वैतरणी नाम क्षारोष्णरुधिराकारजलवाहिनी नदी 'अभिदुर्गा' दुःखोत्पादिका, तथा निशितो यथा क्षुरस्तीक्ष्णो भवति तादृशानि तीक्ष्णानि श्रोतांसि यस्याः सा तथा, ते च नारका उदन्यया पीड्यमानास्तप्ताया च भूम्या तापसमाकुलाः सन्तो जलपानाय तापापनोदाय स्नार्थिनस्तां क्षारोष्णरुधिराकारजलां वैतरणीं तरन्ति । परमाऽधार्मिकैः शरपातैः–इषुभिः प्रेर्यमाणाः शक्तिभिश्च हन्यमानास्तां नदीं प्रविशन्तीति गाथार्थः ॥ ८ ॥ किञ्च–ते वराकाः नद्याः कष्टेन पीड्यमानाः अशरणा वराका अगाधां तां तरीतुमशक्ताः नावं वाञ्छन्ति, तत्र गाढतरं दुःखिताः सम्भवन्ति । तदेवाह—

कीलेहि विज्झंति असाहुकम्मा, नावं उवेंति सइविप्पहीणा ।
अन्ने तु सूलाहि तिसूलियाहिं, दीहाहि विद्धूण अहे करिंति ॥ ९ ॥

व्याख्या—ते असाधुकर्माणो नारकाः [ नावमुपयान्तः पूर्वारूढैः परमाधार्मिकै ] नावालोहकीलकैस्तीक्ष्णैर्विध्यन्ते । ततश्च स्मृतिविहीना–भ्रष्टस्मृतिकाः अपगतकर्त्तव्यविवेका जायन्ते । अन्ये पुनः परमाऽधार्मिकाः नश्यन्तो नारकान् दृष्ट्वा त्रिशूलिकाभिः शूलाभिः दीर्घाभिर्विद्ध्वा 'अधो' भूमौ कुर्वन्ति, अधोमुखान्निक्षिपन्तीति गाथार्थः ॥ ९ ॥

केसिं च बंधित्तु गले सिलाओ, उदगंसि बोलंति महालयंसि ।
कलंबुयावालुयमुम्मुरे य, लोलेंति पययंति तत्थ अन्ने ॥ १० ॥

व्याख्या—ते परमाऽधार्मिकास्तेषां नारकाणां गले शिलां बद्ध्वा महत्युदके 'बोलंति'त्ति निमज्जन्ति । पुनस्तत उदकान्निष्कास्य वैतरणीनद्याः कदम्बवालुकायां मुर्मुराग्नौ च लोलयन्ति—चणकानिव तप्तवालुकायामितस्ततो घोलयन्ति । अन्ये नरकपालास्तान् दीनान् मांसपेशीवत् कटाहके क्षिप्त्वा पचन्ति—भर्जयन्तीति गाथार्थः ॥ १० ॥

असूरियं नाम महाहितावं, अंधं तमं दुप्पतरं महंतं ।
उड्ढं अहेयं तिरियं दिसासु, समाहिओ जत्थऽगणी झियाई ॥ ११ ॥

व्याख्या—न यत्र सूर्यः, एवंविधे असूर्ये—महाऽन्धकारे कुम्भिकाऽऽकृतिनरकावासे, सर्वोऽपि नरकावासोऽसूर्य एव, तस्मिन् नरकावासे तमेवम्भूतं महाऽभितापं महाऽन्धतमसं 'दुष्प्रतरं' दुरुत्तरं 'महाऽन्तं' विशालं नरकं महापापोदयाद्व्रजन्ति । तत्र च नरके ऊर्ध्व—मधस्तिर्यक्समाहितो—व्यवस्थापितोऽग्निसमुच्छ्रितः प्रज्वलति, तस्मिन् महाऽग्निकष्टे पतन्तीति गाथार्थः ॥ ११ ॥ किञ्चान्यत्—

जंसी गुहाए जलणाइवट्टे, अविजाणओ डज्झइ लुत्तपन्ने ।

सया य कलुणं पुण घम्मठाणं, गाढोवणीयं अविदुक्खधम्मं ॥ १२ ॥

व्याख्या—तस्मिन्नरके पतितो जन्तुरुष्ट्रिकाऽऽकृतौ गुहायां ज्वलनावर्त्ते स्वकृतं दुश्चरितमजानन् 'लुप्तप्रज्ञो' भ्रष्टस्मृतिको दन्दह्यते 'सदा' सर्वकालं करुणप्रायं दुःखरूपं पापकर्मणा ढौकितं ईदृशं [ घर्म]स्थानं ते वराका अकृतधर्माणः प्राप्नुवन्तीति गाथार्थः ॥ १२ ॥

चत्तारि अगणीओ समारभित्ता, जहिं कूरकम्माऽभितवेंति बालं ।
ते तत्थ चिट्ठंतिऽभितप्पमाणा, मच्छा व जीवंतुवजोतिपत्ता ॥ १३ ॥

व्याख्या—चतुर्षु दिक्षु चतुरोऽग्नीन् 'समारभ्य' प्रज्वाल्य यत्र नरकावासे 'क्रूरकर्माणो' नरकपालाः नारकानभितापयन्ति, भटित्रवत्पचन्ति । ते तु नारका जीवा एवमभितप्यमानाः—कदर्थ्यमानाः स्वकर्मनिगडबद्धास्तत्रैव प्रभूतं कालं नरके तिष्ठन्ति । दृष्टान्तमाह—यथा जीवन्तो मत्स्याः अग्नेः समीपं प्राप्ताः परवशत्वादन्यत्र गन्तुमसमर्थास्तत्रैव तिष्ठन्ति, मत्स्या हि अग्नितापेऽत्यन्तमाकुला भवन्ति, तथा तेऽपि अभितप्यमाना महादुःखमनुभवन्तीति गाथार्थः ॥ १३ ॥

संतच्छणं नाम महाहितावं, ते नारया जत्थ असाहुकम्मा ।
हत्थेहि पाएहि य बंधिऊणं, फलगं व तच्छंति कुहाडहत्था ॥ १४ ॥

व्याख्या—संतक्षणं नाम स्थानमस्ति यत्र नारकाः 'सन्तक्ष्यन्ते' छिद्यन्ते, तत्र नरकावासे निरनुकम्पाः 'कुठार-

हस्ताः ' परशुपाणयो नरकपालाः अत्राणान् नारकान् हस्तैः पादैश्च बद्ध्वा ' फलकमिव ' काष्ठखण्डमिव ' तक्ष्णुवन्ति ' छिन्दन्तीति गाथार्थः ॥ १४ ॥ अपि च—

रुहिरे पुणो वच्चसमुस्सियंगे, भिन्नुत्तमंगे परिवत्तयंता ।
पयंति णं ते नरए फुरंते, सजीवमच्छे व अओकवल्ले ॥ १५ ॥

व्याख्या—ते परमाऽधार्मिकास्तान् नारकान्स्वकीये रुधिरे तप्तकवल्यां प्रक्षिप्ते पुनः पचन्ति । कथम्भूतान् ? ' वर्चः ' अमेध्यं, तेन खरण्टितगात्रान्, पुनः कथम्भूतान् ? भिन्नोत्तमाङ्गान्-चूर्णीकृतशिरसः, कथं पचन्ति ? परिवर्त्तयन्तः-उत्तानान् अवाङ्मुखान् वा कुर्वन्तः, " णं " मिति वाक्याऽलङ्कारे, फुरन्तः-इतस्ततो विह्वलमात्मानं निक्षिपन्तः सजीवमत्स्यान् आयसकवल्यामिवेति गाथार्थः ॥ १५ ॥

नो च्चेव ते तत्थ मसी भवंति, ण मिज्जती तिव्वऽभिवेयणाए ।
तमाणुभावं अणुवेदयंता, दुक्खंति दुक्खी इह दुक्कडेणं ॥ १६ ॥

व्याख्या—ते नारका एवं पच्यमाना अपि नैव भस्मीभवन्ति-न भस्मसाज्जायन्ते । तत्र तेषां या वेदना प्रादुर्भवति, तत्राऽन्या सा काऽपि वेदना नास्ति या तथा उपमीयते । एतावता तीव्रां वेदनां वाचामगोचरामसह्यामनुभवन्ति । ते तु वेदनाऽवगाढा अपि न म्रियन्ते, कृताऽनेकदुष्कर्मत्वात् । प्रभूतमपि कालं छेदन, भेदन, दहन, तक्षण, शूलारोपण, कुम्भी-

पाक, शाल्मल्याऽरोहणादिकं परमाऽधार्मिककृतं परस्परोदीरितं च कर्मणां विपाकमनुभवन्तस्तिष्ठन्ति । स्वकृतेनाऽष्टादशपापस्थानरूपेण सततोदीर्णरूपेण दुःखेन पीड्यन्ते, नाऽक्षिनिमेषमपि कालं सुखमनुभवन्तीति गाथार्थः ॥ १६ ॥

किञ्चाऽन्यत्—

तहिं च ते लोलणसंपगाढे, गाढं सुतत्तं अगणिं वयंति ।
न तत्थ सातं लभतीभिदुग्गे, अराहिताभितावे तहवी तविंति ॥ १७ ॥

व्याख्या—तस्मिन्नरकावासे महायातनास्थाने नारकाणां लोलने प्रगाढो व्याप्तस्तस्मिन्नरके ते नारकाः शीतार्त्ताः सन्तो गाढं अत्यर्थं सुतप्तं अग्निं व्रजन्ति । तत्राऽप्यतिदुर्गेऽग्निस्थाने दह्यमानाः सातं सुखं मनागपि न लभन्ते । अरहितो—निरन्तरोऽभितापो—महादाहोऽस्ति, तथाऽपि नरकपालास्तापयन्ति, तप्ततैलाऽग्निना दहन्तीति गाथार्थः ॥ १७ ॥

से सुवई नगरवहे व सद्दे, दुहोवणीयाणि पयाणि तत्था ।
उदिन्नकम्माण उदिन्नकम्मा, पुणो पुणो ते सरहं दुहिंति ॥ १८ ॥

व्याख्या—तस्मिन्नरके तेषां नारकाणां नरकपालैः कदर्थ्यमानानां भयानको महान् हाहारवप्रचुरः आक्रन्दरवः श्रूयते, महानगरवध इव समाकर्ण्यते, यथा महानगरवधे लोकानां महान्कोलाहलः श्रूयते, तथाऽत्राऽपि, कीदृशो हाहारवः ? दुहोवणीयाणि 'दुःखेन' पीडया 'उपनीतानि' उच्चरितानि करुणाप्रधानानि, यथा हा तात ! हा मात !

कष्टमनाथोऽहं शरणागतस्तव, त्रायस्व माम् इत्येवमादीनां पदानां शब्दः श्रूयते । ' उदीर्णं ' उदयप्राप्तं कटुविपाकं कर्म येषां नारकाणां, तथा उदीर्णकर्माणो नरकपालाः पुनः पुनः ' सरहं 'ति ' सरभसं ' सोत्साहं नारकान् ' दुहिंति ' दुःखयन्त्यसह्यं दुःखमुत्पादयन्ति नानाविधैरुपायैरिति गाथार्थः ॥ १८ ॥

पाणेहि णं पावे विओजयंति, तं भे पवक्खामि जहातहेणं ।
दंडेहिं तत्था सरयंति बाला, सव्वेहिं दंडेहिं पुराकएहिं ॥ १९ ॥

व्याख्या—ते नरकपालाः ' पापाः ' पापकर्माणो नारकाणां प्राणान् ' वियोजयन्ति ' शरीराऽवयवानां पाटनादिभिः प्रकारैर्विकर्त्तनादवयवान् विश्लेषयन्ति । किमर्थमेवं ते कुर्वन्ति ? इत्याह—तद्दुःखकारणं ' भे ' युष्माकं प्रवक्ष्यामि 'याथातथ्येन ' अवितथं प्रतिपादयामि । दण्डै—र्दुःखविशेषैर्नारकाणामापादितै'र्बाला' निर्विवेकाः नरकपालाः पूर्वकृतं स्मारयन्ति । तद्यथा—तदा हृष्टस्त्वं खादसि ? समुत्कृत्योत्कृत्य प्राणिनां मांसं, तथा तद्रसं मद्यं च पिबसि, गच्छसि परदारान्, तत्कर्म साम्प्रतमुदयप्राप्तं तव, स्वकृतं कर्म भुञ्जन् किमेवं पूत्करोषि ? एवं ते नरकपालाः पुराकृतं दुष्कृतं स्मारयन्तस्तादृशमेव दुःखविशेषमुत्पादयन्तो पीडयन्तीति गाथार्थः ॥ १९ ॥

ते हम्ममाणा नरगे पडन्ति, पुण्णे दुरूवस्स महाऽभितावे ।
ते तत्थ चिट्ठंति दुरूवभक्खी, तुट्टंति कम्मोवगया किमीहिं ॥ २० ॥

व्याख्या—ते नारकाः परमाऽधार्मिकैर्हन्यमानाः नंष्ट्वा, पुनर्नारकैः पूर्णे नरके अन्यस्मिन् पतन्ति महादुष्टरूपे, ततस्ते नारका अशुचिमेवाऽऽहारयन्तश्चिरं तिष्ठन्ति । महाऽभितापे–महासन्तापोपेते नारकाः स्वकर्मावबद्धाः कृमिभिर्नरकपालविकुर्वितैः परस्परोदीरितैः स्वकर्मढौकितैः स्तुद्यन्ते–भक्ष्यन्त, इति गाथार्थः ॥ २० ॥

सदा कसिणं पुण घम्मठाणं, गाढोवणीयं अतिदुक्खधम्मं ।
अंदूसु पक्खिप्प विहत्तु देहं, वेहेण सीसं सेऽभितावयंति ॥ २१ ॥

व्याख्या—'सदा' सर्वकालं 'कृत्स्नं' प्रतिपूर्णं तत्र नरके घर्म्मप्रधानं, स्थितिः–स्थानं नारकाणामस्ति । तच्च–प्रलयाऽतिरिक्ताऽग्निवातादीनामत्यन्तोष्णरूपत्वात् दृढैर्निकाचितावस्थैः कर्मभिर्नारकाणामुपढौकितं, अतीव दुःखं असातावेदनीयं 'धर्म्मः' स्वभावो यस्य, तस्मिन्नेवंविधे घर्मप्रधाने स्थाने स्थितो जन्तुः 'अन्दुषु' निगडेषु देहं 'विहत्य' प्रक्षिप्य शिरश्च 'से' तस्य नारकस्य 'वेधेन' रन्ध्रोत्पादनेन शिरोऽभितापयन्तीति, कीलकैश्च सर्वाण्यप्यङ्गानि वितत्य चर्मवत्कीलयन्तीति गाथार्थः ॥ २१ ॥ अपिच—

छिंदिंति बालाथ खुरेण नक्कं, उट्ठे वि छिंदिंति दुवे वि कण्णे ।
जिब्भं विणिक्कस्स विहत्थिमेत्तं, तिक्खाहिं सूलाहिऽभितावयंति ॥ २२ ॥

व्याख्या—ते परमाऽधार्मिकाः बालाः अज्ञानित्वात् सर्वदा वेदनाव्यथितस्य पूर्वदुश्चरितस्मारणपूर्वकं क्षुरप्रेण नासिकां

छिन्दन्ति, ओष्ठौ कर्णावपि छिन्दन्ति। तथा मद्यमाँसरसगृद्धस्य मृषाभाषिणश्च जिह्वां वितस्तिमात्रामाकृष्य तीक्ष्णशूलाभिरभितापयन्ति–विध्यन्ति अपनयन्ति चेति गाथार्थः ॥ २२ ॥

ते तिप्पमाणे तलसंपुडव्व, राइंदियं तत्थ थणंति बाला।
गलंति ते सोणियपूयमंसं, पज्जोइया खारपदिद्धियंगा ॥ २३ ॥

व्याख्या––ते नारकाश्छिन्ननाशिकौष्ठकर्णाः रुधिरं 'क्षरन्तो' झरन्तो यस्मिन्प्रदेशे रात्रिदिनं गमयन्ति, तत्र 'बाला' अज्ञास्तालसम्पुटा इव–पवनेरिताः शुष्कतालपत्रसञ्चया इव 'स्तनन्तो' दीर्घमाक्रन्दन्तस्तिष्ठन्ति। 'प्रद्योतिता'वह्निना तापिताः क्षारेण [प्र]दिग्धाङ्गाः शोणितं पूयं मांसं च गलन्तीति गाथार्थः ॥ २३ ॥ किञ्च—

जइ ते सुता लोहितपूयपाई, बालागणीतेयगुणा परेणं।
कुंभी महंताहियपोरसीया, समूसिया लोहियपूइपुण्णा ॥ २४ ॥

व्याख्या—पुनः सुधर्मस्वामी जम्बूस्वामिनं प्रत्याह–त्वया 'श्रुता' आकर्णिता ? श्रीमहावीरप्रतिपादिता लोहितपूयपाचिनी कुम्भी, यस्या लोहितं पूतिसहितं पच्यते, एवंविधा कुम्भी त्वया श्रुता। परं–कथम्भूता कुम्भी ? बालाऽग्नितेजोगुणा–प्रकर्षेण तप्ता, 'महती' बृहत्तरा 'पोरसीय'त्ति पुरुषप्रमाणा अधिकं समुच्छ्रिता उष्ट्रिकाऽऽकृतिः समन्ततोऽग्निना प्रज्वालिता बीभत्सदर्शना, एवंविधा कुम्भी श्रीमहावीरेण प्रतिपादिता त्वया श्रुतेति गाथार्थः ॥ २४ ॥

अथ तस्यां यत् क्रियते तद्दर्शयितुमाह—

पक्खिप्प तासुं पययंति बाले, अट्टस्सरे ते कलुणं रसंते ।
तण्हाइया ते तउतंबतत्तं, पज्जिज्जमाणाऽट्टतरं रसंति ॥ २५ ॥

व्याख्या—ते परमाऽधार्मिकास्तान्नारकान् आर्त्तस्वरान् करुणं रसन्तः, दीनं प्रलपन्तस्तासु कुम्भीषु प्रदीप्ताग्नितप्तासु किल्विषपूर्णासु बीभत्सासु प्रक्षिपन्ति, प्रक्षिप्य च पचन्ति । ते पच्यमानाः विरसमाक्रन्दन्तः तृष्णया व्याप्ताः सलिलं प्रार्थयन्ति । ततस्ते नरकपालाः मद्यं तवाऽतीव प्रियमासीदिति स्मारयित्वा तप्तं त्रपुः पाययन्ति । ते च तप्तं त्रपुः पाय्यमाना आर्त्ततरं 'रसन्ति' रारटन्तीति गाथार्थः ॥ २५ ॥ अथोद्देशकार्थोपसंहारार्थमाह—

अप्पेण अप्पं इह वंचयित्ता, भवाहमे पुव्वसते सहस्से ।
चिट्ठंति तत्था बहुकूरकम्मा, जहा कडे कम्म तहा सि भारे ॥ २६ ॥

व्याख्या—'इह' मनुष्यभवे आत्मना परवञ्चनप्रवृत्तेन परमार्थतः आत्मानं वञ्चयित्वा अल्पेन परोपघातसुखेन आत्मैव वंच्यते । तत आत्मानं परवञ्चनेन वञ्चयित्वा अधमभवान्–वधकलुब्धकादीनां भवाऽधमान् शतसहस्रशः समनुभूय विषयोन्मुखतया सुकृतपराङ्मुखाः नरकेषु पतन्ति । तत्र घोराऽतिदारुणं नरकवासं प्राप्य प्रभूतकालं यावत्तिष्ठन्ति । पूर्वजन्मनि यादृग्भूतानि कर्माणि कृतानि 'तथा' तेनैव प्रकारेण[से] तस्य[भारे] वेदनाः प्रादुर्भवन्ति स्वतः परत उभयतो वा ।

तथाहि–मांसादानां नारकाणां शरीरेभ्यो मांसखण्डानुत्कृत्य वह्निना प्रताप्य मुखे दीयन्ते। माँसरसपायिनां तप्तत्रपूणि पाय्यन्ते । मत्स्यघातकलुब्धकादयस्तथैव छिद्यन्ते । भिद्यन्ते–मार्यन्ते । अनृतभाषिणां जिह्वा छिद्यन्ते । परधनाऽपहारिणामङ्गोपाङ्गानि छिद्यन्ते, पारदारिकाणां वृषणच्छेदः, शाल्मल्युपगूहनानि कार्यन्ते, इत्यादिप्रकारेण पूर्वकृतदुष्कृतस्मारणेन तादृग्विधमेव दुःखमुत्पाद्यते, तेन सुष्ठूक्तं तादृग्भूत एव कर्मविपाकापादितो भार उदेति इति गाथार्थः ॥ २६ ॥ किञ्च—

समज्जिणित्ता कलुसं अणज्जा, इट्ठेहि कंतेहि य विप्पहूणा ।
ते दुब्भिगंधे कसिणे य फासे, कम्मोवगा कुणिमे आवसंति त्ति बेमि ॥ २७ ॥

व्याख्या—ते नारकाश्चिरं त्रयस्त्रिंशत्सागराणि यावदुत्कृष्टतः, जघन्यतो दशवर्षसहस्राणि यावन्नरके तिष्ठन्ति । दुर्गन्धे बीभत्से अशुभस्पर्शे इष्टैः कान्तैरभीष्टैर्विरहिता एकाकिनः महाश्रवद्वारैः कर्मादानैरष्टादशपापस्थानैः कलुषं समर्ज्य 'अनार्याः' क्रूरकर्माणो दुरभिगन्धे नरके आवसन्ति । यदर्थं पातकं विहितं तैर्विरहितास्तत्र पच्यन्ते । यदर्थमशुभं कृतं ते त्वन्यत्रोत्पन्नाः स त्वेकाक्येव तत्र पीड्यते । चिरं तत्र आवसन्तीति गाथार्थः ॥ २७ ॥ इतिः परिसमाप्त्यर्थे, ब्रवीमीति पूर्ववत् ।

इति नरकविभक्तेः प्रथमोद्देशकः परिसमाप्तः ।



## अथ द्वितीयोद्देशकः ।

उक्त प्रथमोद्देशकः, अथ द्वितीयः समारभ्यते—

अहावरं सासयदुक्खधम्मं, तं भे पवक्खामि जहातहेणं ।
बाला जहा दुक्कडकम्मकारी, वेदंति कम्माइं पुरे कडाइं ॥ १ ॥

व्याख्या—अथाऽनन्तरं शाश्वतदुःखधर्मं-अक्षिनिमेषमपि कालं अविद्यमानसुखलेशं यावदायुस्तावद्दुःखमेवास्ति, तदहं 'याथातथ्येन' यथा व्यवस्थितं तथा वक्ष्ये 'बालाः' परमार्थमजानानाः यथा कृतानि पुरा कृतानि दुष्कृतानि तथैव वेदयन्ति-अनुभवन्ति । तथैव कथयामीति गाथार्थः ॥ १ ॥ तदेवाह—

हत्थेहि पादेहि य बंधिऊणं, उदरं विकत्तंति खुरासिएहिं ।
गिह्णित्तु बालस्स विहत्तु देहं, वद्धं थिरं पिट्ठितो उद्धरंति ॥ २ ॥

व्याख्या—ते परमाधार्मिकाः नारकान् हस्तपादेषु बद्धा क्षुरप्रासिभिर्नानाविधैरायुधविशेषैर्विदारयन्त्युदरम् । तथा 'बालस्य' अकिञ्चित्करस्याऽपरस्य लकुटादिभिर्विविधं हत्वा देहं गृहीत्वा च पृष्ठिदेशे 'वध्रं' चर्म 'उद्धरन्ति' विकर्त्तयन्ति वामतो दक्षिणतः पृष्ठितोऽग्रतश्च शरीरस्थं चर्म पातयन्तीति गाथार्थः ॥ २ ॥

बाहूं पकत्तंति समूलतो से, मुहं(थूलं) वियासं मुहे आदहंति ।
रहंसि जुत्तं सरयंति बालं, आरुस्स विंधंति तुदेण पिट्ठे ॥ ३ ॥

व्याख्या—ते परमाऽधार्मिकास्तिसृषु नरकपृथिवीषु नारकाणां मूलत आरभ्य बाहून् प्रकर्त्तयन्ति । अपरासु चतसृषु परमाऽधार्मिकाऽभावान्नारका एव नारकाणां बाहून् छिन्दन्ति । तथा–अनिच्छतोऽपि नारकस्य × मुखं विदार्य बृहत्तप्ताऽयोगोलं बलादपि मुखे प्रक्षिपन्ति× आसमन्ताद्दहन्ति । तथा–रथेऽग्निवर्णे योजयन्ति । प्राग्जन्मकृतं दुष्कृतं स्मारयन्ति । त्रपुपानावसरे त्वं मद्यपश्चासीः, स्वमाँसभक्षणावसरे तव माँममतीव प्रियमासीत्–किमिति स्वमाँसं न खादसीति । 'आरुष्य' कोपं कृत्वा प्रतोदेन पृष्ठिदेशे विध्यन्तीति गाथार्थः ॥ ३ ॥

अयं व तत्तं जलियं सजोयं, तऊवमं भूमिमणुक्कमंता ।
ते डज्झमाणा कलुणं थणंति, उसुचोइया तत्तजुगेसु जुत्ता ॥ ४ ॥

व्याख्या—तप्ताऽयोगोलकसदृशीं ज्वलितां ज्योतिर्भूतां तप्तत्रपूपमां वा भूमीं गच्छन्तस्ते दह्यमानाः करुणं 'स्तनन्ति' आरटन्ति । तथा तप्तेषु युगेषु युक्ताश्चङ्क्मितुमशक्ताः गलिबलीवर्दा इवेषुणा–प्रतोदादिना प्रेरिताः विध्यन्तः करुणमारटन्तीति गाथार्थः ॥ ४ ॥

× × एतच्चिन्हान्तर्गतपाठस्थाने " मुखे विकाश कृत्वा 'स्थूलं' बृहत्तप्तायोगोलादिकं प्रक्षिपन्त" एवमस्ति बृहद्वृत्तौ ।

वाला बला भूमिमणुक्कमंता, पविज्जलं लोहपहं व तत्तं ।
जंसीऽभिदुग्गंसि पवज्जमाणा, पेसे व दंडेहिं पुरा करंति ॥ ५ ॥

व्याख्या—ते 'बालाः' निर्विवेकिनः प्रज्वलितलोहपथमिव तप्तां भुवं 'पविज्जलं'ति रुधिरपूयादिना पिच्छिलां बलादनिच्छन्तोऽपि प्रेर्यमाणाः विरसमारसन्ति । तथाभिदुर्गे मार्गे प्रेर्यमाणाः न सम्यग्गच्छन्ति ततस्ते नरकपालाः 'प्रेष्यानिव' कर्मकरानिव बलीवर्दानिव वाहयित्वा गस्मिन्नग्रः कुर्वन्ति । न ते स्वेच्छया गन्तुं स्थातुं वा लभन्ते वराका इति गाथार्थः ॥ ५ ॥

ते संपगाढंसि पवज्जमाणा, सिलाहि हम्मंतिऽभिपातिणीहिं ।
संताविणी नाम चिरट्ठितीया, संतप्पती जत्थ असाहुकम्मा ॥ ६ ॥

व्याख्या—ते नारकाः 'सम्प्रगाढे' बहुवेदनाऽऽक्रान्ते नरके मार्गे वा वहन्तः असुरैः सम्मुखपातिनीभिः शिलाभिरभिहन्यन्ते । तथा सन्तापिनी—कुम्भी, सा च चिरस्थितिका, तत्र पतितो जन्तुर्बहुवेदनाग्रस्त आस्ते, यत्र च पीड्यतेऽसाधुकर्म्मा, जन्मान्तरकृताऽशुभाऽनुष्ठानवशादिति गाथार्थः ॥ ६ ॥

कंदूसु पक्खिप्प पयंति बालं, ततो विदड्ढा पुण उप्पयंति ।
ते उड्ढकाएहिं पखज्जमाणा, अवरेहिं खज्जंति सणप्फएहिं ॥ ७ ॥

व्याख्या—तं बालं नारकं 'कन्दुषु' भ्राष्ट्रेषु प्रक्षिप्य चणकवत्पचन्ति । ते पच्यमाना ऊर्ध्वमुच्छलन्ति । तत ऊर्ध्वमु-

छलन्तो [ उङ्कुकाएहिं ] द्रोणैः काकैर्वैक्रियैः प्रखाद्यमानाः अन्यतो नष्टाः सन्तः 'सणप्फएहिं'ति सिंहव्याघ्रादिभिर्भक्ष्यन्त इति गाथार्थः ॥ ७ ॥ किञ्च—

समूसियं नाम विधूमठाणं, जं सोयतत्ता कलुणं थणंति ।
अहोसिरं कट्टु विगत्तिऊणं, अयं व सत्थेहिं समोसवेंति ॥ ८ ॥

व्याख्या—'समुच्छ्रितं' चिताकृतिः विधूमाऽग्निस्थानं, एवंविधानि नरकेषु यातनास्थानानि विद्यन्ते, तत्र ते नारकाः शोकवितप्ताः सन्तः पतिताः करुणं स्तनन्ति, तथा अधःशिरः कृत्वा देहं विकृत्य शस्त्रैश्च, अयोवल्लोहवत् खण्डशः खण्डयन्तीति गाथार्थः ॥ ८ ॥ अपि च—

समूसिया तत्थ विसूणियंगा, पक्खीहिं खज्जंति अओमुहेहिं ।
संजीविणी नाम चिरट्ठितीया, जंसी पया हम्मइ पावचेया ॥ ९ ॥

व्याख्या—तत्र नरके नारका ऊर्ध्वबाहवोऽधःशिरसः स्तम्भादौ परमाऽधार्मिकैर्लम्ब्यन्ते, सौनिकैः पशव इव लम्बिताः सन्तो 'विसूणियंग'त्ति उत्कृत्ताङ्गा—अपगतत्वचः कृताः सन्तः, पक्षिभिरयोमुखै—र्वज्रचञ्चुभिर्भक्ष्यन्ते । एवं कदर्थ्यमाना अपि न म्रियन्ते । अतो नरकभूमिः सञ्जीवनी—जीवितदात्री नरकभूमिस्तत्र गतः खण्डशश्छिन्नोऽपि न म्रियते, स्वायुषि सतीति, सा च सञ्जीविनीभूमिश्चिरस्थितिका, उत्कृष्टतस्त्रयस्त्रिंशत्सागरोपमाणि यावत् 'प्रजाः' सत्त्वाः प्राणिनः पापचेतसो

हन्यन्ते मुद्गरादिभिरत्यन्तं पिष्टा अपि मुमूर्षवोऽपि न म्रियन्ते, अपितु पारदवन्मिलन्तीति गाथार्थः ॥ ९ ॥ अपि च—

तिक्खाहिं सूलाहिऽभितावयंति, वसोवगं सावययं व लद्धुं ।
ते सूलविद्धा कलुणं थणंति, एगंतदुक्खं दुहओ गिलाणा ॥ १० ॥

व्याख्या—ते नरकपालाः दुष्कृतकारिणं नारकं तीक्ष्णाभिरयोमयीभिः शूलाभिरभितापयन्ति, यथा व्याधाः श्वापदं कालपृष्ठसूकरादिकं स्ववशं कृत्वा कदर्थयन्ति, तथा तेऽपि नारकान् कदर्थयन्ति, परं शूलाभिर्विद्धा अपि न म्रियन्ते । केवलं करुणं 'स्तनन्ति' आक्रन्दन्ति । तथा एकान्तेनाऽन्तर्बहिश्च ग्लानाः—अपगतप्रमोदाः सदा दुःखमनुभवन्तीति गाथार्थः ॥१०॥

सदा जलं नाम निहं महंतं, जंसी जलंतो अगणी अकट्ठो ।
चिट्ठंति बद्धा बहुकूरकम्मा, अरहस्सरा केइ चिरट्ठितीया ॥ ११ ॥

व्याख्या—तत्र नरके×'निह'माघातस्थानं विद्यते, यत्र कर्मवशगाः प्राणिनो हन्यन्ते । तत्कथम्भूतं ? सदा 'ज्वलद्' देदीप्यमानं उष्णं, महद्विस्तीर्णं, यत्राऽग्निरकाष्ठः प्रज्वलन्नस्ति । तत्रैवंविधे स्थाने बहुक्रूरकर्माणो 'अरहःस्वराः' बृहदाक्रन्दशब्दाश्चिरस्थितिकाः—प्रभूतकालस्थितयस्तिष्ठन्तीति गाथार्थः ॥ ११ ॥

चिया महंतीउ समारभित्ता, छुब्भंति ते तं कलुणं रसंतं ।

× " निहन्यन्ते प्राणिनो यस्मिन् " इति हर्ष० ।

आवट्टती तत्थ असाहुकम्मा, सप्पी जहा पडियं जोइमज्झे ॥ १२ ॥

व्याख्या—तत्र परमाऽधार्मिकाः अग्निमयीं महतीं चितां निष्पाद्य महाराटिशब्दं कुर्वाणं, पूत्कुर्वन्तमपि नारकमग्निचितायां प्रक्षिपन्ति । ततस्ते नारकाः वराकाः विलीयन्ति, कृताऽसाधुकर्म्माणोऽनाचारिणो नारकाः, यथा सर्पिः-घृतं अग्निमध्ये पतितं सद्य एव विलीयते, सर्वथा विलयं याति। परं नारका न म्रियन्त एव, पारदवत्पुनः सम्मिलन्तीति गाथार्थः ॥१२॥

अथ पुनरन्यदुःखप्रकारं दर्शयति—

सदा कसिणं पुण घम्मठाणं, गाढोवणीयं अइदुक्खधम्मं ।
हत्थेहिं पाएहि य बंधिऊणं, सत्तुं व दंडेहि समारभंति ॥ १३ ॥

व्याख्या—तत्र गाढोपनीतं कर्मभिरेवंविधं घर्मस्थानमस्ति । तत्र ते नरकपालाः नारकान् हस्तपादेषु बद्ध्वा शत्रुमिव दण्डैस्ताडयन्तीति गाथार्थः ॥ १३ ॥

भंजंति बालस्स वहेण पुट्ठीं, सीसंपि भिंदिंति अओघणेहिं ।
ते भिन्नदेहा फलगं व तट्ठा, तत्ताहिं आराहिं नियोजयंति ॥ १४ ॥

व्याख्या—ते परमाऽधार्मिकाः 'बालस्य' अज्ञानिनो नारकस्य दण्डादिभिः पृष्ठिं भञ्जन्ति । शिरोऽप्ययोमयेन घनेन भिन्दन्ति-चूर्णयन्ति । ततस्ते नारकाः भिन्नदेहा-श्चूर्णिताऽङ्गोपाङ्गाः फलकमिव उभाभ्यां पार्श्वाभ्यां तक्षिताः-तनूकृताः

सन्तः [ तप्ताभिः ] आराभिर्विध्यमानास्त्रपुपानादिके कर्मणि विनियोज्यन्ते—व्यापार्यन्ते इति गाथार्थः ॥ १४ ॥ किञ्च—

अभिजुंजिया रुद्द असाहुकम्मा, उसुचोइया हत्थिवहं वहंति ।
एगं दुरूहित्तु दुवे तओ वा, आरुस्स विंधंति ककाणओ से ॥ १५ ॥

व्याख्या—ते नरकपालाः नारकान् हस्तिवाहं वाहयन्ति, यथा हस्ती वाह्यते समारुह्य, एवं तानपि वाहयन्ति । जन्मान्तरकृतं रौद्रं सत्त्वोपघातादिकं कर्म स्मारयित्वा, कथं वाहयन्ति ? तस्य नारकस्योपरि एकं द्वौ त्रीन् वा समारुह्य, अतिभारारोपणेन अवहन्तं 'आरुष्य' क्रोधं कृत्वा अङ्कुशेन विध्यन्ति । 'से' तस्य नारकस्य 'ककाणओ' त्ति मर्माणि विध्यन्ति । एवं उष्ट्रवाहं वाहयन्ति । पृष्ठेऽधिकभारारोपणं कृत्वा स्वयं द्वौ त्रीन् वा समारुहन्ति । अवहन्तं आरटन्तं च कुट्टयन्तीति गाथार्थः ॥ १५ ॥

वाला बला भूमिमणुक्कमंता, पविज्जलं कंटइलं महंतं ।
विवद्धतप्पेहिं विवण्णचित्ते, समीरिया कोट्ट वलिं करिंति ॥ १६ ॥

व्याख्या—ते 'वाला' अज्ञानिनो नारकाः बलाद्रुधिरकर्दमाविलां भूमिमाक्रमन्तः, कण्टकाकुलां च भूमिमतिक्रमितुमशक्नुवन्तो नरकपालैः प्रेर्यन्ते । ततो (विपन्नचित्ताः—)विपण्णाः मूर्छितास्ते वराका(स्तर्पकैः) बध्यन्ते । ततस्ते नरकपालाः समीरिताः—पापेन कर्मणा प्रेरितास्तान्नारकान् कुट्टयित्वा—शरीरं खण्डशः कृत्वा 'वलिं करिंति' नगरबलिवच्चतुर्षु दिक्षु

विक्षिपन्तीति गाथार्थः ॥ १६ ॥ किञ्च—

वेतालिए नाम महाभितावे, एगायते पव्वयमंतलिक्खे ।
हम्मंति तत्था बहुकूरकम्मा, परं सहस्साण मुहुत्तगाणं ॥ १७ ॥

व्याख्या—नामशब्दः सम्भावनायां। नरकेषु एको महान् [दीर्घः] एकशिलाघटितो नरकपालैरेव वैक्रियो निष्पादितः, अन्तरिक्षे पर्वतोऽस्ति। दीर्घोऽतिविस्तृतः अत्युच्चः, तत्र च नरके तमोबाहुल्यम्। ततो नारकाः परमाऽधार्मिकैः प्रेर्यन्ते। आरुहन्तु विषममिमं गिरिं, ततस्ते तमोरूपत्वात् हस्तस्पर्शिकया समारुहन्तः अशक्नुवन्तश्च हन्यन्ते। बहुक्रूरकर्माणो वराकाः, सहस्रसंख्यानां मुहूर्त्तानां परं प्रकृष्टं काल, एतावता प्रभूतं कालं यावत् हन्यन्त इति गाथार्थः ॥ १७ ॥

संबाहिया दुक्कडिणो थणंति, अहो य राओ परितप्पमाणा ।
एगंतकूडे नरए महंते, कूडेण तत्था विसमे हताओ ॥ १८ ॥

व्याख्या—ते नारकाः बहुपापोपचयाः 'दुष्कृतिनो' महापापाः अहर्निशं परितप्यमानाः—अतिदुःखेन पीड्यमानाः, असुरैश्च हन्यमानाः करुणं दीनं 'स्तनन्ति' आक्रन्दन्ति। कथम्भूते नरके? एकान्तकूटे—दुःखोत्पत्तिस्थाने, महति विस्तीर्णे पतिताः प्राणिनः 'कूटेन' गलयन्त्रपाशादिना पाषाणसमूहेन वा हताः सन्तो, नवरमाक्रन्दमेव कुर्वन्ति इति गाथार्थः ॥१८॥

भंजंति णं पुव्वमरी सरोसं, समोग्गरे ते मुसले गहेउं ।

ते भिन्नदेहा रुहिरं वमंता, उम्मुद्धगा धरणितले पडंति ॥ १९ ॥

व्याख्या—पूर्वमरय इव-जन्मान्तरवैरिण इव परमाऽधार्मिकाः, अथवा जन्मान्तरवैरिणो वा नारकाः, नारकाणां सरोषं शरीराणि, समुद्गराणि मुशलानि गृहीत्वा भञ्जन्ति-गाढप्रहारैश्चूर्णयन्ति । ते तु पुनरत्राणाः शस्त्रप्रहारैः रुधिरमुद्वमन्तो अधोमुखा धरणीतले पतन्तीति गाथार्थः ॥ १९ ॥

अणासिया नाम महासियाला, पागब्भिणो तत्थ सया सकोवा ।
खज्जंति तत्था बहुकूरकम्मा, अदूरया संकलियाहि बद्धा ॥ २० ॥

व्याख्या—तस्मिन्नरके एवंविधाः महाशृगालाः सन्ति, पर वैक्रियाः परमाऽधार्मिकरचिताः, कथम्भूताः ? महादेहप्रमाणाः ‘ अनशिताः ’ बुभुक्षिताः ‘ प्रगल्भिताः ’ अतिरौद्ररूपाः अतिधृष्टाः निर्भयाः सन्ति । सदा कुपितैस्तैः शृगालैस्ते नारका भक्ष्यन्ते-खण्डशः क्रियन्ते । शृंखलादिभिर्बद्धाः-अयोमयनिगडनिगडिताः, अदूरगाः-परस्परसमीपवर्त्तिनस्तैः शृगालैर्भक्ष्यन्त इति गाथार्थः ॥ २० ॥ किञ्च—

सयाजला नाम नदीभिदुग्गा, पविज्जलं लोहविलीणतत्ता ।
जंसीभिदुग्गंसि पवज्जमाणा, एगायताणुक्कमणं किरंति ॥ २१ ॥

व्याख्या—तत्र तस्मिन्नरके, सदाजला नाम नित्यवाहिनी अगाधा अलब्धपारा महाविषमा नदी समस्ति, अग्नितप्तं,

सद्विलीनं-द्रवीभूतं यल्लोहं-अयस्तादृशजला। द्रवीभूतोष्णलोहसदृशपानीया सदाजला वहति, तस्यां च अभिदुर्गायां नद्यां प्रपद्यमानाः नारका [एकाकिनो] अत्राणाः अनुक्रमणं-तस्यां गमनं प्लवनं कुर्वन्तीति गाथार्थः ॥ २१ ॥

पुनर्नारकाणां दुःखविशेषं दर्शयितुमाह—

एयाइं फासाइं फुसंति बालं, निरंतरं तत्थ चिरट्ठितीयं ।
ण हम्ममाणस्स उ होइ ताणं, एगो सयं पच्चणुहोइ दुक्खं ॥ २२ ॥

व्याख्या—एतानि पूर्वोक्तानि 'स्पर्शानि' दुःखानि 'बालं' नारकं बहुकालं यावत् 'स्पृशन्ति' दुःखयन्ति। 'निरन्तरं' विश्रामरहितं × "अच्छिनिमेलणमित्तं पि, नत्थि सुहं दुक्खमेव अणुबद्धं। नरए नेरईयाणं, अहोनिसं पच्चमाणाणं ॥ १ ॥" इति वचनात्तत्रस्थो नारकः 'एको' असहाय एव, यदर्थं पातकमर्जितं ते तु दूरे स्थिताः, स त्वेकाक्येव नरकाऽनले पच्यते। स्वकर्मफलभुजो हि जन्तवः, न कोऽपि दुःखं संविभज्य गृह्णाति। यतो "मया परिजनस्याऽर्थे, कृतं कर्म सुदारुणम्। एकाकी तेन दह्येहं, गतास्ते फलभोगिनः ॥ २ ॥" इति गाथार्थः ॥ २२ ॥ किञ्चाऽन्यत्—

× "तत्र चिरस्थितिकं त। हन्यमानस्य नारकस्य न किञ्चित्त्राणं स्यात्, यथा शीतेन्द्रेण लक्ष्मणस्य नरकदुःखमनुभवतस्त्राणोद्यतेनापि न त्राणं कृतमिति।" हर्ष०।

१ अक्षिनिमीलनमात्रमपि नास्ति सुखं दुःखमेवानुबद्धम्। निरये नैरयिकाणा अहर्निशं पच्यमानानाम् ॥ १ ॥

जं जारिसं पुव्वमकासि कम्मं, तमेव आगच्छति संपराए ।
एगंतदुक्खं भवमज्जिणित्ता, वेदंति दुक्खी तमणंतदुक्खं ॥ २३ ॥

व्याख्या—येन यादृशं यत् स्थितिकं येन येन भावेन पूर्वभवे कर्म बद्धं, तत् कर्म तादृग्भूतमेव ('सम्पराये' संसारे) जन्तोरुदयमायाति। परं नरके निःकेवलं दुःखरूपं भवमर्जयित्वा असातावेदनीयरूपमनन्त-मन्येन नोपशमनीयमप्रतीकारं दुःखं वेदयन्तीति गाथार्थः ॥ २३ ॥

अथोपदेशस्वरूपं दर्शयति—

एयाणि सोच्चा णरगाणि धीरे, न हिंसए किंचण सव्वलोए ।
एगंतदिट्ठी अपरिग्गहे उ, बुज्झेज्ज लोयस्स वसं न गच्छे ॥ २४ ॥

व्याख्या—'एतान्' पूर्वोक्तान् दुःखविशेषान् श्रुत्वा 'धीरः' प्राज्ञ एतत् कुर्यात्तद्दर्शयति—सर्वस्मिन्नपि लोके न कमपि प्राणिनं हिंस्यात्—न व्यापादयेत्, एकान्तदृष्टि—र्निश्चलसम्यक्त्वः, तथाऽपरिग्रहः, एवंविधो न कमपि त्रसं वा स्थावरं वा प्राणिनं हिंस्यान्न व्यापादयेत्, तथा लोकमशुभकर्मकारिणं तद्विपाकफलं भुञ्जन्तं वा 'बुध्येत' जानीयात् यन्महापाप-कारिणो नरकेष्वनेकधा कदर्थ्यन्ते । तत्कदर्थना चावगम्य न तस्य वशं गच्छेत्—अशुभं कर्म न समाचरणीयं । यदि वा लोकं—कषायलोकं बुध्येत "दिंति कसाया भवमणंतं" इति ज्ञात्वा कषायवशं न गच्छेदिति गाथार्थः ॥ २४ ॥

एवं तिरिक्खे मणुयामरेसुं, चतुरंतणंतं तयणूविवागं ।
स सव्वमेयं इति वेदइत्ता, कंखेज्ज कालं धुवमायरेज्ज त्ति बेमि ॥ २५ ॥

व्याख्या—एवमशुभकर्मकारिणां प्राणिनां तिर्यग्मनुष्याऽमरेष्वपि 'चतुरन्तं' चतुर्गतिकमनन्तं (तदनुरूपं) दुःखविपाकं (स-बुद्धिमान्) सर्वमेतत्-पूर्वोक्तस्वरूपं 'विदित्वा' ज्ञात्वा 'ध्रुवं' संयममाचरन् मृत्युकालमाकाङ्क्षेत् । को भावः ? संसारान्तर्गतानां प्राणिनां केवलं दुःखमेव, अतो 'ध्रुवो' मोक्षः संयमो वा, तत्रोद्यमो विधेयो यावज्जीवमिति गाथार्थः ॥ २५ ॥
इतिः परिसमाप्तौ, ब्रवीमीति पूर्ववत् ।

इति श्रीपरमसुविहितखरतरगच्छविभूषणश्रीमत्साधुरङ्गगणिवरगुम्फितायां श्रीमत्सूत्रकृताङ्गदीपिकायां
पञ्चमे नरकविभक्त्याख्येऽध्ययने द्वितीयोद्देशकः समाप्तस्तत्समाप्तौ च नरकविभक्त्यध्ययनं
पञ्चमं परिसमाप्तमिति ।

## अथ षष्ठं वीरस्तुत्यध्ययनम् ।

उक्तं पञ्चमाऽध्ययनं, साम्प्रतं षष्ठं प्रारभ्यते। तत्र नरकविभक्त्यध्यनं श्रीमहावीरवर्द्धमानस्वामिना प्रतिपादितं, तस्याऽनेन गुणकीर्त्तनद्वारेण चरितं प्ररूप्यते, प्रणेतुर्महिमावर्णने शास्त्रस्याऽपि महिमैव दीप्यते, अत एव श्रीवीरस्तवनं प्रारभ्यते। तत्रेयमादिगाथा—

पुच्छिंसु णं समणा माहणा य, अगारिणो या परतित्थिया य ।
से के? इमं नितियं धम्ममाहु, अणेलिसं साहुसमिक्खयाए ॥ १ ॥

व्याख्या—नरकविभक्तिं श्रुत्वा संसारादुद्विग्नमनसः श्रीसुधर्मस्वामिनमप्राक्षुः–पृष्टवन्तः, यथा केनैवम्भूतो धर्मः संसारोत्तरणसमर्थः प्रतिपादितः? अथ के पृष्टवन्तः? णमिति वाक्याऽलङ्कारे, श्रमणाः ब्राह्मणास्तथाऽगारिणः क्षत्रियादयः, ये च शाक्यादयः परतीर्थिकास्ते पृष्टवन्तः। किम्? तदिति दर्शयति। 'से के इमं'ति स कः? य इमं धर्मं भवजलनिधितारणतरण्डप्रायं 'आह' उक्तवान्। ईदृशमनन्यसदृश–मतुल्यमित्यर्थः। 'साधुसमीक्षया' तत्त्वपरिच्छित्त्या यदि वा 'साधुसमीक्षया' समतयोक्तवान् इति गाथार्थः॥ १ ॥ अथ तस्यैव ज्ञानादिगुणाऽवगतये प्रश्नमाह—

कहं च णाणं कह दंसणं से, सीलं कहं नायसुतस्स आसी? ।

जाणासि णं भिक्खु! जहातहेणं, अहासुतं बूहि जहा णिसंतं ॥ २ ॥

व्याख्या—कथम्भूतं तस्य भगवतो ज्ञानं ? कथम्भूतं च ' से ' तस्य दर्शनं ? शीलं च यमनियमरूपं, कीदृग् ' ज्ञातसुतस्य ' भगवतो महावीरस्याऽऽसीदऽभूत् ? यदेतन्मया पृष्टं तद्भिक्षो–सुधर्मस्वामिन् ! याथातथ्येन त्वं जानासि, यथा सम्यगवगच्छसि, णमिति वाक्यालङ्कारे, तदेतत्सर्वं यथा श्रुतं त्वया, यथाऽवधारितं, यथा दृष्टं तथा सर्वं ' ब्रूहि ' कथय। एवं पृष्टः सुधर्मस्वामी जम्बूस्वाम्याऽऽदिपृच्छकानां पुरः श्रीवर्द्धमानस्वामिनो गुणान् कथयतीति गाथार्थः ॥ २ ॥ तदेवाह—

खेयन्नए से कुसले महेसी, अणंतनाणी य अणंतदंसी ।
जसंसिणो चक्खुपहे ठियस्स, जाणाहि धम्मं च धिइं च पेहा ॥ ३ ॥

व्याख्या—स भगवान् खेदज्ञः–संसाराऽन्तर्वर्तिनां जन्तूनां कर्मविपाकजं दुःखं वेत्ति तेन खेदज्ञः, कर्मविपाकजनितदुःखश्रमं सर्वेषां जानातीति। अथवा क्षेत्रज्ञः–यथाऽवस्थिताऽऽत्मस्वरूपपरिज्ञानादात्मज्ञः, अथवा क्षेत्र–माकाशं, तज्जानातीति क्षेत्रज्ञः–लोकाऽलोकस्वरूपज्ञाता। तथा ' कुशलः ' प्राणिनां कर्मोच्छेदनविधौ निपुणः, तथा महर्षिस्त(पश्चरणानुष्ठायी, त)थाऽनन्तज्ञानी अनन्तदर्शी च। तथा त्रिभुवनव्यापकं यशोऽस्येति यशस्वी, तस्य लोकस्य चक्षुष्पथे स्थितस्य, भवस्थकेवल्यवस्थायामिति। सर्वपदार्थाऽऽविर्भावनेन चक्षुर्भूतस्य भगवतः प्ररूपितं धर्मं जानीहि। तथा धृतिं रतिं च संयमे तस्य भगवतो महोपसर्गैरप्यचलितसत्त्वस्य जानीहि–प्रेक्षस्व, एवंविधो भगवान् आसीत्तेनाऽयं धर्मः प्ररूपित इति गाथार्थः ॥ ३ ॥

पुनस्तद्गुणान् कथयितुमाह—

उड्ढं अहेयं तिरियं दिसासु, तसा य जे थावर जे य पाणा ।
स णिच्चणिच्चेहि समिक्ख पन्ने, दीवेव धम्मं समियं उदाहु ॥ ४ ॥

व्याख्या—ऊर्द्धमधस्तिर्यग्दिशासु ये जन्तवस्त्रसास्तथा स्थावराश्च, तान् सर्वानपि(स) भगवान् केवलज्ञानित्वाज्जानाति । कथं जानाति ? नित्यानित्यभेदेन, द्रव्यास्तिकतया नित्यान् पर्यायास्तिकतया त्वनित्यान् समीक्ष्य 'प्रज्ञः' केवलज्ञानेन सम्यग् ज्ञात्वा, भगवान् द्वीप इव संसाराऽर्णवपतितानामाश्वासहेतुत्वाद्द्वीप इव, यदि वा सर्वपदार्थप्रकाशकत्वाद्दीप इव, संसारार्णवतारणक्षमं धर्मं समतया 'उदाहुः' उदाहृतवानिति गाथार्थः ॥ ४ ॥

से सव्वदंसी अभिभूय नाणी, णिरामगंधे धिइमं ठितप्पा ।
अणुत्तरे सव्वजगंसि विज्जं, गंथाअतीते अभए अणाऊ ॥ ५ ।

व्याख्या—यो धर्मं प्ररूपितवान् स भगवान् कीदृशः ? 'से सव्वदंसी' स वर्द्धमानस्वामी सर्वदर्शी, परीषहान् 'अभिभूय' जित्वा ज्ञानी जातः, तथा निरामगन्धः, अपगतः 'आमो' अविशोधिकोट्याख्यो 'गन्धो' विशोधिकोट्याख्यो यस्मात् स निरामगन्धः, मूलोत्तरगुणविशुद्धसंयमपालक इत्यर्थः । तथा संयमे 'धृतिमान्' दृढः । तथा स्थितात्मा अशेषकर्मक्षया(द्) व्यवस्थितः आत्मा स्वरूपे यस्य, सर्वजगति 'अनुत्तरः' प्रधानः, तथा 'विद्वान्' सर्वज्ञस्तथा—

'ग्रन्थातीतः,' बाह्याऽभ्यन्तरग्रन्थरहितः, अभयः–सप्तभयवर्जितः, 'अणाऊ' अनायुर्दग्धकर्मबीजत्वात् संसारे पुनर-नुत्पादादेवंविधो भगवान् शुद्धधर्मप्ररूपक इति गाथार्थः ॥ ५ ॥

से भूतिपन्ने अणिए अ चारी, ओहंतरे धीरे अणंतचक्खू ।
अणुत्तरं तप्पति सूरिए वा, वइरोयणिंदे व तमं प(गासे)भासे ॥ ६ ॥

व्याख्या—स भगवान् भूतिप्रज्ञः–अनन्तज्ञानवानित्यर्थः। अनियतचारी–अप्रतिबद्धविहारी, परिग्रहत्यागात्–'ओहंतरे' संसारसागरतरणशीलः, धीरो–धीर्बुद्धिस्तया राजते, परीषहोपसर्गाक्षोभ्यो वा धीरः, तथा अनन्तचक्षुः–अनन्तं केवल-ज्ञानात्मकं चक्षुर्यस्य (स) तथा, यथा सूर्योऽनुत्तरं सर्वग्रहेभ्योऽधिकं तपति, तस्मान्न कश्चिदधिकस्तेजसा, तथा भगवानपि–सर्वोत्तमः। तथा वैरोचनोऽग्निः, स एव दीप्तत्वादिन्द्रः, यथाऽसाऽवग्निस्तमोऽपनीय प्रकाशयति तथा भगवानपि तमो-ऽपनीय यथाऽवस्थितपदार्थप्रकाशनं करोतीति गाथार्थः ॥ ६ ॥

अणुत्तरं धम्ममिणं जिणाणं, णेया मुणी कासव आसुपन्ने ।
इंदेव देवाण महाणुभावे, सहस्सणेता दिविणं विसिट्ठे ॥ ७ ॥

व्याख्या—त(य)था 'जिनानां' ऋषभादितीर्थकृतां धर्मोऽयमनुत्तरः–सर्वोत्कृष्टः, तथा 'मुनिः' श्रीवर्द्धमानस्वामी काश्यपगोत्रीयो धर्मप्रणेता उत्पन्नदिव्यज्ञानः सर्वोत्तमो ज्ञेय इति। यथा स्वर्गे देवसहस्राणां नायको महानुभावो–महा-

प्रभावसम्पन्न इन्द्रो गीयते, यथा हि देवेन्द्रः सर्वदेवानां 'नेता' प्रणायको विशिष्टबलरूपैश्वर्यवर्णादिभिः प्रधानः, एवं भगवानपि सर्वेभ्योऽपि जगज्जन्तुजातेभ्यो लोकोत्तरत्वाद् बलरूपवर्णादिभिः सर्वोत्तमः 'लोकोत्तम' इति वचनात् महानुभावश्चेति गाथार्थः ॥ ७ ॥ अपि च—

से पन्नया अक्खयसागरे वा, महोदही वा वि अणंतपारे।
अणाइले या अकसाइभिक्खू, सक्के व देवाहिवई जुईमं ॥ ८ ॥

व्याख्या—स भगवान् प्रज्ञया अक्षयः, न तस्य ज्ञेयवस्तुनि क्वापि प्रज्ञा क्षीयते, अनन्तप्रज्ञत्वात्। यथा सागरः अक्षयः 'महोदही वा' सामान्यसागरेभ्यो यथा महोदधिरिव-स्वयम्भूरमण इव, यथा महोदधिः सर्वसागरेभ्योऽधिकः 'अनन्तपारः' अलब्धपारो गम्भीरोऽक्षोभ्यजलश्च, तथा भगवानपि स्वयम्भूरमणादप्यनन्तगुणः। यथा सागरो ('अनाविलः-) अकलुषस्तथा भगवानपि कर्ममलाऽपगमादकलुषः। तथा अकषायी-कषायविप्रमुक्तः। तथा 'भिक्षुः' सर्वत्रैलोक्यपूज्योऽपि भिक्षामात्रोपजीवित्वाद्भिक्षुरेवाऽसौ, नाऽक्षीणमहानसीलब्धिमुपजीवतीति। तथा पुनर्भगवान् कीदृशः? शक्र इव-देवाऽधिपतिरिव द्युतिमान्-दीप्तिमान्। तथा श्रीवर्द्धमानस्वामी सर्वजगत्प्रधान इति गाथार्थः ॥ ८ ॥

से वीरिएणं पडिपुन्नवीरिए, सुदंसणे वा णगसव्वसिट्ठे।
सुरालए वासि मुदागरे से, विरायए णेगगुणोववेए ॥ ९ ॥

व्याख्या—अथ मेरोरुपमया भगवतो वर्णनं, यथा सुदर्शनाऽऽख्यो मेरुः सर्वपर्वतेषु श्रेष्ठस्तथा भगवान् श्रीमहावीरः सर्वैश्वर्यगुणेन श्रेष्ठः। कथम्भूतो भगवान्? 'से वीरिएणं पडिपुन्नवीरिए' वीर्येण—बलधृतिसंहननादिभिः प्रतिपूर्णवीर्यः। तथा यथा मेरुः 'सुरालयः' स्वर्गस्तन्निवासिदेवानां 'मुदाकरो' हर्षजनकः, (अनेकैर्गुणैः) प्रशस्तवर्णरसगन्धस्पर्शप्रभावादिभिरुपेतो विराजते, तथा भगवानपि सर्वगुणैरुपेतो विराजत इति गाथार्थः ॥ ९ ॥

सयं सहस्साण य जोयणाणं, तिकंडगे पंडगवेजयंते।
से जोयणे णवणवतीसहस्से, उध्धुसिए हेट्ठसहस्समेगे ॥ १० ॥

व्याख्या—स मेरुर्योजनसहस्राणां शतमुच्चैस्त्वेन कीर्त्यते। तथा (त्रीणि कण्डकानि यस्य स) त्रिकण्ड(क):, भूमिमय १—जाम्बूनदमय २—वैडूर्यमय ३—भेदात्। तथा पण्डकवैजयन्तः—पण्डकवनं शिरसि व्यवस्थितं वैजयन्तीकल्पं—पताकाप्रायं विद्यते। तथा स मेरुर्नवनवतियोजनसहस्राण्यूर्द्ध्वमुच्छ्रितः, अधोयोजनसहस्रमवगाढ इति गाथार्थः ॥ १० ॥

पुट्ठे णभे चिट्ठइ भूमिवट्ठिए, जं सूरिया अणुपरियट्टयंति।
से हेमवन्ने बहुणंदणे य, जंसी रतिं वेदयंती महिंदा ॥ ११ ॥

व्याख्या—स मेरुर्नभोव्याप्य (भूमौ) तिष्ठति, यं सूर्याद्याः सर्वेऽपि ज्योतिष्काः प्रदक्षिणया अनुपर्यटन्ति परिभ्रमन्तीत्यर्थः। 'से हेमवन्ने' सुवर्णवर्णस्तथा बहुनन्दनः, तथाहि चत्वारि वनानि, तत्र भूमौ भद्रशालवनं, ततः पञ्चयोजनशता-

न्यारुह्य मेखलायां नन्दनं, ततो द्विषष्टियोजनसहस्राणि पञ्चशताऽधिकानि अतिक्रम्यते, तत्र सौमनसं वनं ३, ततः षट्त्रिंशत्सहस्राणि गम्यते, तत्र शिखरे पाण्डुकवनं ४ चतुर्थं । तदेवं मेरुश्चतुर्नन्दनवनाद्युपेतो विचित्रक्रीडास्थानं, यत्र महेन्द्राः समागत्य रतिं वेदयन्ति । रमणीयगुणे मेरौ समागत्य (?) महेन्द्रा अप्यागत्य क्रीडामनुभवन्तीति गाथार्थः ॥ ११ ॥

से पव्वए सद्दमहप्पगासे, विरायए कंचणमट्ठवन्ने ।
अणुत्तरे गिरीसु य पव्वदुग्गे, गिरीवरे से जलिए व भोमे ॥ १२ ॥

व्याख्या—पुनः स मेरुः कीदृशः ? मन्दरो मेरुः सुदर्शनः सुरगिरिरित्यादिशब्दै–र्नामभिर्महाप्रकाशः–महाप्रसिद्धिं प्राप्तो विराजते । तथा काञ्चनमृष्टवर्णः–( शुद्ध ) काञ्चनवर्ण इत्यर्थः । अनुत्तरो गिरिषु–सर्वगिरिषु प्रधानः । ' पव्वदुग्गे ' पर्वभि–र्मेखलादिभिर्दुर्गो–विषमः, सामान्यजन्तूनां दुरारोहो ' गिरिवरः ' पर्वतमतल्लिका, मणिभिरौषधिभिश्च ज्वलितो–देदीप्यमानतया ' भौम इव ' भूदेश इव ज्वलितः "जहा से णगाण पवरे, सुमहं मंदरे गिरी । णाणोसहिपज्जलिए" इति वचनात् सर्वगिरिषु प्रधानभूत इति गाथार्थः ॥ १२ ॥

महीइ मज्झंमि ठिते णगिंदे, पन्नायते सूरियसुद्धलेसे ।
एवं सिरिए उ स भूरिवन्ने, मणोरमे जोयइ अच्चिमाली ॥ १३ ॥

१ यथा स नगेषु प्रवरः सुमहान्मन्दरो गिरिः । नानौषधिप्रज्वलितः ।

व्याख्या—महा-रत्नप्रभापृथिव्या मध्यदेशे जम्बूद्वीपस्तस्य बहुमध्यदेशभागे स्थितः। समभूभागे दशसहस्रयोजन-विस्तीर्णः शिरसि सहस्रमेकं अधस्ताद्दशसहस्राणि नवति योजनानि योजनैकादशभागैर्दशभिरधिकानि विस्तीर्णः चत्वारिंशद्योजनोच्छ्रितचूलिकोपशोभितो 'नगेन्द्रः' पर्वतप्रधानो मेरुः, प्रकर्षेण ज्ञायते। 'सूरियसुद्धलेसे' आदित्यसमतेजा, एवं श्रिया 'तु'शब्दाद्विशिष्टतरया 'स' मेरुर्भूरिवर्णः-अनेकवर्णरत्नोपशोभितत्वात्। तथा मनोरमो, रमणीयत्वात् अर्चिमालीवा-ऽऽदित्य इव स्वतेजसा दशाऽपि दिशः प्रकाशयतीति गाथार्थः ॥ १३ ॥ अथ मेरूपमानं भगवति योजयति—

सुदंसणस्सेव जसो गिरिस्स, पवुच्चई महतो पव्वयस्स।
एओवमे समणे नायपुत्ते, जातीजसोदंसणनाणसीले ॥ १४ ॥

व्याख्या—एतद्यशःकीर्त्तनं सुदर्शनस्य (गिरेः)-मेरोर्महापर्वतस्योच्यते। अथ भगवति तदुपमा योज्यते-'एओवमे' एतदुपमः श्रमणो ज्ञातपुत्रः मेरूपम इत्यर्थः। जात्या यशसा ज्ञानेन दर्शनेन शीलेन च सर्वजगत्सामान्यमनुष्येभ्यः प्रधानत्वात् श्रेष्ठः, नाऽर्हद्भ्यः (श्रेष्ठोऽन्योऽस्ति भूतले), अर्हन्तस्तु सर्वेऽपि सदृशा एव, अनन्तगुणाधारत्वादिति। यथा मेरुः सर्वगिरिषु श्रेष्ठस्तथा भगवानपि सर्वजगच्छ्रेष्ठ इति गाथार्थः ॥ १४ ॥

गिरीवरे वा निसहाययाणं, रुयए व सिट्ठे वलयायताणं।
तओवमे से जगभूतिपन्ने, मुणीण मज्झे तमुदाहु पन्ने ॥ १५ ॥

व्याख्या—यथा निषधाख्यो गिरिवरः सर्वगिरीणामायतानां मध्ये दैर्घ्येण श्रेष्ठः, तथा वलयायतानां मध्ये रुचको गिरिर्यथा प्रधानः, स हि रुचको मानुषोत्तरपर्वत इव वलयाकारेण व्यवस्थितोऽस्ति रुचकद्वीपे त्रयोदशमे, तथा भगवानपि तदुपमः । यथा निषधो दैर्घ्येण प्रधानः, रुचको वलयाऽऽकारत्वेन सर्वगिरिषु श्रेष्ठः, तथाऽपरमुनीनां मध्ये प्रज्ञया-ज्ञानेन श्रेष्ठः, एव तत्स्वरूपविद उदाहु-रुदाहृतवन्तः-उक्तवन्त इति गाथार्थः ॥ १५ ॥

अणुत्तरं धम्ममुईरइत्ता, अणुत्तरं झाणवरं झियाइ ।
सुसुक्कसुक्कं अपगंडसुक्कं, संखिंदुवेगंतऽवदातसुक्कं ॥ १६ ॥

व्याख्या—स हि भगवान् अनुत्तर-सर्वोत्कृष्टं धर्मं उदीरयित्वा-प्रकाश्यानुत्तरं ध्यानवरं ध्यायति । तथाहि-केवलज्ञानोत्पत्तेरनन्तरं सर्वोत्तमं धर्मं प्ररूपयामास भगवाँस्तदनु योगनिरोधकाले सूक्ष्मं काययोगं निरुन्धन् शुक्लध्यानस्य तृतीयं भेदं सूक्ष्मक्रियमप्रतिपाताख्यं ध्यायति, तदनु निरुद्धयोगश्चतुर्थं शुक्लध्यानभेदं व्युपरतक्रियमनिवृत्ताख्यं ध्यायति । तत्कथम्भूतं ? सुष्ठु-शुक्लात्-शुक्लम् 'अपगतगण्डं' निर्दोषाऽर्जुनसुवर्णवत् शुक्लं देदीप्यमानं, यदिवा [अप]गण्ड-मुदकफेन, तत्तुल्यं, तथा शङ्खेन्दुवदेकान्ताऽवदातं शुक्लध्यानोत्तरभेदद्वयं ध्यायतीति गाथार्थः ॥ १६ ॥ अपिच—

अणुत्तरग्गं परमं महेसी, असेसकम्मं सुविसोहइत्ता ।
सिद्धिं गते साइमणंतपत्ते, नाणेण सीलेण य दंसणेणं ॥ १७ ॥

व्याख्या—स भगवान् शैलेश्यवस्थायां *शुक्लध्यानचतुर्थभेदाऽनन्तरं साद्यपर्यवमानां सिद्धिगतिं प्राप्तः। कथम्भूतां सिद्धिगतिं? अनुत्तराग्र्यां, अनुत्तरा–सर्वोत्तमा, अग्र्या च लोकाग्रव्यवस्थिता। एवंविधा 'परमां' प्रधानां, महर्षिरशेषं कर्म विशोध्य–अपनीय विशिष्टेन ज्ञानेन दर्शनेन शीलेन च सिद्धिगतिं सम्प्राप्त इति गाथार्थः ॥१७॥ पुनर्भगवतः स्तुतिमाह—

रुक्खेसु णाए जह सामली वा, जंसी रतिं वेययंती सुवन्ना।
वणेसु वा णंदणमाहु सेट्ठं, नाणेण सीलेण य भूतिपण्णे ॥ १८ ॥

व्याख्या—वृक्षेषु यथा देवकुरुव्यवस्थितः शाल्मलीवृक्षो ज्ञातः–प्रसिद्धिं प्राप्तः। यत्र सुपर्णकुमाराः–भवनपतिदेवविशेषाः अन्यतोऽप्यागत्य क्रीडारतिं वेदयन्ति, क्रीडां कुर्वन्तीत्यर्थः। वनेषु मध्ये यथा नन्दनं वनं 'श्रेष्ठं' प्रधानं, तदपि देवाना क्रीडास्थानं। तथा ज्ञानेन केवलाऽऽख्येन शीलेन–चारित्रेण यथाख्यातेन 'श्रेष्ठः' प्रधानः, भूतिप्रज्ञः–प्रवृद्धज्ञानो भगवानपि 'श्रेष्ठः' प्रधानो महान् ज्ञेय इति गाथार्थः ॥ १८ ॥

थणियं व सद्दाण अणुत्तरे उ, चंदो व ताराण महाणुभावे।
गंधेसु वा चंदणमाहु सेट्ठं, एवं मुणीणं अपडिन्नमाहु ॥ १९ ॥

---

* शुक्लध्यानश्चतुर्धा–पुहुत्तवियक्के सवियारी १, एगत्तवियक्कअवियारी २, सुहुमकिरियाअपडिवाई ३, समुच्छिन्नकिरिए अनियट्टी ४, तृतीयभेदे केवलज्ञानोत्पत्तिः, अप्रतिपतनस्वभावत्वात्।

निव्वाणसेट्ठा जह सव्वधम्मा, ण णायपुत्ता परमत्थि नाणी ॥ २४ ॥

व्याख्या—यथा स्थितिमतां देवानां मध्ये लवसप्तमाः–पञ्चानुत्तरविमानवासिनो देवाः सर्वोत्कृष्टस्थितिवर्त्तिनः। सभानां मध्ये सुधर्मा पर्षत् श्रेष्ठा, यथा सर्वेऽपि धर्मा निर्वाणश्रेष्ठाः–मोक्षप्रधाना भवन्ति। एवं ज्ञातपुत्रा–द्वर्द्धमानस्वामिनः सकाशात् परं प्रधानमन्यद्विज्ञानं नास्ति। सर्वथैव हि भगवान् अपरज्ञानिभ्योऽधिकज्ञानी भवतीति गाथार्थः ॥ २४ ॥

पुढोवमे धुणति विगयगिद्धी, ण सन्निहिं कुव्वति आसुपन्ने ।
तरित्तु समुद्दं व महाभवोघं, अभयंकरे वीरियअणंतचक्खू ॥ २५ ॥

व्याख्या—यथा पृथ्वी सर्वपदार्थानामाधारभूता, तथा भगवानपि सर्वसत्त्वानामभयप्रदानेन धर्मोपदेशदानेन च सत्त्वाधार इति। यदि वा ( यथा ) पृथिवी सर्वसहा तथा भगवानपि " सव्वं सहे धरित्तिव्व " इति वचनात् सर्वसहः। तथा धुनाति कर्मेति शेषः। विगतगृद्धिः, गार्द्ध्य–आहाराद्यभिलाषः, स यस्माद्विगतः, न सन्निधिं करोति भगवान्। तथा ' आशुप्रज्ञः ' सर्वत्र सदोपयोगवान् केवली, न छद्मस्थ इत्यर्थः। एवंविधो महासमुद्रवद्भवौघं तीर्त्वा निर्वाणमासादितवान्, अभयंकरो वीरः, सर्वपरीषहोपसर्गसहिष्णुत्वात्, अनन्तचक्षुः–केवलज्ञानवानिति गाथार्थः ॥ २५ ॥

कोहं च माणं च तहेव मायं, लोभं चउत्थं अज्झत्थदोसा ।
एयाणि वंता अरिहा महेसी, ण कुव्वई पाव ण कारवेई ॥ २६ ॥

व्याख्या—क्रोधाद्याश्चत्वारोऽप्याध्यात्मदोषाः-संसारहेतवः। एवं चत्वारोऽपि परित्यज्य भगवान् अर्हन् जातः, तथा महर्षिः स्वयं पापं न करोति न कारयत्यन्यैरिति गाथार्थः ॥ २६ ॥

किरियाकिरियं विणयाणुवायं, अण्णाणियाणं पडियच्च ठाणं ।
से सव्वभावं इती वेयइत्ता, उवट्ठिए संजमदीहरायं ॥ २७ ॥

व्याख्या—क्रियावादिनामक्रियावादिनामज्ञानवादिनां वैनयिकवादिनां च स्थानं-दर्शनस्वरूपं दुर्गतिपातहेतुं ज्ञात्वा अपरानपि सत्त्वान् यथाऽवस्थिततत्त्वोपदेशेन वेदयित्वा-परिज्ञाप्योपस्थितः-सम्यगुत्थानेन संयमे व्यवस्थितः, स भगवान् 'दीर्घरात्रं' यावज्जीवमिति गाथार्थः ॥ २७ ॥

से वारिया इत्थि सराइभत्तं, उवहाणवं दुक्खखयट्ठयाए ।
लोगं विदित्ता आरं पारं च, सव्वं पभू वारिय सव्ववारं ॥ २८ ॥

व्याख्या—स भगवान् स्त्रियं तथा रात्रिभोजनं-उपलक्षणार्थत्वादन्यानप्याऽश्रवान् 'वारयित्वा' प्रतिषिध्य 'उपधानवान्' विशिष्टतपसा निष्टप्तदेहोऽजनि, को भावः? सर्वपापस्थानपरित्यागं विधाय घोरतपोभिः स्वदेहशोषमकरोत्। किमर्थं देहशोषकोऽजनि? दुःखक्षयार्थं। किं कृत्वा? लोकं विदित्वा 'आरं' इहलोकं 'पारं' परलोकं। यदि वा 'आरं' मनुष्यलोकं 'पारं' नारकादिकं, स्वरूपतः तत्प्राप्तिकारणं च सम्यग् ज्ञात्वा बहुशो निवारितवान्। सर्वपापस्थानक-

निवारणं कृतवानिति गाथार्थः ॥ २८ ॥

साम्प्रतं सुधर्मास्वामी तीर्थंकरगुणानाख्याय स्वशिष्यानाह—

सोच्चा य धम्मं अरिहंतभासियं, समाहितं अट्ठपओवसुद्धं ।
तं सद्दहाणा य जणा अणाऊ, इंदा व देवाहिव आगमिस्संति त्ति बेमि ॥ २९ ॥

व्याख्या—अर्हद्भिर्भाषितं धर्मं श्रुत्वा, अर्थपदविशुद्ध-मयुक्तिक महेतुकं, तमेवम्भूतमर्हद्भाषित धर्मं श्रद्धानास्तथा अनुतिष्ठन्तो 'जना' लोकाः 'अनायुषः' आयुष्कर्मरहिताः सिद्धा भवन्ति, अथवा इन्द्रादिपदवीं लभन्त इति गाथार्थः ॥२९॥

इतिः परिसमाप्तौ । ब्रवीमीति पूर्ववत् ।

इति श्रीपरमसुविहितखरतरगच्छविभूषणश्रीमत्साधुरङ्गगणिवरसन्दृब्धायां श्रीमत्सूत्रकृताङ्गदीपिकायां
वीरस्तुत्याख्यं षष्ठमध्ययनं समाप्तम् ।

## अथ सप्तमं कुशीलपरिभाषाध्ययनम् ।

समाप्तं षष्ठमध्ययनं साम्प्रतं सप्तममारभ्यते कुशीलपरिभाषाख्यं । तत्र भगवद्गुणोत्कीर्त्तनकारिणः सुशीलास्तद्विपरीताः कुशीलाः परतीर्थिकाः स्वयूथ्या वा, ते कीदृशाः ? तत्स्वरूपप्ररूपिका चेयं प्रथमगाथा—

**पुढवी य आऊ अगणी य वाऊ, तणरुक्खबीया य तसा य पाणा ।**
**जे अंडया जे य जराउपाणा, संसेयया जे रसयाभिहाणा ॥ १ ॥**

व्याख्या—पृथिव्यप्तेजोवायुकायाः सूक्ष्मबादरपर्याप्तापर्याप्तभेदेन द्रष्टव्याः। वनस्पतिकायिकाश्च तृणवृक्षबीजादिभेदाद् द्वादश भवन्ति। "रुक्खा गुच्छा गुम्मा, लया य वल्ली य पव्वगा चेव। तणवलयहरियओसहि-जलरुहकुहणा य बोधव्वा ॥ १ ॥" इति वनस्पतिभेदाः। तथा त्रसाः द्वीन्द्रियादयः प्राणास्तेऽपि भेदेन दर्शयति।+ 'अण्डजाः' पक्षिणः

+ अण्डजाः—पक्षिगृहकोकिलादयः १, पोतादिवज्जायन्ते पोतजा—हस्तिवल्गुलीचर्मचटीजलूकादयः। तत्र ' जरायुरहितो गर्भः पोतः' दशवै०अवचूरौ २, जरायुवेष्टिता जायन्ते इति जरायुजा—गोमहिष्यजाऽविकमनुष्यादयः ३, रसजा—आरनालदधितीमनादिषु कृमयः ४, सस्वेदाज्जाता इति सस्वेदजा—मत्कुणयूकादयः ५, सम्मूर्च्छजाः—शलभपिपीलिकादयः ६, उद्भिदजाः—पतङ्गखञ्जरीटादयः ७, उपपातो—देवशयन, तत्र भवा देवनारकाः ८। टिप्पनकमेतदन्यग्रन्थान्तरादुद्धृत केनापि हालाचित्कोपीयप्रतौ।

सरीसृपाश्च, जरायुजाः–पशवो मनुष्याश्च *। संस्वेदजा–यूकामत्कुणादयः, रसजाः–दधिसौवीरादिसमुद्भवाः, इत्यादिभेदभिन्नं जीवसङ्घातं प्रदर्श्याऽधुना तदुपघातदोषं दर्शयतीति गाथार्थः ॥ १ ॥

एयाइं कायाइं पवेदिताइं, एतेसु जाणे पडिलेह सायं ।
एतेण काएण य आयदंडे, एतेसु या विप्परियासुवेंति ॥ २ ॥

व्याख्या—एते षडपि पृथिव्यादयः काया भगवद्भिः प्रवेदिताः, एतेषु सातं–सुखं जानीहि । एते सर्वेऽपि जीवाः सुखैषिणो दुःखद्विषश्च, इति 'ज्ञात्वा' प्रत्युपेक्ष्य स्वकुशाग्रीयधिया पर्यालोचय, यथा–एतैः पीड्यमानैरात्मा दण्ड्यते–निःसारीक्रियते, आत्मदण्डो जायते । एतान् कायान् यो दीर्घकालं दण्डयति–पीडयति, ते (१ स) एतेष्वेव परिसमन्तादाशु शीघ्रं 'उवेंति' याति । य एतान् पीडयिष्यति स एतेष्वेव भूयो भूयः समुत्पत्स्यते । यदि वा 'विपर्यासो' व्यत्ययः, सुखार्थिभिः पीड्यन्ते पर दुःखमेव जायते, न सुखं, अयं विपर्यासः, अथवा मोक्षार्थिभिः कायसमारम्भः क्रियते × पर संसार एवैद्धिरेव, न मुक्तिरिति गाथार्थः ॥ २ ॥

जातीपहं अणुपरिवट्टमाणे, तसथावरेहिं विणिग्घायमेति ।

* "ये च जरायुजा–जम्बालवेष्टिताः समुत्पद्यन्ते, ते च गोमहिष्यजाऽविकमनुष्यादयः" इति बृहद्वृत्तौ । × प्राण्युपघातादिकं करोति ।

से जातिजातिं बहुकूरकम्मे, जं कुव्वती मिज्जति तेण बाले ॥ ३ ॥

व्याख्या—' जातिपथः ' एकेन्द्रियादिपञ्चेन्द्रियपर्यन्तः, तस्मिन् परिवर्त्तमानः-एकेन्द्रियादिषु पर्यटँस्त्रसेषु वा स्थावरेषु समुत्पन्नः सन् कायदण्डविपाकजेन कर्मणा बहुशो विनिघातमेति-विनाशमाप्नोति । स बहुकूरकर्मा जातौ जातौ उत्पत्तिं लब्ध्वा पुनस्तदेव दुष्टं कर्म करोति येन तेनैव कर्मणा '[मीयते-]'म्रियते पूर्यते, यादृशं कर्म करोति तादृशमेव पुर उदयमायाति । यदेवोप्यते तदेव लूयते, शुभे कर्मणि कृते शुभं कर्म उदेति, अशुभे त्वशुभमिति । तेनैव कर्मणा म्रियते बालो निर्विवेक इति गाथार्थः ॥ ३ ॥

अस्सिं च लोए अदुवा परत्था, सयग्गसो वा तह अन्नहा वा ।

संसारमावन्नपरंपरं ते, बंधंति वेदेंति य दुन्नियाणि ॥ ४ ॥

व्याख्या—यान्याशुकारीणि कर्माणि तान्यस्मिन्नेव जन्मनि विपाकं ददति परस्मिन् जन्मनि नरकादौ वा । एकस्मिन्नेव जन्मन्येकवारं तीव्रं विपाकं यच्छन्ति, शतशो वा, येनैव प्रकारेण त(य)दशुभमाचरन्ति तत्तथैवोदयमायाति । यतः—" वह-बंधणअब्भक्खाणा-दाणपरधणविलोयणाईणि । सव्वजहन्नो उदओ, दसगुणिओ इक्कसि कयाणं ॥ १ ॥ "

१ वधबन्धनाभ्याख्यानादानपरधनविलोपनादीनि । सर्वजघन्य उदयो दशगुणित एकशः कृतानाम् ॥ १ ॥
तीव्रतरे च प्रद्वेषे, शतगुणितः शतसहस्रकोटिगुणितः । कोटाकोटिगुणितो वा भवेद्विपाको बहुतरो वा ॥ २ ॥

" तिव्वयरे य पओसे, सयगुणिओ सयसहस्सकोडिगुणो । कोडाकोडिगुणो वा, हुज्ज विवागो बहुतरो वा ॥ २ ॥ " यथा कृतं तथैव [ सकृत् ]अनेकशो वा तस्मिन्नेव भवे जन्मान्तरे वा विपाकं ददाति । एकशोऽनेकशो वा हस्तपादशिरश्छेदादिकं वा लभन्ते । एवं बहुक्रूरकर्माणः कुशीलाः अरहट्टघटीयन्त्रन्यायेन संसारं भ्रमन्तः ' परं ' प्रकृष्टं दुःखमनुभवन्ति । दुष्टं नीतानि दुर्नीतानि—दुष्कृतानि कर्माणि उदयमायान्त्येवेति गाथार्थः ॥ ४ ॥

जे मायरं वा पियरं च हिच्चा, समणव्वते अगणिसमारभेज्जा ।

अहा हु से लोए कुसीलधम्मे, भूताइं जो हिंसति आयसाते ॥ ५ ॥

व्याख्या—ये केचन धर्मार्थितया मातरं पितरं पुत्रभार्याभ्रजनादिवर्गं ' हित्वा ' त्यक्त्वा श्रमणव्रते वय समुत्थिताः— वयं श्रमणा इति मत्वा अग्निकायं समारभन्ते, पचनपाचनादिप्रकारेण कृतकारिताऽनुमत्या अग्न्याऽऽरम्भं ये कुर्वन्ति, तीर्थङ्करगणधरादय एवमाहुः, कुशीलधर्मा सोऽय पाषण्डिकलोको गृहस्थलोको वा, य आत्मसुखार्थं भूतानि 'हिनस्ति' व्यापादयति स कुशीलधर्मा । तीर्थकरगणधरा एवमाहुरुक्तवन्त इति गाथार्थः ॥ ५ ॥

अग्निकायसमारम्भे यथा प्राणाऽतिपातः स्यात्तथा दर्शयति—

उज्जालओ पाणातिवातएज्जा, निव्वावओ अगणिनिवायएज्जा ।

तम्हा उ मेहावि समिक्ख धम्मं, ण पंडिए अगणि समारभेज्जा ॥ ६ ॥

व्याख्या—योऽग्निकायं समारभते, सोऽग्निकायमन्यांश्च त्रसस्थावरान् पृथिव्या[द्या]श्रितान् अतिपातयेत्। तथाऽग्निकायमुदकादिना 'निर्वापयन्' विध्यापयँस्तदाऽश्रितानन्यांश्च प्राणिनोऽतिपातयेत्। एवमुभयथाऽपि प्राणाऽतिपात इति, यस्मादेवं तस्मात् पण्डितो-विवेकी 'समीक्ष्य' स्वबुद्ध्या पर्यालोच्य नाऽग्निकाय समारम्भते। पण्डितोऽपि स एव, योऽग्निकायं न समारम्भते इति गाथार्थः ॥ ६ ॥ अग्निसमारम्भे कथमपरप्राणिवधः स्यात्, इत्याशङ्क्याह—

**पुढवी वि जीवा आऊ वि जीवा, पाणा य संपाइम संपयंति।**
**संसेयया कट्ठसमस्सिया य, एते दहे अगणिसमारभंते ॥ ७ ॥**

व्याख्या—पृथिवीजीवा आपोजीवास्तथा सम्पातिमाः शलभादयः [तत्राग्नौ] सम्पतन्ति, तथा संस्वेदजाः करीपादिष्विन्धनेषु घुणपिपीलिकाकृम्यादयः काष्ठाद्याश्रिताश्च ये केचन। 'एतान्' स्थावरजङ्गमान् प्राणिनः स दहेत् योऽग्निकायं समारम्भते। अतोऽग्निसमारम्भो महादोषाय। यतः श्रीउत्तराध्ययने ३५त्तमेऽध्ययने—

" तहेव भत्तपाणेसु, पयणे पयावणेसु य। पाणभूयदयट्ठाए, तम्हा भिक्खू न पए न पयावए ॥ १ ॥"

---

१ तथैव भक्तपानेसु पचने पाचनेषु च। प्राणिभूतदयार्थी तस्माद्भिक्षुर्न पचेन्न पाचयेत् ॥ १ ॥ जलधान्यनिश्रिता जीवाः पृथ्वीकाष्ठनिश्रिताः। हन्यते भक्तपानेषु तस्माद्भिक्षुर्न (पचेन्न) पाचयेत् ॥ २ ॥ विसर्पत्सर्वतो धार बहुप्राणिविनाशन। नास्ति ज्योतिस्समं शस्त्र तस्माज्ज्योतिषं न दीपयेत् ॥ ३ ॥

" जलधन्ननिस्सिया जीवा, पुढवीकट्ठनिस्सिया । हम्मंति भत्तपाणेसु, तम्हा भिक्खू न पयावए ॥ २ ॥ "
" विसप्पे सव्वओ धारे, बहुपाणविणासणे । नत्थि जोइसमे सत्थे, तम्हा जोइं न दीवए ॥ ३ ॥ "

तथा दशवैकालिकेऽपि—

जायतेयं न इच्छंति, पावगं जलइत्तए । तिक्खमन्नयरं सत्थं, सव्वओ वि दुरासयं ॥ १ ॥
पाईणं पडिणं वा वि, उड्ढं अणुदिसामवि । अहे दाहिणओ वा वि, दहे उत्तरओ वि य ॥ २ ॥
भूयाणं एसमाघाओ, हव्ववाहो न संसओ । तं पईवपयावट्ठा, संजया किंचि नारभे ॥ ३ ॥
तम्हा एवं वियाणित्ता, दोसं दुग्गइवड्ढणं । अगणिकायसमारंभं, जावज्जीवाइ वज्जए ॥ ४ ॥ "

इत्यादि मत्वा नाग्निकायसमारम्भं कुर्यादिति गाथार्थः ॥ ७ ॥

हरियाणि भूताणि विलंबगाणि, आहारदेहा य पुढो सियाइं ।
जे छिंदती आयसुहं पडुच्च, पागब्भि पाणे बहुणंऽतिपाती ॥ ८ ॥

---

१–जाततेजस नेच्छन्ति पापकं ज्वलयितुम् । तीक्ष्णमन्यतरच्छस्त्रं सर्वतोऽपि दुराश्रयम् ॥ १ ॥ प्राच्यां प्रतीच्यां वाऽपि ऊर्ध्वमनुदिशमपि । अधोदक्षिणतश्चापि दहेदुत्तरतोऽपि च ॥२॥ भूतानामेष आघातो हव्यवाहो न संशयः । त (हव्यवाहं) प्रदीपार्थं प्रतापार्थं वा सयत· किञ्चिन्नारभेत् ॥ ३ ॥ तस्मादेव विज्ञाय दोषं दुर्गतिवर्द्धनम् । अग्निकायसमारम्भं, यावज्जीवं वर्जयेत् ॥ ४ ॥

व्याख्या—'हरितानि' दूर्वाङ्कुरादीनि, तान्यपि 'भूतानि' जीवाः, कथं ? आहारादेव वृद्धिदर्शनात्। तद्विना च म्लायन्ति, अत एव जीवाकार 'विलम्बयन्ति' धारयन्ति। यथा मनुष्यः कललार्बुदमांसपेशीगर्भप्रसवबालकुमारतरुण स्थविराद्यवस्थां धारयति, तथा वनस्पतिरपि अङ्कुर–मूल–स्कन्ध–पत्र–शाखादिविशेषैः परिवर्द्धमानाः युवानः पोता इत्युपदिश्यन्ते। तथा शाल्यादीनि जातान्यभिनवानि, सञ्जातरसानि यौवनवन्ति, परिपक्वानि जीर्णानि, परिशुष्कानि मृतानि। एवं हरितादीन्यपि जीवाकारं धारयन्ति। तत एतानि मूल–स्कन्ध–शाखा–पत्र–पुष्पादिषु पृथक् प्रत्येकजीवानि, न तु मूलादिषु सर्वेष्वप्येक एव जीवः। एतानि च भूतानि आत्मसुखार्थी यो हिनस्ति स प्रागल्भ्यात्–धाष्‍र्यावष्टम्भात् बहूना प्राणिनामतिपाती, तदतिपाताच्च निरनुक्रोशतया न धर्मो नाऽप्याऽऽत्मसुखमिति गाथाऽर्थः॥ ८॥ किञ्च—

जातिं च वुड्ढिं च विणासयंते, बीयाइ अस्संजय आयदंडे।
अहा हु से लोए अणज्जधम्मे, बीयाइं जे हिंसति आतसाते॥ ९॥

व्याख्या—हरितकायानां जातिमुत्पत्तिं वृद्धिं च विनाशयन् 'असंयतो' गृहस्थः प्रव्रजितो वा आत्मदण्डको ज्ञेयः। स हि जीवोपघातात्परमार्थतः आत्मानमेवोपहन्ति, एवमाहु–रुक्तवन्तस्तीर्थकराः, यो हरितादिछेदकः सोऽस्मिल्लोके अनार्यधर्मा–क्रूरकर्मकारी ज्ञेयः, धर्मोपदेशेन आत्मसुखार्थं वा वनस्पतिकायं करणकारणाऽनुमतिभेदेन समारम्भते, स पाखण्डिकलोकोऽन्यो वा अनार्यधर्मा भवतीति गाथाऽर्थः॥ ९॥

गब्भाइ मिज्जंति बुयाऽबुयाणा, णरा परे पंचसिहा कुमारा ।
जुवाणगा मज्झिमथेरगा य, चयंति ते आउखए पलीणा ॥ १० ॥

व्याख्या—इह वनस्पतिकायोपमर्दकाः बह्वृषु जन्मसु गर्भादिकास्वस्थासु कललाऽर्बुदमाँसपेशीरूपासु म्रियन्ते । ब्रुवन्तोऽब्रुवन्तो-व्यक्तवाचोऽव्यक्तवाचस्तथा पञ्चशिखाः कुमाराः युवानो मध्यमवयसः 'स्थविराश्च' अत्यन्तवृद्धाः सन्तः सर्वास्वप्यवस्थासु बीजादीनां ध्वंसकाः स्वायुषः क्षये देहं त्यजन्ति प्रलीनाः सन्तः, एवं न केवलं वनस्पतिकायोपमर्दकाः, सर्वस्थावरजङ्गमोपमर्दकारिणोऽप्यनियतायुष एव, यावद्गृहकार्यचिन्ताभारोद्वहनक्षमा जातास्तावता अपूर्णमनोरथा एव स्व-परिवारस्य दुःखं दत्वा उत्थाय परलोकं प्रयान्तीति गाथार्थः ॥ १० ॥ किञ्च—

संबुज्झह जंतवो ! माणुसत्तं, दट्ठुं भयं बालिसेणं अलंभो ।
एगंतदुक्खे जरिए व लोए, सकम्मुणा विप्परियासुवेति ॥ ११ ॥

व्याख्या—हे जन्तवः ! सम्बुध्यध्वं, नहि कुशीललोकस्त्राणाय भवति, धर्मं च सुदुर्लभं जानन्तु । अकृतधर्माणां च मानुषत्वमतिदुर्लभं । तथा सर्वगतिषु दुःखरूपासु भयं जन्मजरामरणरोगशोकादिभवं दृष्ट्वा 'बालिशेन' निर्विवेकेन सद्विवेक-प्राप्तिर्दुर्लभा इत्येतदपि बुध्यध्वम् । एकान्तदुःखोऽयं ज्वरित इव लोकः । ईदृक्स्वरूपे लोके अनार्यकर्मकारी कर्मणां विपर्या-समुपैति । आरम्भसुखार्थी जीवघातादि कुरुते, तद्विपर्यासं सुखार्थी दुःखमेव लभते । प्राणिनां दुःखोत्पादनेन दुःखं प्राप्नोति ।

मोक्षार्थी संसारं पर्यटतीति गाथाऽर्थः ॥ ११ ॥

उक्तः कुशीलविपाकोऽधुना तद्दर्शनान्यभिधीयते—

**इहेगमूढा पवयंति मोक्खं, आहारसंपज्जणवज्जणेणं ।**
**एगे य सीओदगसेवणेणं, हुएण एगे पवयंति मोक्खं ॥ १२ ॥**

व्याख्या—इह मोक्षगमनाऽधिकारे, एके 'मूढा' अज्ञानिन एवं प्रवदन्ति-आहार'सम्पज्जनकं' लवणं, तद्वर्जनेन मोक्षावाप्तिः, + येन सर्वरससारभूतं लवणं "लवण विहूणा रसवइ॰व" इति वचनात्। पाठान्तरेण-आहारओ पंचक-वज्जणेण" आहारमाश्रित्य पञ्चकं वर्जयन्ति । तथाहि-लशुनं १ पलाण्डुः २ करभीक्षीरं ३ गोमांसं ४ मद्यं ५ चेत्येतत्पञ्चक-वर्जनेन मोक्षं प्रवदन्त्येके । तथा एके-शीतोदकपरिभोगेन मोक्षं प्रवदन्ति, तथा च तद्युक्तिः-यथा च शीतोदकेन बाह्यमल-मपयाति वस्त्रादेश्च पथोदकात् शुद्धिः-शरीरशुद्धिः । एवं बाह्यशुद्धिर्यथोदकादुपजायते तथाऽऽन्तरशुद्धिरप्युदकाज्जायते, एके एवं मन्यन्ते । तथाऽपरे तापसब्राह्मणादयो हुतेन मोक्षं वदन्ति । ये स्वर्गादिफलमनाशंस्य घृतादिभिरग्निं तर्पयन्ति तदा मोक्षावाप्तिः । अन्ये त्वभ्युदयनिमित्तमग्निं तर्पयन्ति तेषामैहिकं फलं । तथा च ते युक्तिमुदीरयन्ति, यथा सुवर्णादीनां

+ यथा सर्वरसानां सारभूतं लवणं, लवणपरित्यागे सर्वरसपरित्यागः, सर्वरसपरित्यागे मोक्षः, एवमेके वदन्ति अज्ञानिनः इति टिप्पनं हालाकीयप्रतौ । १ लवणविहीना रसवती इव ।

मलं अग्नितापादुपयाति, एवमात्मनोऽप्यान्तरं पापं अग्नितर्पणात्प्रयाति ॥ १२ ॥

अथैतेषां प्रवादिनामसम्बद्धप्रलापिनामुत्तरदानायाऽह—

पाओ सिणाणादिसु णत्थि मोक्खो, खारस्स लोणस्स अणासएणं ।

ते मज्जमंसं लसणं च भोच्चा, अन्नत्थ वासं परिकप्पयंति ॥ १३ ॥

व्याख्या—प्रातः स्नानादिषु नास्ति मोक्षः, यतो निःशीलानामनाचारचारिणां प्रातर्जलावगाहनेन कुतो मोक्षाऽवाप्तिः ?। आदिशब्दाद्धस्तपादक्षालनेऽपि न मोक्षः, यत उदकपरिभोगे तदाश्रितानां चराचराणां जीवानां घातः स्यात्, तद्घाताच्च कुतो मोक्षाऽवाप्तिरिति ?, अथ यथा बाह्यशुद्धिरुदकेन दृष्टा तथाऽऽन्तरशुद्धिरपि भविष्यति, न चैवं, अन्तःशुद्धिर्भावशुद्ध्या स्यात्, भावशुद्धिं विनाऽपि चेदन्तरङ्गशुद्धिः प्रतिपाद्यते तदा मत्स्यबन्धादीनामपि जलाऽभिषेकेण मुक्त्यवाप्तिर्भविष्यति, न च दृष्टा । तथा लवणवर्जनेन चेन्मोक्षस्तदा लवणवर्जिते देशे लोकानां न मोक्षादन्या गतिः ? परमसम्बद्धभाषिणो यूयमिति । पुनस्ते कुतीर्थिका मद्यमाँसलशुनादिकं भुक्त्वा मोक्षादन्यत्र वासं परिकल्पयन्ति, कोऽर्थः ? मद्यमाँसलशुनादिभोजिनां हि संसार एव वासः, न मोक्षाऽवाप्तिरिति गाथार्थः ॥ १३ ॥ साम्प्रतं विशेषेण परिजिहीर्षुराह—

उदएण जे सिद्धिमुदाहरंति, सायं च पायं उदगं फुसंता ।

उदगस्स फासेण सिया य सिद्धी, सिज्झिसु पाणे बहवे दगंसि ॥ १४ ॥

व्याख्या—ये केचन अज्ञानिनः 'उदकेन' जलाऽभिषेकेण मुक्तिमुदाहरन्ति, सन्ध्यायां प्रभाते मध्याह्ने च उदकस्पर्शनात् प्राणिनां मुक्त्यवाप्तिः, इत्येवं ये उदाहरन्ति, तन्मिथ्या। यदि जलस्पर्शादेव मुक्तिरुदाह्रियते तदा जलजन्तूनां त्रसस्थावराणां सर्वदैवांम्भोऽवगाहिनां मुक्तिरेव, न संशयः, मत्स्यऽबन्धिनामपि मुक्तिरेव भविष्यति, न चैतत् सङ्गतं, तस्मान्मृषा भवदुक्तिः। यदपि भवद्भिरुच्यते—बाह्यमलापनयनसामर्थ्यं उदकस्य दृष्टं, तदपि विचार्यमाणं न घटते, यतो यथोदकमनिष्टं मलमपनयति, एवमभिमतमप्यङ्गरागं कुङ्कमादिकमपनयति, तथा चोदकाऽभिषेकेण यथा पातकमपयाति तथा पुण्यमपि प्रयाति, अङ्गलग्नविलेपनादिवत्, एवं तूदकस्नानमिष्टविघातकृत्, ततो न किञ्चिदिति। अतः पुण्यविधातकारित्वाज्जलाऽभिषेकेण न मुक्तिरिति गाथाऽर्थः॥ १४॥

मच्छा य कुम्मा य सिरीसिवा य, मग्गू य उट्टा दगरक्खसा य।
अट्ठाणमेयं कुसला वयंति, उदगेण जे सिद्धिमुदाहरंति॥ १५॥

व्याख्या—यद्यम्भस्संसर्गेण मुक्तिस्तदा मत्स्याः कूर्माः सरीसृपाः मद्गवो—जलवायसाः उष्ट्राः जलचरविशेषाः 'दगरक्खसा' जलमानुषाः, एते सर्वेऽपि जलचरजीवाः मुक्तिगामिन एव, न चैतद्दृष्टमिष्टं वा, ततश्च ये उदकेन सिद्धिमुदाहरन्ति तदस्थान—मप्रमाणमयुक्तमित्यर्थः। [अ]साम्प्रतं (?) कुशलाः निपुणाः मोक्षमार्गाऽभिज्ञाः एवं वदन्तीति गाथाऽर्थः॥ १५॥

किञ्चाऽन्यत्—

उदयं जइ कम्ममलं हरिज्जा, एवं सुहं इच्छामित्तमेव ।
अंधं व णेयारमणुसरित्ता, पाणाणि चेवं विणिहंति मंदा ॥ १६ ॥

व्याख्या—यद्युदकं कर्ममलमपहरेत् एवं शुभं पुण्यमप्यपहरेत् । यदि पुण्यं नाऽपहरेत्तदा कर्ममलमपि नाऽपहरेत् । इच्छामात्रमेवैतद्यज्जलात्कर्ममलमपयाति, एतदुक्तिर्मृषैव । एवं ये पुण्याय जलस्नानमाचरन्ति ते जात्यन्धा अपरजात्यन्धमेव 'नेतारं' मार्गदेशकमनुसृत्य उन्मार्गगामिनो भवन्ति, नाऽभिप्रेतं स्थानमवाप्नुवन्ति । एवं जलशौचवादिनो 'मन्दा' अज्ञा जलाऽऽश्रितान् पूतरकादीन् प्राणिनो विनिघ्नन्ति । अवश्यं जलस्नाने प्राणिव्यपरोपणस्य सम्भवादिति गाथाऽर्थः ॥१६॥

अपि च—

पावाइ कम्माइं पकुव्वतो हि, सिओदगं तु जति तं हरिज्जा ।
सिज्झिंसु एगे दगसत्तघाती, मुसं वदंते जलसिद्धिमाहु ॥ १७ ॥

व्याख्या—'पापानि' पापहेतूनि कर्माणि कुर्वतः प्राणिनो यः कर्मबन्धः स्यात् तत्कर्म यद्युदकमपहरेत्तर्हि उदकसत्त्वघातिनः—पापीयाँसोऽपि सिद्ध्येयुर्न चैतद्दृष्टमिष्टं वा, तस्माद्ये जलाऽवगाहनात्सिद्धिमाहुस्ते मृषा वदन्तीति गाथाऽर्थः ॥१७॥

किञ्चान्यत्—

हुएण जे सिद्धिमुदाहरंति, सायं च पायं अगणिं फुसंता ।

एवं सिया सिद्धि हवेज्ज तम्हा, अगणिं फुसंताण कुकम्मिणं पि ॥ १८ ॥

व्याख्या—ये दर्शिनिनो मूढा हुतेनाऽग्नौ घृतादिप्रक्षेपेण सिद्धिमुदाहरन्ति, कथं ? 'सायं' सन्ध्यायां प्रातःकाले अग्निं स्पृशन्तः यथेष्टैर्घृतादिद्रव्यैरग्निं तर्पयन्त सिद्धिगतिमभिलषन्ति, अग्निस्पर्शेण सिद्धिः, एवं ये उदाहरन्ति, तेषामुच्यते—यद्यग्निस्पर्शनतः सिद्धिस्तर्हि कुकर्मिणामङ्गारदाहककुम्भकारायस्कारादीनां सिद्धिः स्यात्, यदपि मन्त्रपूतादिभिरुदाहियते तदपि निरन्तराः सुहृदः प्रत्येष्यन्ति, न पुनरस्मादृशाः, कुकर्मिणामप्यग्निकार्ये भस्मापादनम्, एवमग्निहोत्रकादीनामपि भस्मसात्करणं, को विशेषः ? अपि तु मन्त्रभणनेऽपि भस्मापादनान्नाऽन्यत् फलमिति गाथाऽर्थः ॥ १८ ॥

अपरिक्ख दिट्ठं ण हु एव सिद्धी, एहिंति ते घायमबुज्झमाणा ।
भूएहिं जाणं पडिलेह सायं, विज्जं गहाय तसथावरेहिं ॥ १९ ॥

व्याख्या—यैरुदकस्पर्शेणाऽग्निहोत्रेण वा सिद्धिरभिहितास्तैर'परीक्ष्य दृष्टं' युक्तिविकलमभिहितं—अविचार्य प्रतिपादितं, यतो 'न हु'नैव जलाऽवगाहनेनाऽग्निहोत्रेण वा सिद्धिः, प्राणिघातसम्भवात्, प्राणिघाते च कुतो मोक्षाऽवाप्तिः ? ते चाऽज्ञानिनः प्राण्युपघातेन धर्मबुद्ध्या पापमेव कुर्वन्तः, स(? ते) 'घातं' संसारमेष्यन्ति, अबुध्यमानाः परमार्थमिति अप्कायतेजस्कायसमारम्भेण चाऽवश्यं त्रसस्थावरजीवघातः, तद्घाते च संसार एव, न सिद्धिरिति । + यत एवं ततो विद्वान्

+ + एत चिह्नान्तर्गतपाठस्थाने—" विद्वान्—सदसद्विवेकी यथावस्थिततत्त्वं गृहीत्वा त्रसस्थावरैर्भूतैः—जन्तुभिः कथं साम्प्रतंसुखमवाप्यते ? " इत्येवमस्ति बृहद्वृत्तौ ।

श्री खरतरगच्छीय ज्ञान



त्रसस्थावरघाते कथं सुखमवाप्यते ? + इत्येतत्प्रत्युपेक्ष्य 'जानीहि' अवबुध्यस्व तं, यत्सर्वेऽपि जन्तवः सुखैषिणो दुःखद्विषः, न च तेषां सुखैषिणां दुःखोत्पादकत्वेन सुखाऽवाप्तिरिति गाथाऽर्थः ॥ १९ ॥

थणंति लुप्पंति तसंति कम्मी, पुढो जगा परिसंखाय भिक्खू ।
तम्हा विऊ विरतो आयगुत्ते, दट्ठुं तसे या पडिसंहरेज्जा ॥ २० ॥

व्याख्या—ते षट्कायाऽऽरम्भिणो सुखाभिलाषिणो नरकादिगतिं गतास्तीव्रदुःखैः पीड्यमानाः असह्यवेदनोपगताः अशरणाः स्तनन्ति 'लुप्यन्ति' छिद्यन्ते खड्गादिभिः । एवं कदर्थ्यमानास्त्रसन्ति कर्म्मिणः–सपापा इत्यर्थः । पृथक् 'जगा' इति जन्तवः, इत्येवं 'परिसंख्याय' ज्ञात्वा भिक्षुः–विद्वान्, यस्मात्प्राण्युपमर्दकारिणः संसाराऽन्तर्गता विलुप्यन्ते, तस्मात् पण्डितो विद्वान् 'विरतः' आत्मगुप्तः दृष्ट्वा त्रसान्, च शब्दात् स्थावरांश्च दृष्ट्वा तदुपघातकारिण्याः क्रियायाः प्रतिसंहरे–न्निवर्त्तयेत्, त्रसस्थावरोपघातकारिणीं क्रियां न कुर्यादिति भावः । इति गाथाऽर्थः ॥ २० ॥

जे धम्मलद्धं विणिहाय भुंजे, वियडेण साहट्टु य जे सिणाइ ।
जो धावती लूसयती व वत्थं, अहा हु से णागणियस्स दूरे ॥ २१ ॥

व्याख्या—ये केचन शीतलविहारिणो 'धर्मेण' मुधिकया लब्धं निर्दोषमपि आहारजातं 'विनिधाय' संनिधिं कृत्वा भुञ्जन्ते, तथा ये 'विकटेन' प्रासुकोदकेनाऽपि संकोच्याङ्गोपाङ्गानि प्रासुकप्रदेशे सर्वस्नानं कुर्वन्ति, तथा यो वस्त्रं

'धावति' प्रक्षालयति, तथा यो वस्त्रं लूषयति-शोभार्थं दीर्घं सत्पाटयित्वा ह्रस्वं करोति ह्रस्वं वा सन्धाय दीर्घं करोति, अथासौ 'णागणियस्स'त्ति निर्ग्रन्थभावस्य संयमाऽनुष्ठानस्य दूरे वर्त्तते, न तस्य संयमं प्राहुस्तीर्थकरगणधरादयः, न तस्य संयमो भवतीति गाथाऽर्थः ॥ २१ ॥

उक्ताः कुशीलास्तत्प्रतिपक्षभूताः शीलवन्तः प्रतिपाद्यन्ते इत्येतदाह—

कम्मं परिन्नाय दगंसि धीरे, वियडेण जीविज्ज य आदिमोक्खं ।
से बीयकंदाइ अभुंजमाणे, विरते सिणाणाइसु इत्थियासु ॥ २२ ॥

व्याख्या—उदकसमारम्भे सति कर्मबन्धो जायते, इत्येवं परिज्ञाय 'विकटेन' प्रासुकोदकेन 'जीव्यात्' प्राणसन्धारणं कुर्यात् । अन्येनाऽपि प्रासुकेनैवाहारेण प्राणवृत्तिं कुर्यात् । 'आदिः' संसारस्तस्मान्मोक्षः आदिमोक्षस्तं, संसारविमुक्तिं यावत् । अथवा आदिमोक्षं-यावज्जीवमित्यर्थः । तथा स साधुर्बीजकन्दादि परिहरन् स्नानादिभ्यस्तथा स्त्रीभ्यश्च विरतः सन् कुशीलदोषैर्न लिप्यत इति गाथार्थः ॥ २२ ॥

जे मायरं च पियरं च हिच्चा, गारं तहा पुत्तपसुं धणं च ।
कुलाइं जे धावइ साउगाइं, अहा हु से सामणियस्स दूरे ॥ २३ ॥

व्याख्या—ये केचन मातरं पितरं त्यक्त्वा, तथा अगारं पुत्रं पशुं धनं च त्यक्त्वा, सम्यक् प्रव्रज्यायामुत्थाय, पंच-

महाव्रतभारस्य स्कन्धं दत्वा पुनर्निस्सत्त्वतया रसगारवगृद्धः सुखशीलः 'स्वादुकानि' स्वादुभोजनवन्ति कुलानि 'धावति' गच्छति, स साधुः 'श्रामण्यस्य' श्रमणभावस्य दूरे वर्त्तते। एवमाहुस्तीर्थकरा इति गाथार्थः ॥ २३ ॥

एतदेव विशेषेण दर्शयितुमाह—

कुलाइं जे धावइ साउगाइं, आघाति धम्मं उदराणुगिद्धे ।
अहा हु से आयरियाण सयंसे, जे लावएज्जा असणस्स हेउं ॥ २४ ॥

व्याख्या—यो रसलम्पटः सन् स्वादुभोजनवत्सु कुलेषु याति-धावति रसनेन्द्रियबाधितः, गत्वा च धर्ममाख्याति, भिक्षार्थं गतः सन् यद्यस्मै कथासम्बन्धं रोचते तत्तस्याऽऽख्याति 'उदराऽनुगृद्धः' उदरभरणव्यग्रः, को भावः ? यो ह्युदरगृद्धः आहारादिनिमित्तं दानश्रद्धकाऽऽख्यानि कुलानि गत्वा धर्ममाख्याति स कुशील इति। अथासौ आचार्यगुणानां शतांशेऽपि न वर्त्तते, सहस्रांशेऽपि, लक्षकोटितमेऽपि भागे न वर्त्तते। तथा यो ह्यन्नस्य निमित्तं वस्त्रादिनिमित्तं वा आत्मगुणान् परेण 'आलापयेत्' भाणयेत्, असावप्याचार्यगुणानां सहस्रांशे न वर्त्तते, यस्तु स्वयमेवाऽऽत्मगुणान् कथयति आत्मप्रशंसां विदधाति तस्य किमुच्यते ? सोऽपि कुशील इति गाथाऽर्थः ॥ २४ ॥

निक्खम्म दीणे परभोयणंमि, मुहमंगलिए उदराणुगिद्धे ।
नीवारगिद्धेव महावराहे, अदूरए एहिति घातमेव ॥ २५ ॥

व्याख्या—यः स्वकीयं धनधान्यादि परित्यज्य आहारवस्त्रादिषु गृद्धः दैन्यमुपगतः सन् दयामनस्को भूत्वा, बद्रिवन्मुखमाङ्गलिको भवति, मुखेन मङ्गलानि-प्रशंसावाक्यानि ईदृशस्तादृशस्त्वमित्येवं दातारं प्रशंसति । "सो एसो जस्स गुणा, वियरंतिऽणिवारिया दसदिसासु । इहरा कहासु सुव्वसि, पच्चक्खं अज्ज दिट्ठोसि ॥१॥" इत्येवमुदरार्थी यथा नीवारगृद्धो महावराहः अतिसङ्कटे प्रविष्टः सन् 'अदूर एव' शीघ्रमेव 'घातं' विनाशमेति, तथाऽसावपि कुशील आहारमात्रगृद्धः संसारोदरे पौनःपुन्येन विनाशमेव प्राप्नोति, अनन्तानि मरणानि लभते इति गाथाऽर्थः ॥२५॥

अन्नस्स पाणस्सिहलोइयस्स, अणुप्पियं भासति सेवमाणे ।
पासत्थयं चेव कुसीलयं च, निस्सारए होइ जहा पुलाए ॥ २६ ॥

व्याख्या—स कुशीलः पार्श्वस्थो वा योऽन्नपानकृते वस्त्रादिकृते वा यस्य यत्प्रियं तदेव भाषते, सेवको यथा राजानमनुभाषते-राज्ञो यत्प्रियं तदेव वक्ति, एवं साधुरपि भोज्यपानवस्त्रादिनिमित्तं प्रियं भाषते, सः पार्श्वस्थभावं कुशीलभावं च लभते । तथा स 'पुलाकः' चारित्राऽपेक्षया निस्सारस्तुषप्रायो भवतीति गाथाऽर्थः ॥ २६ ॥

अन्नायपिंडेणऽहियासएज्जा, नो पूयणं तवसा आवहेज्जा ।
सद्देहिं रूवेहिं असज्जमाणे, सव्वेहिं कामेहिं विणीयगेहिं ॥ २७ ॥

---

१ स एष यस्य गुणा विचरन्त्यनिवारिता दशदिशासु । इतरथा कथासु श्रूयसे प्रत्यक्षमद्य दृष्टोऽसि ॥ १ ॥

व्याख्या—तथा यः साधुरज्ञातपिण्डः-अन्तप्रान्ताऽऽहारैराजीवति, नाऽप्युत्कृष्टेन लब्धेन मदं करोति, नाप्यन्तप्रान्तेन लब्धेन वाऽलब्धेन वा दैन्यं भजते, नाऽपि पूजनसत्कारार्थं तपः करोति, रसेषु च गृद्धिं न कुर्यात्, तथा शब्देषु रूपेषु कामेषु वा गार्द्ध्यं नानयति, रागद्वेषौ त्यजति । एवंविधगुणोपशोभितः साधुर्भवति, नाऽपर इति गाथाऽर्थः ॥ २७ ॥

सव्वाइं संगाइं अइच्च धीरे, सव्वाइं दुक्खाइं तितिक्खमाणे ।
अखिले अगिद्धे अणिएयचारी, अभयंकरे भिक्खु अणाविलप्पा ॥ २८ ॥

व्याख्या—तथा यः सर्वसङ्गं बाह्यान्तरङ्गरूपं 'अतीत्य' त्यक्त्वा 'धीरो' विवेकी सर्वाण्यपि दुःखानि शारीर-मानसानि त्यक्त्वा, परीषहोपसर्गजनितानि 'तितिक्षमाणो'ऽधिसहन् 'अखिलो' ज्ञान-दर्शन-चारित्रैः पूर्णः, कामेष्वगृद्धः-तथा अनियतचारी, जीवानामभयङ्करः, विषयकषायैरनाविलोऽनाकुलाऽऽत्मा, संयममनुवर्त्तते, सः साधुरिति गाथाऽर्थः ॥ २८ ॥ किञ्च—

भारस्स जाता मुणि भुंजएज्जा, कंखेज्ज पावस्स विवेग भिक्खू ।
दुक्खेण पुट्ठे धुयमातिएज्जा, संगामसीसे व परं दमेज्जा ॥ २९ ॥

व्याख्या—साधुः संयमभारस्य यात्रानिर्वाहाय शुद्धाहारग्रहणं करोति, तथा पूर्वार्जितस्य पापकर्मणो 'विवेकं' पृथग्भावं विनाशमाकाङ्क्षेद्भिक्षुः-साधुर्दुःखेन परीषहोपसर्गजनितेन 'स्पृष्टः' व्याप्तोऽपि 'ध्रुवं' संयमं मोक्षं वा आदत्ते । यथा कश्चित् सुभटः [ सङ्ग्रामशिरसि ] शत्रुभिरभिद्रुतोऽपि 'परं' शत्रुं दमयति, एवं परीषहोपसर्गाभिद्रुतोऽपि

कर्मशत्रुं दमयेदिति गाथाऽर्थः ॥ २९ ॥ अपि च—

अवि हम्ममाणो फलगावतट्ठी, समागमं कंखति अंतगस्स ।
णिद्धूय कम्मं ण पवंचुवेइ, अक्खक्खए वा सगडं तिबेमि ॥ ३० ॥

व्याख्या—साधुः परीषहोपसर्गैर्हन्यमानोऽपि—पीड्यमानोऽपि सम्यक् सहते । किमिव ? 'फलकमिव' फलकवदपकृष्टः, यथा फलकमुभाभ्यां पार्श्वाभ्यां 'तष्टं' घटितं सत्तनु भवति, उभयपार्श्वे तक्षमाणोऽपि न रागद्वेषवान् भवति, एवं साधुरप्युग्रतपसा निष्टप्तदेहो दुर्बलशरीरो भवति रागद्वेषरहितश्च स्यात् । एवं 'अन्तकस्य' मृत्योः 'समागमं' प्राप्तिमाऽऽकाङ्क्षति—अभिलषति । तथाऽष्टप्रकार कर्म निर्द्धूय 'प्रपञ्चं' संसारं न उपैति, यथा अक्षस्य 'क्षये' विनाशे सति शकटं समविषमपथरूपं प्रपञ्चक.रणाऽभावान्नोपयाति, एवमसावपि साधुरष्टप्रकारस्य कर्मणः क्षये संसारप्रपञ्चं नोपयातीति गाथाऽर्थः ॥ ३० ॥ इतिः परिसमाप्त्यर्थे, ब्रवीमीति पूर्ववत् ।

समाप्तं कुशीलपरिभाषाख्यं सप्तममध्ययनं, ग्रं० ३४४ ॥

# अथाष्टमं वीर्याध्ययनम् ।



उक्तं सप्तममध्ययनं साम्प्रतमष्टममारभ्यते ॥

**दुहा वेयं सुअक्खायं, वीरियंति पवुच्चती । किं नु वीरस्स वीरत्तं ?, कहं चेयं पवुच्चती ? ॥ १ ॥**

व्याख्या—' द्विधा ' द्विप्रकारं चेदं प्रोच्यते वीर्यं सुष्ठु आख्यातं तीर्थकरैः, वीर्यं जीवस्य शक्तिविशेष इत्यर्थः । तत्र किं ' वीरस्य ' सुभटस्य वीरत्वं ? केन वा कारणेनाऽसौ वीर इति कथ्यते ? इति गाथाऽर्थः ॥ १ ॥

अथ भेदद्वारेण वीर्यस्वरूपमाचिख्यासुराह—

**कम्ममेगे पवेदिंति, अकम्मं वा वि सुव्वया ! । एतेहिं दोहि ठाणेहिं, जेहिं दीसंति मच्चिया ॥ २ ॥**

व्याख्या—तत्र एके ' कर्म ' क्रियाऽनुष्ठानं, तदेव वीर्यं प्रवेदयन्ति, द्वितीयं त्वकर्मवीर्यं वीर्यान्तरायक्षयजनितं जीवस्य सहजं वीर्यमित्यर्थः । भो सुव्रता ! एवम्भूतं पण्डितवीर्यं जानीत यूयं, आभ्यामेव द्वाभ्यां सकर्मवीर्यं अकर्मवीर्यं इति स्थानाभ्यां व्यवस्थिता मनुष्या दृश्यन्ते, तथाहि—नानाविधासु क्रियासु प्रवर्त्तमानमुत्साहबलसम्पन्नं मनुष्यं दृष्ट्वा वीर्यवानयं मनुष्यः इत्येको भेदस्तथा तदावारककर्मणः क्षयादनन्तबलयुक्तोऽयं मनुष्य इति द्वितीयो भेदः । एतावता एकं सकर्मवीर्यमपरमकर्मवीर्य—जीवस्य सहजं वीर्यमिति गाथाऽर्थः ॥ २ ॥

**पमायं कम्ममाहंसु, अप्पमायं तहाऽवरं । तब्भावादेसओ वा वि, बालं पंडियमेव वा ॥ ३ ॥**

व्याख्या—प्रमादं कर्मवीर्यं, अप्रमाद-मपरं-अकर्मवीर्यमित्याहुस्तीर्थंकराः। तथा यः प्रमादी सन् यत् कर्म करोति, तत्कर्मवीर्यं बालवीर्यमित्युच्यते। तथाऽप्रमत्तः सन् यत्कर्म करोति, तदकर्मवीर्यं-पण्डितवीर्यमित्यभिधीयते। 'तब्भावादेसओ वा वि' यदा येन भावेन वीर्यं स्फोरयति तदा तन्नाम व्यपदिश्यते प्रमादवीर्यमप्रमादवीर्यं चेति। तत्राऽपि प्रमत्तस्य कर्मवीर्यं-बालवीर्यं, अप्रमत्तस्य अकर्मवीर्यं-पण्डितवीर्यम्। तत्र बालवीर्यमभव्यानां अनाद्यपर्यवसितं भव्यानामनादिसपर्यवसितं चेति, पण्डितवीर्यं तु सादिसपर्यवसितमेव ॥ ३ ॥ तत्र प्रमादोपहतस्य सकर्मणो यद्बालवीर्यं तद्दर्शयितुमाह—

**सत्थमेगे उ सिखंती, अतिवायाय पाणिणं । एगे मंते अहिज्झंति, पाणभूयविहेडिणो ॥ ४ ॥**

व्याख्या—तत्र ['शस्त्रं' खड्गादिप्रहरणं] शास्त्रं [वा] धनुर्वेदायुर्वेदादिकं येऽभ्यसन्ति तत्प्राणिनामतिपाताय जायते, प्राणिघाताय स्यात्। तथा मन्त्रान् अभिचारकानाथर्वणान् अश्वमेधपुरुषमेधसर्वमेधयागार्थमधीयते। कथम्भूतान् मन्त्रान्? प्राणभूतविहेटकान् पठन्ति। इत्येतत्सर्वं बालवीर्यमिति गाथार्थः ॥ ४ ॥

**माइणो कट्टु मायाओ, कामभोगे समारभे । हंता छेत्ता पगब्भित्ता, आयसायाणुगामिणो ॥ ५ ॥**

व्याख्या—एके मायां कृत्वा-मायिनो भूत्वा कामभोगान् 'समारभन्ते' सेवन्ते, एवं क्रोधिनो मानिनो लोभिनः सन्तः कामभोगान् सेवन्ते, ततश्च ते आत्मसुखार्थिनः आत्मसाताऽनुगामिनः स्वसुखलिप्सवो दुःखद्विषः कषायकलु-

पितारमानः सन्तः प्राणिनां हन्तारः छेत्तारः प्रकर्त्तयितारश्च भवन्ति । कामभोगेच्छवः आत्मसुखाऽभिलाषिणश्च प्राणिनां ध्वंसका भवन्तीति गाथाऽर्थः ॥ ५ ॥

**मणसा वयसा चेव, कायसा चेव अंतसो । आरओ परओ वा वि, दुहा वि य असंजया ॥ ६ ॥**

व्याख्या—मनसा वाचा कायेन करणकारणाऽनुमतिभिश्चाऽन्तशः कायेनाशक्तोऽपि मनसैव तन्दुलमत्स्यवत् कर्म बध्नाति । तथा आरतः परतः-इहलोके परलोके च पर्यालोच्यमानास्ते स्वयं करणेन परकरणेन च 'असंयता' जीवोपघातकारिण एवेति गाथाऽर्थः ॥ ६ ॥ साम्प्रतं जीवोपघातविपाकं दर्शयितुमाह—

**वेराइं कुवई वेरी, तओ वेरेहिं रुज्जती । पावोवगा य आरंभा, दुक्खफासा य अंतसो ॥ ७ ॥**

व्याख्या—वैरी-स जीवोपमर्दकारी जन्मशताऽनुबन्धीनि वैराणि करोति । ततः वैरादपरैर्वैरैरनुरुध्यते-सम्बध्यते । परम्पराऽनुषङ्गी वैरं जायते । किमिति ? यतः 'पापोपगा' आरम्भाः सावद्यानुष्ठानरूपा 'अन्तशो' विपाककाले 'दुःखस्पर्शाः' असातोदयविपाकिनो जायन्ते इति गाथाऽर्थः ॥ ७ ॥ किञ्च—

**संपराइयं नियच्छंति, अत्तदुक्कडकारिणो । रागदोसस्सिया बाला, पावं कुव्वंति ते बहुं ॥ ८ ॥**

व्याख्या—कर्म द्विभेदं साम्परायिकं ईर्यापथिकं च । तत्र साम्परायिकं बादरकषायात्मकं जीवोपमर्दकत्वेन वैरानुषङ्गि तया 'आत्मदुष्कृतकारिणः' स्वपापविधायिनः सन्तो 'नियच्छंति' बध्नन्ति, के बध्नन्ति ? रागद्वेषाश्रिताः 'बालाः'

अज्ञानिनः । ते चैवम्भूता अमद्वेद्यं पापं 'बहु' अनन्तं कुर्वन्तीति गाथार्थः ॥ ८ ॥ एवं बालवीर्यं प्रदर्श्य उपसंजिहीर्षुराह—

**एयं सकम्मविरियं, बालाणं तु पवेदियं । एत्तो अकम्मविरियं, पंडियाणं सुणेह मे ॥ ९ ॥**

व्याख्या—एवं प्राक् प्रदर्शितं, तथाहि पाणिनामतिपातार्थं शस्त्रं शास्त्रं वा केऽपि शिक्षन्ते, तथाऽपरे विद्यामन्त्रान-धीयन्ते, तथाऽन्ये मायाविनो नानाप्रकारां मायां कृत्वा कामभोगार्थमारम्भान् कुर्वन्ति, अपरे पुनर्वैरिणस्तत् कुर्वन्ति येन वैरैरनुबध्यन्ते । परशुरामसुभूमयोरिव । इत्यादिप्राक् प्रतिपादितं मवं बालवीर्यं, एतत्सकर्मणां बालानां वीर्यं, च शब्दात्प्रमा-दवतां 'प्रवेदितं' प्रतिपादितम् । अत ऊर्ध्वं 'अकर्मणां' पण्डितानां यद्वीर्यं, तन्मे कथयतः शृणुत यूयमिति गाथाऽर्थः ॥९॥

तदेवाह—

**दविए बंधणुम्मुक्के, सव्वओ छिन्नबंधणे । पणोल्ल पावकं कम्मं, सल्लं कंतति अंतसो ॥ १० ॥**

व्याख्या—'द्रव्यो' भव्यो मुक्तिगमनयोग्यः, बन्धनोन्मुक्तः-बन्धनात्कपायात्मकान्मुक्तः 'सर्वतः' सर्वप्रकारेण सूक्ष्मबादररूप छिन्न-मपनीतं बन्धनं कपायात्मकं येन स छिन्नबन्धनः, एवंविधः पापकं कर्म 'प्रणोद्य' निराकृत्य 'अन्तशः' सर्वप्रकारेण शल्य छिनत्ति-दूरीकरोतीति गाथाऽर्थः ॥ १० ॥ यदुपादाय शल्यमपनयति तद्दर्शयितुमाह—

**नेयाउयं सुयक्खायं, उवादाय समीहए । भुज्जो भुज्जो दुहावासं, असुहत्तं तहा तहा ॥ ११ ॥**

व्याख्या—नैयायिक ज्ञान-दर्शन-चारित्राऽत्मकं मार्गं मोक्षं प्रति नेतारं तीर्थकरादिभिः स्वाख्यातं, तमुपादाय-

गृहीत्वा सम्यग् मोक्षाय 'ईहते' चेष्टते–ध्यानाध्ययनादावुद्यमं विधत्ते । यद्वालवीर्यं भूयोभूयः–तदतीतानागतभवग्रहणेषु दुःखावासं वर्त्तते, यथा यथा च बालवीर्यवान् नरकादिषु दुःखेषु पर्यटति तथा तथा चास्याशुभाध्यवसायित्वादशुभमेव प्रवर्द्धते । इत्येवं संसारस्वरूपमनुप्रेक्षमाणस्य धर्मध्यानं प्रवर्त्तत इति गाथाऽर्थः ॥ ११ ॥

साम्प्रतमनित्यभावानामधिकृत्याह—

**ठाणी विविहठाणाणि, चइस्संति ण संसओ । अणियंते अयं वासे, णायएहि सुहीहि य ॥ १२ ॥**

व्याख्या—स्थानानि विद्यन्ते येषां जीवानां ते स्थानिनः, तद्यथा–स्वर्गे इन्द्रस्तत्सामानिकत्रायस्त्रिंशत्पार्षद्यादीनि मनुष्येष्वपि चक्रवर्तिबलदेववासुदेवमहामण्डलिकादीनि तिर्यक्ष्वपि यानिकानिचिदिष्टानि भोगभूम्यादीनि, तानि सर्वाण्यपि विविधानि उत्तममध्यमाधमानि ते स्थानिनस्त्यक्षन्ति, नाऽत्र संशयो विधेय इति । तथा चोक्तम्–" अशाश्वतानि स्थानानि, सर्वाणि दिवि चेह तत् । देवासुरमनुष्याणा–मृद्धयश्च सुखानि च ॥ १ ॥ " तथाऽयं ज्ञातिभिः सहायैश्च सुहृद्भिर्यः संवासः सोऽप्यनित्यः–अशाश्वतः, चकारादन्यदपि धनधान्यद्विपदचतुष्पदशरीराद्यपि अनित्यमेव, धर्ममेकं विहाय " धर्म एको हि शाश्वतः " इति वचनादिति गाथाऽर्थः ॥ १२ ॥

**एवमादाय मेहावी, अप्पणो गिद्धिमुद्धरे । आरियं उवसंपज्जे, सव्वधम्ममगोवियं ॥ १३ ॥**

व्याख्या—सर्वाण्यनित्यानि स्थानानि, इत्येवमादाय–अवधार्य 'मेधावी' सद्विवेकी, आत्मसम्बन्धिनीं 'गृद्धिं'

गार्ध्यं–ममत्वमुद्धरेत्–अपनयेत्, ममेदमहमस्य स्वामीत्येवं ममतां क्वचिदपि न कुर्यात्। ‘आर्यं’ मार्गं सम्यग्ज्ञानदर्शनचारित्रात्मकं ‘उपसम्पद्येत’ समाश्रयेत्। किम्भूतं आर्यमार्गं ? सर्वैः कुतीर्थिकधर्मैरकोपितं–अदूषितं, अथवा सर्वैर्धर्मैरनुष्ठानरूपैरगोपितं, कुत्सितकर्त्तव्याभावात् प्रकटं, एवंविधमार्यमार्गं समाश्रयेदिति गाथाऽर्थः ॥ १३ ॥

सुधर्मपरिज्ञानं च कथं स्यात्तद्दर्शयितुमाह—

**सहसंमईए णच्चा, धम्मसारं सुणेत्तु वा । समुवट्ठिए उ अणगारे पच्चक्खायपावए ॥ १४ ॥**

व्याख्या—धर्मस्य ‘सारं’ परमार्थमवबुध्य, कथं ? सहसम्मत्या जातीस्मरणादिना अन्येभ्यो वा तीर्थङ्करगणधरआचार्यादिभ्यो वा + समुपस्थितः–उत्तरोत्तरगुणवृद्धये ‘अनगारः’ साधुः प्रवर्द्धमानपरिणामः प्रत्याख्यातपापको भवति। बालवीर्यरहितः पण्डितवीर्यसम्पन्नो धर्मसारमवबुध्य साधुः प्रत्याख्यातपापको भवतीति गाथाऽर्थः ॥ १४ ॥ किञ्च—

**जं किंचुवक्कमं जाणे, आउक्खेमस्स अप्पणो। तस्सेव अंतरा खिप्पं, सिक्खं सिक्खेज्ज पंडिए ॥१५॥**

व्याख्या—स्वायुष्कस्य येन केनचित्प्रकारेण उपक्रमो भावी यस्मिन् वा काले, तज्ज्ञात्वा उपक्रमस्य कालस्य वा अन्तराले ‘क्षिप्रं’ शीघ्रमनाकुलः सन् जीविताशंसामकुर्वन्–पण्डितो विवेकी संलेखनारूपां शिक्षां शिक्षेत् संलेखनां कुर्यात् ।

---

+ “इलापुत्रवत् श्रुत्वा चिलातपुत्रवद्वा धर्मसारमुपगच्छति, धर्मस्य वा सारं–चारित्रं, तत्प्रतिपद्यते, तत्प्रतिपत्तौ च पूर्वोपात्तकर्मक्षयार्थं पण्डितवीर्यसम्पन्नो रागादिबन्धनविमुक्तो बालवीर्यरहित उत्तरोत्तरगुणसम्पत्तये” इति बृहद्वृत्तौ ।

ग्रहणशिक्षया यथावन्मरणविधिं विज्ञाय आसेवनाशिक्षया आसेवेतेति गाथाऽर्थः ॥ १५ ॥ किञ्च—

**जहा कुम्मे सअंगाइं, सए देहे समाहरे । एवं पावाइं मेहावी, अज्झप्पेण समाहरे ॥ १६ ॥**

व्याख्या—यथा कूर्मः स्वान्यङ्गानि स्वकीयदेहे समाहरे-द्गोपयेत्, 'एवं' अनेन प्रकारेण मेधावी पापरूपाण्यनुष्ठानानि 'अध्यात्मना' सम्यक्धर्मध्यानादिभावनया समाहरेत्' उपसंहरेत्, मरणे समुपस्थिते सम्यक् संलेखनया संलिखितकायः पण्डितमरणेनात्मानं समाहरेदिति गाथाऽर्थः ॥ १६ ॥

**साहरे हत्थपादे य, मणं सविंदियाण य । पावकं तु परीणामं, भासादोसं च तारिसं ॥ १७ ॥**

व्याख्या—पादपोपगमने इङ्गितमरणे भक्तपरिज्ञायां शेषकाले वा कूर्मवद्धस्तपादौ 'संहरेत्' व्यापारान्निवर्त्तयेत्, तथा मनोऽप्यकुशलव्यापारेभ्यो निवर्त्तयेत् । एवं सर्वाणि श्रोत्रेन्द्रियादीनि तथा पापकं परिणामं संहरेत् । भाषादोषं च तादृशं सावद्यात्मकं उपसंहरेत् । एवं पण्डितमरणं अशेषकर्मक्षयार्थं सम्यगनुपालयेदिति गाथाऽर्थः ॥ १७ ॥

तं च संयमे पराक्रममाणं कश्चित् पूजासत्कारादिना निमन्त्रयेत्तत्रात्मोत्कर्षो न कार्य इति दर्शयितुमाह—

**अणु माणं च मायं च, तं परिन्नाय पंडिए । सुयं मे इहमेगेसिं, एयं वीरस्स वीरियं ॥ १८ ॥**

व्याख्या—चक्रवर्त्यादिना पूज्यमानेन 'अणुरपि' स्तोकोऽपि मानो न विधेयः, स्तोकाऽपि माया न विधेया, किमुत महती ?, एवं क्रोधलोभावपि न विधेयावित्येवं ज्ञपरिज्ञया कषाया(णां)नां (?) विपाकं ज्ञात्वा प्रत्याख्यानपरिज्ञया तन्नि·

वृत्तिं कुर्यात् । श्रुतं मया इह मनुष्यजन्मनि एकेषां तीर्थंकरादीनां वाक्यं, वीरस्यैतदेव वीरत्वं, येन कषाया(णां)नां (?) विजयः क्रियते, येन बलेन सङ्ग्रामशिरसि महति सुभटसङ्कटे परानीकं विजयते तत्परमार्थतो वीर्यं न भवति, अपि तु येन क्रोधादीनां पराजयो विधीयते तद्वीरस्य वीरत्वमिति गाथाऽर्थः ॥ १८ ॥

**आयतट्ठं सुआदाय, एयं वीरस्स वीरियं । सातागारवणिहुए, उवसंतेऽणिहे चरे ॥ १९ ॥×**

व्याख्या—'आयतो' मोक्षस्तदर्थं चारित्रमादाय यः क्रोधादीनां जयाय 'पराक्रमते' उद्यमं विधत्ते, एतद्वीरस्य वीरत्वं । यो धृतिबलेन कामक्रोधादिजयाय यतते स एव महान् वीरो नाऽपर इति । यः पुनः सातागारवनिभृतस्तदर्थमनुद्यमी तथा क्रोधाग्निजयादुपशान्तः—शीतीभूतः, तथा 'निहा' माया न विद्यते यस्यासावनिहो—मायाप्रपञ्चरहितः, तथा मानलोभरहित इत्यपि द्रष्टव्यं, स चैवम्भूतः संयमाऽनुष्ठानं चरेदिति गाथाऽर्थः ॥ १९ ॥ तथा—

**उड्ढमहे तिरियं वा, जे पाणा तसथावरा । सव्वत्थ विरतिं कुज्जा, संति निव्वाणमाहियं ॥ २० ॥**

सुगमार्थोऽयं श्लोकः, परं नाऽयं श्लोकः सूत्रादर्शेषु दृष्टः, टीकायां तु दृष्ट इति, अत्राऽपि तेन लिखित इति ॥

**पाणे य णातिवाएज्जा, अदिन्नं पि य णादए । सादियं ण मुसं बूया, एस धम्मे वुसीमतो ॥२०॥**

व्याख्या—प्राणप्रियाणां प्राणिनां प्राणान्नातिपातयेत्तथाऽपरेणादत्तं शिलाकामात्रमपि 'नाददीत' न गृह्णीयात् । तथा

× अष्टादशतमस्योत्तरार्द्धं पूर्वार्द्धं चास्य पद्यस्य पाठान्तरत्वेन विन्यस्तं वृत्तिकृत्पूज्यैरतो न कार्या पद्याधिकत्वाशङ्केति ।

'सादि[कं]तं' समायं मृषावादं न ब्रूयात्, एतावता यो हि परवञ्चनार्थं मृषावादः स परिह्रियते, यस्तु संयमगुप्त्यर्थं 'न मया मृगा उपलब्धा' इत्यादिकः स न दोषायेति । एष धर्मः श्रुतचारित्राऽऽख्यो 'वुसीमओ'त्ति वश्येन्द्रियस्य साधोर्ज्ञातव्य इति गाथाऽर्थः ॥ २० ॥ अपि च—

**अतिक्कमंति वायाए, मणसा वि ण पत्थए । सव्वओ संवुडे दंते, आयाणं सुसमाहरे ॥ २१ ॥**

व्याख्या—अतिक्रमं पञ्चानां महाव्रतानां मानावष्टब्धतया परतिरस्कारं वा वाचा मनसा[ऽपि] च न प्रार्थयेत् । एतद्द्वयनिषेधे कायातिक्रमोऽपि निषिद्धः । एतावता मनोवाक्कायैः कृतकारितानुमतिभिश्चातिक्रमं न कुर्यात् । सर्वतः संवृतो दान्तः सन् साधुर्मोक्षस्यादान-मुपादानं सम्यग्दर्शनाऽऽदिकं आहरे-दाददीत, गृह्णीयादिति गाथाऽर्थः ॥ २१ ॥ किञ्च—

**कडं च कज्जमाणं च, आगमिस्सं च पावगं । सव्वं तं नाणुजाणंति, आयगुत्ता जिइंदिया ॥ २२ ॥**

व्याख्या—साधूद्देशेन यदपरैरनार्यप्रायैः कृतं पापकं कर्म वर्त्तमाने काले च क्रियमाणं तथाऽऽगामिनि च काले यत्करिष्यते तत्सर्वं मनोवाक्कायकर्मभि 'र्नानुजानन्ति' नानुमोदन्ते । के नानुजानन्ति ? 'आयगुत्ता जिइंदिया' इति आत्मगुप्ताः संवृतात्मानो जितेन्द्रियाः साधव इति गाथाऽर्थः ॥ २२ ॥

**जे अबुद्धा महाभागा, वीरा असमत्तदंसिणो । असुद्धं तेसि परक्कंतं, सफलं होइ सव्वसो ॥ २३ ॥**

व्याख्या—ये केचन 'अबुद्धाः' अविज्ञातधर्मपरमार्थाः पल्लवग्राहिणः किञ्चिज्ज्ञतया जातावलेपाः पण्डितमानिनः,

यदि वा अबुद्धा इव बालवीर्यवन्तस्तथा 'महाभागाः' महापूज्या लोकविख्यातास्तथा 'वीराः' सुभटाः, परं 'असम्यक्त्वदर्शिनः' सम्यक्त्वविकला मिथ्यादृष्टयः, एवंविधा ये केचन, तेषां बालानां यत्किमपि तपोदानाध्ययनयमनियमादिषु 'पराक्रान्तं' उद्यमः कृतस्तत्सर्वमशुद्धं, सम्यक्त्वविकलत्वात्, सम्यक्त्वविकलैर्हि यत्किञ्चित्तपोदानाध्ययनादि विधीयते तदशुद्धम्। अविशुद्धकारि केवलं कर्मबन्धाय, न स्वल्पाऽपि काऽपि निर्जरा। अत एवोक्तं तच्च तेषां पराक्रान्तं 'सफलं' सहफलेन-कर्मबन्धेन वर्त्तत इति। सर्वाऽपि तत् क्रियातपोऽनुष्ठानादिका कर्मबन्धायैवेति गाथार्थः ॥ २३ ॥

साम्प्रतं पण्डितवीर्यमधिकृत्याऽऽह—

**जे य बुद्धा महाभागा, वीरा सम्मत्तदंसिणो। सुद्धं तेसिं परक्कंतं, अफलं होइ सव्वसो ॥ २४ ॥**

व्याख्या—ये केचन 'बुद्धा'स्तीर्थङ्करास्तच्छिष्या गणधरादयो वा 'महाभागा' महापूज्या जगद्विश्रुता 'वीराः', कर्मविदारणप्रत्यलाः ज्ञानादिभिर्गुणैर्वा विराजमानाः, तथा 'सम्यक्त्वदर्शिनः' परमार्थतत्त्ववेदिनस्तेषां भगवतां यत्-'पराक्रान्तं' तपोऽध्ययनयमनियमादावनुष्ठितं तच्छुद्धमवदातं, सर्वदोषाकलङ्कितं, कर्मबन्धं प्रत्यफलं भवति, निर्जरार्थमेव भवतीत्यर्थः। एतावता सम्यग्दृशां सर्वमनुष्ठानं पण्डितवीर्यं निर्जराहेतुरेव स्यादिति गाथार्थः ॥ २४ ॥

**तेसिं पि तवो असुद्धो, निक्खंता जे महाकुला। जं नेवऽन्ने वियाणंति, न सिलोगं पवेयए ॥२५॥**

व्याख्या—ये महाकुलोत्पन्ना अपि पूजासत्कारादिहेतवे तपोदानाध्ययनादिकं कुर्वन्ति तेषामपि तत्कृतमनुष्ठानमशुद्धं,

पूजासत्कारादिकृते कृतं संयमपालनादि न निर्जरायै जायते, यत्पुनः कृतं तपोऽध्ययनादि अन्ये श्रावकादयो न जानन्ति तथा विधेयं, तपोनियमाभिग्रहादिकं क्रियमाणं अन्ये श्रावका लोकाश्च न जानन्ति तथा विधेयं, यदि लोकानां पुरः प्रकाश्यते, आत्मश्लाघा स्वयमेव क्रियते तदपि तपो न निर्जरायै भवति । अत एवोक्तं–" न सिलोगं पवेयए " नैवात्मश्लाघां 'प्रवेदयेत्' प्रकाशयेत्, स्वयं प्रकाशनेन स्वकीयमनुष्ठानं फल्गुतामापादयेदिति गाथार्थः × ॥ २५ ॥

अप्पपिंडासि पाणासि, अप्पं भासेज्ज सुव्वए । खंतेऽभिनिव्वुडे दंते, वीतागेद्धी सदा जए ॥ २६ ॥

व्याख्या—अल्पपिंडाशी अल्पपानकः 'अल्पभाषको' मितभाषी, सर्वदा विकथारहितः, तथा सुव्रतः, 'खंते' 'क्षान्तः' क्षमावान् 'अभिनिव्वुडे' अभिनिर्वृतो लोभादिजयात् 'दान्तो' जितेन्द्रियः, यतः " कषाया यस्य नो छिन्ना, यस्य नात्मवशं मनः । इन्द्रियाणि न गुप्तानि, प्रव्रज्या तस्य जीवनम् ॥ १ ॥ " तथा वीतगृद्धिराशंसादोषरहितः, एवंविधः साधुः 'सदा' सर्वकालं संयमानुष्ठाने यतेत–यत्नं कुर्यादिति गाथार्थः ॥ २६ ॥

झाणजोगं समाहट्टु, कायं विउसेज्ज सव्वसो । तितिक्खं परमं नच्चा, आमोक्खाए परिव्वएज्जासि त्तिबेमि ॥

व्याख्याः—ध्यानयोगं समाहृत्य 'कायं' देहमकुशलयोगेषु प्रवृत्तं 'व्युत्सृजेत्' परित्यजेत् 'सर्वतः' सर्वप्रकारेण, हस्तपादादिकमपि परपीडाकारी न व्यापारयेत् । तथा 'तितिक्षां' क्षमां 'परमां' प्रधानां ज्ञात्वा 'आमोक्षाय' अशेषकर्मक्षयं

× आत्मख्यातिनिमित्त कृतं ख्यातिकरमेव स्यात, न परलोकसाधकमिति भावः ।

यावत्परिव्रजेरिति संयमाऽनुष्ठानं कुर्यास्त्वमिति गाथार्थः ॥ २७ ॥ इतिः परिसमाप्त्यर्थे, ब्रवीमीति पूर्ववत् ।

इति श्रीपरमसुविहितखरतरगच्छविभूषणश्रीमत्साधुरङ्गगणिवरगुम्फितायां श्रीमत्सूत्रकृताङ्गदीपिकायां वीर्याध्ययनमष्टमं परिपूर्णम् ।

## अथ नवमं धर्माध्ययनं प्रारभ्यते ।

**कयरे धम्मे अक्खाए ?, माहणेण मईमया । अंजुं धम्मं अहातच्चं, जणगा ! तं सुणेह मे ॥ १ ॥**

व्याख्या—जम्बूस्वामी सुधर्मस्वामिनमुद्दिश्येदमाह–' कतरः ' किम्भूतो धर्म ' आख्यातः ' कथितो ' माहणेणं 'ति भगवता श्रीवर्द्धमानस्वामिना, कथम्भूतेन ? मतिमता, इति पृष्टे सुधर्मस्वाम्याह–' ऋजुं ' मायाप्रपञ्चरहितमवक्रं ' अहातच्चं ' यथावस्थितं मम कथयतः शृणुत यूयं हे ' जनकाः ' जनाः ! ( यथा ) भगवता प्रतिपादितं मया चाकर्णितं तथा भवतां कथयामि, यूयं शृणुतेति गाथार्थः ॥ १ ॥

धर्म्मप्रतिपक्षभूतोऽधर्मस्तदाश्रितांस्तावद्दर्शयितुमाह—

**माहणा खत्तिया वेस्सा, चंडाला अदु बोक्कसा । एसिया वेसिया सुद्दा, जे य आरंभनिस्सिया ॥ २ ॥**

भिक्षुर्जिनैराहितो मार्गः सम्यग्दर्शनज्ञानचारित्रात्मकस्तं 'चरेत्' अनुतिष्ठेदिति गाथार्थः ॥ ६ ॥ अपि च—

**चिच्चा वित्तं च पुत्ते य, णाईओ य परिग्गहं । चिच्चा ण अंतगं सोयं, निरवेक्खो परिव्वए ॥ ७ ॥**

व्याख्या—त्यक्त्वा वित्तं पुत्रान् ज्ञातींस्तथा परिग्रहं च सर्वं ममतारूपं त्यक्त्वा, णकारो वाक्यालङ्कारे, अन्तं गच्छतीति अन्तगो-दुष्परित्यज इत्यर्थः । अन्तको वा विनाशकारीत्यर्थः । आत्मनि वा गच्छतीति आत्मगः, आन्तर इत्यर्थः । एवम्भूतं शोकं 'त्यक्त्वा' परित्यज्य, श्रोतो वा-मिथ्यात्वाविरतिप्रमादकषायात्मकं, अनन्तगं अपारं वा परित्यज्य 'निरपेक्षः' सर्वममतास्नेहसम्बन्धशून्यः सन् मोक्षाय परिव्रजेत्, संयमानुष्ठाने तिष्ठेत्। य एवं संयमानुष्ठाने यतते स साधुर्विज्ञेय इति गाथार्थः॥ ७ ॥

स एवं साधुरहिंसादिषु व्रतेषु प्रयतेत, तत्राहिंसाप्रसिद्ध्यर्थमाह—

**पुढवी आऊ अगणी वाऊ, तणरुक्खसबीयगा । अंडया पोयजराऊ-रससंसेतउब्भिया ॥ ८ ॥**

व्याख्या—* पृथिवीकायिकाः सूक्ष्मबादरपर्याप्तकापर्याप्तकभेदेन भिन्नाः, तथा अप्काय-अग्निकाय-वायुकायिकाश्चैवम्भूता, एवं वनस्पतिकायिकांल्लेशतः सभेदानाह-तृणानि कुशादीनि, वृक्षाश्चूताशोकादिकाः, सबीजा-बीजसहिताः, बीजानि शालिगोधूमादीनि, एते एकेन्द्रियाः । पञ्चेन्द्रियानाह-अण्डजाः-शकुनिगृहकोकिलसरीसृपादयः, पोतजाः-हस्ति-

* * नास्त्येतचिह्नान्तर्गतो वृत्तिपाठः पुन्यपत्तनीयप्रतिद्विकेऽपि ।

शरभादयः, जरायुजा–गोमहिष्यादयः, रसा–दधिसौवीरकादेर्जाता रसजास्तथा संस्वेदजा–यूकामत्कुणादयः, उद्भिज्जाः–खञ्जरीटकदर्दुरादय इति । अज्ञातभेदा हि दुःखेन रक्ष्यन्त इत्यतो भेदेनोपन्यास इति ( गाथार्थः ) ॥ ८ ॥*

**एतेहिं छहिं काएहिं, तं विज्जं परिजाणिया । मणसा कायवक्केणं, णारंभी ण परिग्गही ॥ ९ ॥**

व्याख्या—साधुरेभिः पूर्वोक्तैः षड्भिरपि कायैः त्रसस्थावररूपैः [ सूक्ष्मबादर ]पर्याप्तापर्याप्तकभेदभिन्नैर्नारम्भी न परिग्रही स्यात् । तदेतद्विद्वान्–सश्रुतिको ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया च मनोवाक्कायकर्मभिर्जीवोपमर्दकारिणमारम्भं परिग्रहं च परिहरेदिति गाथार्थः ॥ ९ ॥ शेषव्रतान्यधिकृत्याह—

**मुसावायं बहिद्धं च, उग्गहं च अजाइया । सत्थादाणाइं लोगंसि, तं विज्जं परिजाणिया ॥ १० ॥**

व्याख्या—मृषावादं ' बहिद्धं 'ति मैथुनं ' अवग्रहं ' परिग्रहमयाचित–मदत्तादानं, एतानि च मृषावादादीनि प्राण्युपतापकारित्वात् शस्त्राणीव–शस्त्रप्रायाणि वर्तन्ते, ततश्च कर्मोपादानकारणान्यप्यस्मिँल्लोके वर्तन्ते । तदेतत्सर्वं विद्वान् ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया च परिहरेदिति गाथार्थः ॥ १० ॥ किञ्च—

**पलिउंचणं च भयणं च, थंडिल्लुस्सयणाणि या । धूणादाणाइं लोगंसि, तं विज्जं परिजाणिया ॥११॥**

व्याख्या—पञ्चमहाव्रतधारणमपि कषायिणो निष्फलं स्यात्, अतस्तत्साफल्यापादनार्थं कषायनिरोधो विधेय इति दर्शयति । तत्र ' पलिउंचणं ( परिकुञ्चनं ) माया ' भजनो ' लोभः ' स्थंडिलः ' क्रोधः ' उच्छ्रयो ' मानः, एतानि

व्याख्या—'अर्थपदं' धनोपार्जनोपायं, अथवा द्यूतक्रीडा, अन्यदपि प्राण्युपमर्दकारिशास्त्रं न शिक्षयेत्तथा 'वेधो' धर्मानुवेधस्तस्मादतीतं-धर्मानुवेधातीतं अधर्मप्रधानं वचो नो वदेत्। तथा 'हस्तकर्म' हस्तव्यापारप्रधानः कलहस्तं तथा विरुद्धवादं-विवादं, शुष्कवादं, तदेतत्सर्वं संसारभ्रमणकारणं परिज्ञाय विद्वान् परिहरेदिति गाथार्थः ॥ १७ ॥

**पाणहाओ य छत्तं च, णालीयं बालवीयणं। परकिरियं अन्नमन्नं च, तं विज्जं परिजाणिया ॥ १८ ॥**

व्याख्या—उपानहौ काष्ठपादुके च तथा छत्रमातपादिनिवारणाय, तथा 'नालिका' द्यूतक्रीडाविशेषः, तथा बालव्यजनं, तथा 'परक्रिया' परस्य-गृहस्थादेः क्रियां-सावद्यात्मिकां, इत्यादि सर्वं विद्वान् परिहरेदिति गाथार्थः ॥ १८ ॥

**उच्चारं पासवणं, हरिएसु न करे मुणी । वियडेण वा वि साहट्टु, णायमेज्ज कयाइवि ॥ १९ ॥**

व्याख्या—उच्चारप्रश्रवणादिकां क्रियां हरितेषु-बीजेषु अस्थण्डिले वा मुनिर्न कुर्यात्, तथा 'विकटेन' अचित्तेनोदकेन संहृत्या-पनीय बीजानि हरितानि वा 'नाचमेत' न निर्लेपनं कुर्यात् किमुताविकटेनेति गाथार्थः ॥ १९ ॥

**परमत्ते अन्नपाणं, ण भुंजेज्ज कयाइवि । परवत्थं अचेलो वि, तं विज्जं परिजाणिया ॥ २० ॥**

व्याख्या—'परमात्रे' गृहस्थभाजने अन्नपानकपरिभोगं न कुर्यात्। "कंसेसु+कंसपाएसु, कुंडमोएसु वा पुणो ।

+ 'कास्येषु' (कबोलकादिषु) 'कांस्यपात्रेषु' (स्थालिकादिषु) 'कुण्डमोदेषु' हस्तिपादाकारमृन्मयभाजनेषु, भुञ्जानोऽशनपानादीनाचारात्परिभ्रश्यति ।

भुंजंतो' असणपाणाई, आयारा परिभस्सई ॥ १ ॥" इत्यादि ( दश. अ. ६ गा. ५१ ) गाथाप्रामाण्यात्–गृहस्थपात्रेषु न भुञ्जीत। तथा अचेलोऽपि सन् 'परवस्त्रं'-गृहस्थवस्त्रं न भुञ्जीत, परभाजनं परवस्त्रं च संयमविराधनाकारणं मत्वा विद्वान् परिहरेदिति गाथाऽर्थः ॥ २० ॥

आसंदी पलियंके य, निसिज्जं च गिहंतरे। संपुच्छणं सरणं वा, तं विज्जं परिजाणिया ॥ २१ ॥

व्याख्या—'आसन्दी' आसनविशेषः 'पर्यङ्कः' शयनविशेषः, [ गृहस्यान्त-र्मध्ये ] गृहयोर्वा मध्ये 'निषद्या' उपवेशनं "×गंभीरविजया एए, [ पाणा दुप्पडिलेहगा। × × × ×" दश. अ. ६ ] इत्यादिवचनात्। तथा "*गोयरग्गपविट्ठो उ, न निसीएज्ज कत्थई"। [ कहं च न पबंधेज्जा, चिट्ठित्ता ण व संजए ॥ ८ ॥" दश. अ. ५. उ. २ ] इत्यादि। तथा गृहस्थगृहे कुशलादिप्रच्छनं, इत्यादि सर्वं संसारकारणं ज्ञात्वा विद्वान् परिहरेदिति गाथार्थः ॥ २१ ॥

जसं कित्तिं सिलोयं च, जा य वंदणपूयणा। सव्वलोयंसि जे कामा, तं विज्जं परिजाणिया ॥ २२ ॥

व्याख्या—यशः कीर्त्तिं श्लाघां च परिहरेत्। राजादिभ्यो वन्दनां-पूजनं सत्कारसन्मानादि न इच्छेत्-नाभिलषेत्।

× 'गम्भीरविजया' अप्रकाशाश्रया 'एते' आसन्दकादयः, अत एतेषु प्राणा दुष्प्रतिलेख्या भवन्ति।

* गोचराग्रप्रविष्टस्तु न निषीदेत्कचित्। कथां च न प्रबध्नीया, स्थित्वा न च संयतः।

( सर्वस्मिँल्लोके ये ) इच्छा-मदनरूपाः कामा इत्यादि सर्वं विद्वान् परिहरेदिति गाथार्थः ॥ २२ ॥

**जेणेहं निवहे भिक्खू, अन्नपाणं तहाविहं । अणुप्पयाणमन्नेसिं, तं विज्जं परिजाणिया ॥ २३ ॥**

व्याख्या—येन अन्नपानेन तथाविधेन सुपरिशुद्धेन कारणापेक्षया त्वशुद्धेन वा इहाऽस्मिँल्लोके इदं संयमयात्रादिकं दुर्भिक्षरोगातङ्कादिकं वा भिक्षुर्निर्वहे–न्निर्वाहयेद्वा, तदन्नपानं द्रव्यकालापेक्षया शुद्धं कल्प्यं गृह्णीयात् । तदन्नपानादि अन्यस्मै साधवे संयमयात्रादिनिर्वहणसमर्थं दद्यात् । तथा तेषामशनपानादीनामनुप्रदानं गृहस्थानां परतीर्थिकानां स्वयूथ्यानां वा संयमोपघातुकं नानुशीलयेदिति, तदेतत्सर्वं ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया परिहरेदिति गाथार्थः ॥ २३ ॥

अथ यदुपदेशेनैतत्सर्वं कुर्यात्त दर्शयितुमाह—

**एवं उदाहु निग्गंथे, महावीरे महामुणी । अणंतनाणदंसी से, धम्मं देसितवं सुतं ॥ २४ ॥**

व्याख्या—इत्यादि सर्वं धर्माध्ययनगतं न आचरेत् । ‘ उदाहु ’ उदाहृतवान् श्रीमहावीरो महानिर्ग्रन्थो महामुनिः, अनन्तज्ञानदर्शनी स भगवान् ‘ धर्मं ’ श्रुतचारित्रलक्षणं तथा श्रुतं जीवादिपदार्थदेशकं प्रकाशितवान् इति गाथार्थः ॥ २४ ॥

**भासमाणो न भासेज्जा, णेव वंफेज्ज मम्मयं । मातिट्ठाणं विवज्जेज्जा, अणुचिंतिय वियागरे ॥ २५ ॥**

व्याख्या—यत्रान्यः कश्चिद्रत्नाधिको भाषमाणः स्यात्तत्रान्तर 'एवाहं विद्वान्–गीतार्थोऽहमित्येवमभिमानवान्न भाषेत । तथा मर्मकं न भाषेत । तथा यद्वचनमुच्यमानं तथ्यमतथ्यं वा सद्यस्य कस्यचिन्मनःपीडामाधत्ते तद्विवेकी न

भाषेतेति भावः । यद्वा ' मामकं ' ममीकारः-पक्षपातस्तं भाषमाणो ' न वंफेज्ज 'त्ति नाभिलपेत । तथा ' मातृस्थानं ' मायाप्रधानं वचो वर्जयेत्, मातृस्थानं न कुर्यात् । यदा वक्तुकामो भवति तदा प्राग्विचिन्त्य वचनमुदाहरेत्, परासमाधिजनकं न वदेदिति गाथार्थः ॥ २५ ॥

**तत्थिमा ततिया भासा, जं वदित्ताऽणुतप्पती। जं छन्नं तं न वत्तव्वं, एसा आणा नियंठिया ॥ २६ ॥**

व्याख्या—सत्या असत्या सत्यामृषा असत्यामृषा, एवं भाषाश्चतस्रः, तत्र सत्यामृषेत्येतदभिधाना तृतीया भाषा, सा च किञ्चित्सत्या किञ्चिन्मृषेत्येवंरूपा, साऽपि न वक्तव्या, यतः—' दशदारका जाता मृता वा ' तदत्र न्यूनाधिकसम्भवे सङ्ख्याव्यभिचारात्सत्यामृषेति । एवंरूपां भाषां न भाषेत । या तु भाषणानन्तरं ' किं ममैवम्भूतेन भाषितेने'त्येवं पश्चात्तापं विधत्ते, तथा च जन्मान्तरे तज्जनितेन दोषेण लिप्यते तादृशीं भाषां न वदेत् । तथा प्रथमाऽपि भाषा सत्या या प्राण्युपतापेन दोषानुषंगिणी-दोषकलङ्किता सा न वाच्या, तथा द्वितीयाऽपि भाषा ' असत्या ' समस्तार्थविसंवादिनी सा तु न वक्तव्या, धर्मादिकारणे वक्तव्याऽपि-मृगाः प्रत्यक्षेण दृष्टा अपि ' न मया दृष्टा ' एवं कारणे वदतो न दोषः । मिश्राऽपि भाषा दोषाय, तथा चतुर्थ्यपि असत्यामृषा या बुधैरनाचीर्णा, सा न वक्तव्येति । सत्याया अपि दोषानुषंगित्वं दर्शयति-यद्वचः ' छन्नं 'ति ' क्षणु हिंसायां ' हिंसाप्रधानं, तद्यथा-' बध्यतां चौरोऽयं, लूयन्तां केदारा, दम्यन्तां गोरथकाः ' इत्यादि, यदि वा ' छन्न 'न्ति यल्लोकैरपि यत्नतः प्रच्छाद्यते तत्सत्यमपि न वक्तव्यं, एषा आज्ञा-अयमुपदेशो ' निर्ग्रन्थो ' भगवान् वीरस्तस्येति गाथार्थः ॥ २६ ॥

होलावायं सहीवायं, गोयावायं च नो वदे । तुमं तुमंति अमणुन्नं, सव्वसो तं न वत्तए ॥ ॥ २७ ॥

व्याख्या—होलावादः, सखिवादः, गोत्रोद्घाटनवादः–गोत्रवादः, इत्येवं साधुर्नो वदेत् । तथा 'तुमं तुमं'ति तिरस्कारवचनं, बहु वचनोच्चारणयोग्ये एकवचनान्तं अवहेलावचनं 'अमनोज्ञं' प्रतिकूलं असमाधिजनकं अन्यदपि साधुर्न वदेदिति गाथार्थः ॥ २७ ॥

अकुसीले सया भिक्खू, णेव संसग्गियं भवे। सुहरूवा तत्थुवस्सग्गा, पडिबुज्झेज्ज ते विऊ ॥ २८ ॥

व्याख्या—भिक्षु–रकुशीलो भवेत् । न च कुशीलैः समं संसर्गं 'भजेत' सेवेत, कुशीलसंसर्गे सातागौरवस्वभावाः संयमोपघातकारिण उपसर्गाः सम्भवन्ति, यतस्ते सातागौरवाश्रिता एवं वदन्ति–धर्माधारं शरीरं यथा तथा आधाकर्मादिना पालनीयमेव × । प्रासुकोदकेन दन्तधावनादि क्रियते तदा को दोषः ? उपानहादिधारणे को दोषः ? साम्प्रतमल्पानि संहननानि अल्पधृतयश्च संयमे जन्तवः, इत्येवमादि कुशीलोक्तं श्रुत्वा अल्पसत्त्वास्तत्र रज्यन्ते, इत्येतद्विद्वान् विवेकी 'प्रतिबुद्ध्येत' जानीयात् । ज्ञात्वा च कुशीलसंसर्गं परिहरेदिति गाथार्थः ॥ २८ ॥

नन्नत्थ अंतराएणं, परगेहे ण णिसीयए । गामकुमारियं किड्डं, नातिवेलं हसे मुणी ॥ २९ ॥

व्याख्या—साधुर्गृहस्थगृहे कारणं विना नोपविशेत् । यतः–"तिण्हमन्नयरागस्स, निसेज्जा जस्स कप्पई । जराए

× " शरीरं धर्मसंयुक्तं, रक्षणीयं प्रयत्नतः । शरीराच्च्यवते धर्मः, पर्वतारसलिलं यथा " ॥ १ ॥

अभिभूयस्स, वाहियस्स तवस्सिणो ॥ १ ॥" इति [ दश. अ. ६, गा. ६० ] वचनात् कारणे गृहस्थगृहे उपविशतोऽपि न दोषः। तथा कश्चिदुपदेशलब्धिमान् धर्मोपदेशादिकारणे उपविशति तदा न क्षुण्णं। तथा ग्रामकुमारिका क्रीडाकन्दुकादिना, तां न कुर्यात्। तथा साधुर्नातिवेलं हसेत्, ज्ञानावरणीयाद्यष्टविधकर्मबन्धभयान्न हसेत्। तथा चागमः—"जीवे ! भंते ! हसमाणे वा उस्सूयमाणे वा कइ कम्मपगडीओ बंधइ ?, गोयमा ! सत्तविहबंधए वा अट्ठविहबंधए वा" इत्यादि ॥ २९ ॥

**अणुस्सुओ उरालेसु, जयमाणो परिव्वए। चरियाए अप्पमत्तो, पुट्ठो तत्थऽहियासए ॥ ३० ॥**

व्याख्या—उदारेषु कामभोगेषु दृष्टेषु श्रुतेष्वनौत्सुकः स्यात्। तथा मूलोत्तरगुणेषु उद्यमं कुर्वन् संयमे च यतमानः परिव्रजेत्। तथा चर्यायां भिक्षादिकायां अप्रमत्तः स्यात्, नाऽऽहारादिषु रसगार्ध्यं विदध्यादिति। तथा स्पृष्टश्च परीषहोपसर्गैस्तत्रादीनमनस्कः कर्मनिर्जरां मन्यमानो विषहेत्—सम्यक् सह्यादिति गाथार्थः ॥ ३० ॥

**हम्ममाणो न कुप्पेज्जा, वुच्चमाणो न संजले। सुमणो अहियासेज्जा, ण य कोलाहलं करे ॥ ३१ ॥**

व्याख्या—यष्टिमुष्टिभिर्हन्यमानो न कुप्येत्, दुर्वचनान्युच्यमानो न सञ्ज्वलेत्, न प्रतीपं-(प्रतिकूलं) वदेत्, किन्तु सुमनाः सर्वं कोलाहलमकुर्वन्नधिसहेतेति गाथार्थः ॥ ३१ ॥

---

१ जीवो भदन्त ! हसन्वा उत्सुकायमानो वा कति कर्मप्रकृतयो बध्नाति ?, गौतम ! सप्तविधबन्धको वाऽष्टविधबन्धको वा।

लद्धे कामे ण पत्थेज्जा, विवेगे एवमाहिए । आयरियाइं सिक्खेज्जा, बुद्धाणं अंतिए सया ॥ ३२ ॥

व्याख्या—लब्धान् कामान्न प्रार्थयेत्, एवं कुर्वतो भावविवेक आख्यातः। तथा आर्याणि–आर्याणां कर्त्तव्यानि अनार्य[ कर्त्तव्य ]परिहारेण सदा शिक्षेत–अभ्यसेत्, एतावता गुरुकुलवास आसेवनीय इति गाथार्थः ॥ ३२ ॥

सुस्सूसमाणो उवासेज्जा, सुप्पन्नं सुतवस्सियं । वीरा जे अत्तपन्नेसी, धितिमंता जिइंदिया ॥ ३३ ॥

व्याख्या—तथा साधुः 'शुश्रूषमाणः' वैयावृत्त्यं कुर्वन् गुरुमुपासीत–सेवेत, तथा 'सुप्रज्ञं' गीतार्थं–स्वसमयपरसमयवेदिनं सुतपस्विनं गुरुं परलोकार्थी सेवेत । क एवं कुरुते ? जे[ये] वीरास्तथा आत्मप्रज्ञैषिणो धृतिमन्तो जितेन्द्रियास्ते गुरुपदसेविन+ इति गाथार्थः ॥ ३३ ॥

गिहे दीवमपासंता, पुरिसादाणिया नरा । ते वीरा बंधणुम्मुक्का, नावकंखंति जीवितं ॥ ३४ ॥

व्याख्या—ये 'पुरुषादानीयाः' पुरुषप्रधानाः महीयांसस्ते ('गृहे') गृहस्थभावे–गृहस्थत्वे 'दीपं' भावदीपं श्रुतलाभमपश्यन्तः [ अप्राप्नुवन्त ] * सन्तः, अथवा 'द्वीपं' संसारोत्तार अपश्यन्तश्चारित्रं स्वीकुर्वन्ति ते एवंविधा वीराः

+ "यदुक्तं–जस्स धिई तस्स तवो, जस्स तवो तस्स सुग्गई सुलहा । जे अधिइमंता पुरिसा, तवो वि खलु दुल्लहो तेसिं ॥ १ ॥" इति हर्ष० ।

* गृहस्थस्य सूत्रपठननिषेधोऽत्र स्पष्ट एव, गार्हस्थ्ये श्रुतलाभस्याप्राप्यतोक्तत्वात् । किञ्च–" योगरहितं–सम्यगकृतयोगोपचारं" आव० वृ० हारि० पत्र ७३१, तथैव " विना योगकालग्रहणैर्विना तपसा च [ यः ] पठति वाचयति, अकृततपसः पार्श्वे च

बन्धनोन्मुक्ता असंयमजीवितं नावकाङ्क्षन्ति–न वाञ्छन्ति इत्यर्थः ॥ ३४ ॥

**अगिद्धे सद्दफासेसु, आरंभेसु अणिस्सिए । सव्वं तं समयाऽतीतं, जमेतं लवियं बहु ॥ ३५ ॥**

व्याख्या—शब्दरूपगन्धरसस्पर्शविषये अगृद्धः, आरम्भे 'अनिश्रितः' अप्रवृत्तः, यन्मया सर्वमेतदध्ययनादेरारभ्य प्रतिषिध्यत्वेन–यल्लपितं–उक्तं मया, तत्समया–दागमादतीत–मतिक्रान्तं समयप्रतिषिद्धं, तन्नाचरणीयं, यद्विधिद्वारेण सिद्धान्तानुसारेण तत्सर्वमाचरणीयं, एतावता यन्निषेधद्वारेणोक्तं तत्सर्वमनाचरणीयं यद्विधिद्वारेण कथितं तदाचरणीयमिति गाथार्थः ॥ ३५ ॥

**अइमाणं च मायं च, तं परिन्नाय पंडिए । गारवाणि य सव्वाणि, निव्वाणं संधए मुणि त्तिबेमि ॥ ३६ ॥**

व्याख्या—अतिमानं–महामानं, च शब्दात् सहचरितं क्रोधं च, तथा मायां, च शब्दात्तत्कार्यभूतं लोभं च, तदेतत्सर्वं 'पण्डितो' विवेकी ज्ञपरिज्ञया परिज्ञाय प्रत्याख्यानपरिज्ञया परिहरेत् । तथा सर्वाणि गारवाणि ऋद्धिरससातरूपाणि सम्यग्-

---

यः शृणोति तस्य सूत्राज्ञाभङ्गः, आगमाज्ञाभङ्गो हि महते संसाराय । " आचा० दी० जिनहंस० । इत्यादिशास्त्रप्रामाण्याद्-कृतयोगतपसोः साधुसाध्व्योरपि सूत्रपठननिषेधस्तर्हि गृहस्थस्य का कथा ? इति सुविमृश्य सुधीभिः ।

ज्ञात्वा परिहरेत्, परिहृत्य च निर्वाणमशेषकर्मक्षयरूपं 'सन्धयेत्' प्रार्थयेत् ॥ ३६ ॥ इतिः परिसमाप्त्यर्थे, ब्रवीमीति पूर्ववत् ॥

इति श्रीपरमसुविहितखरतरगच्छविभूषणश्रीमत्साधुरङ्गगणिवरसन्दृब्धायां श्रीमत्सूत्रकृताङ्गदीपिकायां धर्माख्य नवमाध्ययनं समाप्तम् ।

## अथ दशमं समाध्याख्यमध्ययनम् ।



अथ नवमानन्तरं दशमं समाधिनामाध्ययनं प्रारभ्यते, समाधिमन्तरेण धर्मोऽपि न भवति, समाधिपूर्वक एव धर्मः स्यात्तत्रेयमादिगाथा—

आघं मईममणुवीय धम्मं, अंजू समाही तमिणं सुणेह ।
अपडिन्न भिक्खू उ समाहिपत्ते, अनियाणभूतेसु परिव्वएज्जा ॥ १ ॥

व्याख्या—' मतिमान् ' केवलज्ञानी 'अनुविचिन्त्य ' ज्ञानेन ज्ञात्वा [ ' आघं 'ति ] आख्यातवान् । किम् ? धर्मं श्रुतचारित्राख्यं । कथम्भूत ? ' ऋजुं ' अवक्रं सरलं, कौटिल्यपरिहारेणावक्रं तथ्यं धर्ममाख्यातवान् । स धर्मः समाधिः, समाधिं च धर्मध्यानादिकमिति । तमिमं धर्मं समाधिं वा भगवदुपदिष्टं श्रृणुत यूयमिति सुधर्मस्वामी प्राह । यत्राप्रतिज्ञो भिक्षुः

'अनिदानो' आश्रवरहितः संयमं पालयति स साधुः समाधिवान् ज्ञेय इति गाथार्थः ॥ १ ॥

उड्ढं अहेयं तिरियं दिसासु, तसा य जे थावर जेय पाणा ।

हत्थेहिँ पाएहिँ य संजमित्ता, अदिन्नमन्नेहि य णो गहिज्जा ॥ २ ॥

व्याख्या—ऊर्ध्वाधस्तिर्यक् सर्वलोके + ये त्रसाः स्थावराश्च जन्तवः सन्ति, ततश्च साधुस्तान् प्राणिनः हस्तपादाभ्यां 'संयम्य' बद्ध्वा अन्यथा वा कदर्थयित्वा यत्तेषां दुःखोत्पादनं, तन्न कुर्यात् । यदि वा हस्तपादौ च संयम्य संयतकायः सन्न हिंस्यात्, च शब्दादुच्छ्वासनिश्वासकासितक्षुतवातनिसर्गादिषु सर्वत्र मनोवाक्कायकर्मसु संयतो भूत्वा समाधिमनुपालयेत्तथा परैरदत्तं न गृह्णीयात् । एतावता सर्वव्रतपरिग्रहः कृत इति गाथार्थः ॥ २ ॥

सुयक्खातधम्मे वितिगिच्छतिण्णे, लाढे चरे आयतुले पयासु ।

आयं न कुज्जा इह जीवियट्ठी, चयं न कुज्जा सुतवस्सि भिक्खू ॥ ३ ॥

व्याख्या—येन साधुना सुष्ठु धर्म आख्यातः स स्वाख्यातधर्मा, एतावता गीतार्थः । गीतार्थतामन्तरेण स्वाख्यात धर्मत्वं न सम्भवति, तथा 'वितिगिच्छतिण्णे ।'× सर्वज्ञोक्तं तथेति प्रतिपद्यते, अनेन दर्शनसमाधिः 'दंसणेण य

+ "प्राच्यादिदिक्षु च" इति हर्ष० । × "विचिकित्सा' चित्तविप्लुतिर्विद्वज्जुगुप्सा वा, तां '[ वि ]तीर्णः' अतिक्रान्तः" इति बृहद्वृत्तौ ।

सद्दहे ' इति वचनात् । तथा ' लाढः ' येन केनचित्प्रासुकाहारेणात्मानं यापयति-पालयतीति भावः । तथा ' प्रजाः ' पृथिव्यादिप्राणिनः स्वात्मवत् पश्यति, एवंविधो भावसाधुः सर्वजीवेषु आत्मतुलां कलयति । तथा असंयमजीविताथीं ' आयं ' कर्माश्रवलक्षणं न कुर्यात् । तथा ' चय'माहारोपकरणादेः सञ्चयं न कुर्यात् । कः ? सुतपस्वी भिक्षुरिति गाथार्थः ॥ ३ ॥

सव्विंदियाभिनिव्वुडे पयासु, चरे मुणी सव्वतो विप्पमुक्के ।
पासाहि पाणे य पुढो वि सत्ते, दुक्खेण अट्टे परिपच्चमाणे ॥ ४ ॥

व्याख्या—भिक्षुः ' प्रजासु ' स्त्रीषु सर्वेन्द्रिय[ादिभिः]निर्वृत्तः-संवृतेन्द्रियो भवेत्-चरेत्संयमानुष्ठानं, सर्वतो विप्रमुक्तः-निस्सङ्गो निष्किञ्चन इत्यर्थः । स एवम्भूतः पश्य प्राणिनः, किम्भूतान् ? दुःक्खेनासातावेदनीयोदयरूपेण ' आर्त्तान् ' पीडितान् परिपच्यमानान् पश्येति सम्बन्धो योज्य इति गाथार्थः ॥ ४ ॥

एतेसु बाले य पकुव्वमाणे, आवट्टती कम्मसु पावएसु ।
अतिवायतो कीरति पावकम्मं, निउंजमाणे वि करोति कम्मं ॥ ५ ॥

व्याख्या—' एतेषु ' पूर्वोक्तेषु पृथिव्यादिषु जीवेषु ' बालः ' अज्ञानी सङ्घट्टनपरितापोपद्रवादि कुर्वन् पुनस्तेष्वेव जीवेषु आगत्य ' आवर्त्यते ' पीड्यते पापकर्माणि कुर्वाण इति, तदतिपातात्-प्राणिव्यपरोपणात्पापकर्म ' क्रियते ' बध्यते । तथा भृत्यादींश्च प्राणातिपातादौ ' नियोजयन् ' व्यापारयन् पापकर्म ' करोति ' बध्नाति, चशब्दान्मृषावादादिना च

पापकर्म समुच्चिनोतीति गाथार्थः ॥ ५ ॥

आदीणवित्ती वि करेति पावं, मंता उ एगंतसमाहिमाहु ।
बुद्धे समाहीइ रते विवेगे, पाणातिवाता विरते ठियप्पा ॥ ६ ॥

व्याख्य—स भिक्षुरादीनवृत्तिः–कृपणवनीपकादेरिवाहारार्थी दीनवृत्तिः, एवम्भूतोऽपि पापकर्म करोति, आहारार्थी दीनतां भजन् पापकर्म बध्नाति, आर्त्त–रौद्रध्यानोपगतो भवति, एवं मत्वा एकान्तेन यो भावरूपो ज्ञानसमाधिस्तं तीर्थङ्कराः संसारोत्तारणायाहुः । कोऽर्थः ? यो भावसमाधिः स एव संसारोत्तारणायालं, तदेवं 'बुद्धो' अवगततत्त्वः, ज्ञानादिके समाधौ एकान्तसुखोत्पादके 'रतो' व्यवस्थितः, विवेके चाहारोपकरणकषायपरित्यागरूपे रतः सन्नेवम्भूतो भवति । प्राणातिपातविरतः, सम्यङ्मार्गानुगतः स्थितात्मा स्यादिति गाथार्थः ॥ ६ ॥ किञ्च—

सव्वं जगं तू समयाणुपेही, पियमप्पियं कस्सति णो करेज्जा ।
उट्ठाय दीणोव्व पुणो विसन्नो, संपूयणं चेव सिलोयकामी ॥ ७ ॥

व्याख्या—'सर्वं जगत्' सचराचरं प्राणिसमूहं 'समतानुप्रेक्षी' समतापश्यकः, समशत्रुमित्रः, समतायुक्तस्य न कश्चित्प्रियमप्रियं वा कुर्यात्, शत्रुमित्राभावात् । ईदृशो हि साधुः सम्पूर्णभावसमाधियुक्तो भवति । कश्चित्परीषहैस्तर्जितः संयमभग्नो दीनतामालम्ब्य विषयार्थी विषण्णः पुनर्गृहस्थत्वं प्रतिपद्यते । गारवत्रयगृद्धः पूजासत्काराभिलाषी स्यात्,

तदभावे दीनः सन् पार्श्वस्थादिभावं भजते । कश्चित्पूजनं वस्त्रपात्रादिना प्रार्थयेत् । श्लोककामी-महत्त्वार्थी व्याकरण-गणितज्योतिषनिमित्तशास्त्राणि पठति कश्चित्स भावसमाधिभ्रष्टो भवेदिति गाथार्थः ॥ ७ ॥ किञ्च—

अहाकडं चेव निकाममीणे, निगामचारी य विसण्णमेसी ।
इत्थीसु सत्ते य पुढो य बाले, परिग्गहं चेव पकुव्वमाणे ॥ ८ ॥

व्याख्या—साधूनाथाय कृतं आहारोपकरणादिक 'निकाममीणे' [ अत्यर्थं ] प्रार्थयते, तथा आधाकर्मादीनि तन्निमित्तं निमन्त्रणादीनि वा चरति । संयमोद्योगे विषण्णानां पार्श्वस्थादीनां विषण्णभावमेषते, सदनुष्ठाने विषण्णः संसारपङ्कावसन्नो भवति । तथा 'बालो'ऽज्ञः स्त्रीषु 'पृथक्' तद्भाषितहसिताङ्गोपाङ्गेष्वासक्तः, द्रव्यमन्तरेण न तत् प्राप्तिर्भवतीति विचिन्त्य द्रव्योपार्जनाय परिग्रहमेव प्रकुर्वन् पापं कर्म्म समुचिनोतीति गाथार्थः ॥ ८ ॥

वेराणुगिद्धे णिचयं करेति, इओ चुते से दुहमट्ठदुग्गं ।
तम्हा उ मेधावि समिक्ख धम्मं, चरे मुणी सव्वओ विप्पमुक्के ॥ ९ ॥

व्याख्या—येन परोपतापरूपेण कर्म्मणा वैरमनुबध्यते जन्मान्तरशतानुयायी भवति, तत्र गृद्धो वैरानुगृद्धः । पाठान्तरे 'आरंभसत्तो'त्ति आरम्भे-सावद्यानुष्ठाने सक्तो निरनुकम्पः सन् 'निचयं' कर्म्मोपादानरूपं करोति । स एवम्भूतः उपात्तवैरः कृतकर्म्मोपचयः इतः स्थानाच्च्युतो-मृतो जन्मान्तरमनुप्राप्तः सन् 'दुःखं' नरकादियातनास्थानं

१० समाध्यध्ययने द्रव्यादित्यागे समाधिः ।

अर्थतो 'दुर्गं' विषमं दुरुत्तारं उपैति। यत एवं तस्मान्मेधावी–विवेकी सम्पूर्णसमाधिगुणं जानन् धर्म्मं श्रुतचारित्ररूपं 'समीक्ष्य' पर्यालोच्य 'मुनिः' साधुः सर्वतो विप्रमुक्तः संयमानुष्ठानं चरेत्' अन्वतिष्ठत्। योषित्–आरम्भादिसङ्गाद्विप्रमुक्तोऽनिश्रितभावेन विहरेदिति गाथार्थः ॥ ९ ॥

आयं न कुज्जा इह जीवियट्ठी, असज्जमाणो य परिव्वएज्जा।
निसम्म भासी य विणीय गिद्धिं, हिंसन्नियं वा ण कहं करेज्जा ॥ १० ॥

व्याख्या—साधुरिहासंयमजीवितार्थी 'आयं' द्रव्यादिलाभं न कुर्यात्, द्रव्यसञ्चयं न कुर्यात्। पाठान्तरे–'छंदं ण कुज्जा' छन्दं–प्रार्थनाऽभिलापं इन्द्रियाणां स्वस्वविषयाभिलापं वा न कुर्यात्। 'असज्जमानः' गृहपुत्रकलत्रादिषु सङ्गं–प्रतिबन्धं अकुर्वन् परिव्रजेत्–उद्यतविहारी भवेत्। किं कृत्वा? 'विनीय' अपनीय गृद्धिं विषयेषु 'निशम्य' सम्यगवगम्य–पूर्वोत्तरेण पर्यालोच्य भाषको भवेत् 'हिंसन्नियं वा ण कहं करेज्जा' हिंसान्वितां–प्राण्युपमर्दरूपां कथां न कुर्यात्, यदात्मनः परेषां च कर्म्मोपादानभूतं वचो न भाषणीयं, "जेणं परो दूमिज्जइ, अवराहो होइ जेण भणिएणं। अप्पा पडइ किलेसे, तं न हु जंपंति गीयत्था ॥ १ ॥" एतावता 'अश्नीत पिबत खादत मोदत हत छिन्त प्रहरत पचत' इत्यादिकां पापोपादानभूतां वाचं न भाषेत इति गाथार्थः ॥ १० ॥

१ येन परो दूम्य(पीड्य)तेऽपराधो भवति येन भणितेन। आत्मा पतति क्लेशे, तन्नैव जल्पन्ति गीतार्थाः ॥ १ ॥

अहाकडं वा न णिकामएज्जा, निकामयंते य ण संथवेज्जा ।
धुणे उरालं अणुवेहमाणे, चिच्चा ण सोयं अणुवेक्खमाणे ॥ ११ ॥

व्याख्या—' आधाय कृतं ' साधूनुद्दिश्य कृतं आहारजातं निश्चयेन न कामये-न्नाभिलपेत् । ' निकामयतो ' निश्चयेन अभिलपतः औद्देशिकं भोजनं पार्श्वस्थादीन् न संस्तवेन्नोपबृंहयेच्चैर्वा सार्द्धं संस्तवं न कुर्यात् । ' धुणे उरालं ' औदारिकं शरीरं धुनीयात्–कृशं कुर्यात् । कर्मनिर्जरामनुप्रेक्षमाण औदारिकं शरीरं विकृष्टतपसा कृशयेत् । अथवा बहुजन्मान्तर-सञ्चितं कर्म ' उदारं ' मोक्षं अनुप्रेक्षमाणः धुनीयात्, तस्मिँश्च धूयमाने कृशी भवति शरीरे कदाचिच्छोकः स्यात्, तं त्यक्त्वा याचितोपकरणवन्निर्मोहः सन् शरीरं धुनीयात्, न शरीरे प्रतिबन्धं कुर्यादिति भावः । इति गाथार्थः ॥ ११ ॥

एगत्तमेयं अभिपत्थएज्जा, एवं पमोक्खो न मुसंति पास ।
एसप्पमोक्खो अमुसे वरेवि, अकोहणे सच्चरते तवस्सी ॥ १२ ॥

व्याख्या—साधुरेकत्व–मसहायत्वमभिप्रार्थयेत्, एकत्त्वाध्यवसायी स्यात्, यतः संसारे जन्ममरणरोगशोकाकुले स्वकर्मणा विलुप्यमानानां प्राणिनां न कश्चित्त्राणसमर्थः सहायः स्यात् । यतः–" [1]एगो मे सासओ अप्पा, नाणदंसण-संजुओ । सेसा मे बाहिरा भावा, सव्वे संजोगलक्खणा ॥ १ ॥ " तथा अनया एकत्वभावनया ' प्रमोक्षः '

१ एको मे शाश्वत आत्मा, ज्ञानदर्शनसयुतः । शेषा मे बाह्या भावाः, सर्वे संयोगलक्षणाः ॥ १ ॥

विप्रमुक्तसङ्गता स्यात् । ' न चैतन्मृषा ' नालीकं इत्येवं पश्य, एष एव–एकत्वभावनाऽभिप्रायः प्रमोक्षो वर्त्तते । अमृषारूपः सत्यश्चायमेव । तथा ' वरोऽपि ' प्रधानोऽप्ययमेव भावसमाधिर्वा । अथवा यस्तपस्वी–तपोनिष्टप्तदेहः अक्रोधनः अमानः अमायः अलोभश्च सत्यरतः एष एव प्रमोक्षः ' अमृषा ' सत्यो ' वरः ' प्रधानश्च वर्त्तते इति गाथार्थः ॥ १२ ॥ किञ्च—

इत्थीसु या आरय मेहुणा उ, परिग्गहं चेव अकुव्वमाणे ।
उच्चावएसु विसएसु ताई, निस्संसयं भिक्खु समाहिपत्ते ॥ १३ ॥

व्याख्या—दिव्यमानुषतिर्यग्रूपासु स्त्रीषु त्रिविधास्वपि विषयभूतासु यन्मैथुनं, तस्मादासमन्तान्न रतो–निवृत्तः, तुशब्दात्प्राणातिपात[ादि]निवृत्तश्च, तथा परिग्रहं चाकुर्वन्, उच्चावचेष्वपि विषयेषु रागद्वेषरहितः, तथा ' त्रायी ' षट्कायरक्षकः ' निःसंशयं ' निश्चयेन परमार्थतो भिक्षुरेवम्भूतः समाधिं प्राप्तो भावसाधुर्भवतीति गाथार्थः ॥ १३ ॥

एतावता विषयेभ्यो निवृत्त एव भावसमाधियुक्तो भवतीत्याह—

अरइं रइं च अभिभूय भिक्खू, तणाइफासं तह सीयफासं ।
तेउं [उण्हं] च दंसं च हियासएज्जा, सुब्भिं च दुब्भिं च तितिक्खएज्जा ॥ १४ ॥

व्याख्या—पुनः साधुः कीदृशो भवति ? संयमे अरतिं असंयमे च रतिं ' अभिभूय ' निराकृत्य निष्काञ्चनतया तृणादिकान् '' स्पर्शान् ' परीषहाँस्तथा निम्नोन्नतभूप्रदेशस्पर्शांश्च सम्यगधिसहेत । तथा शीतोष्ण–दंश–मशक–क्षुत्पि-

पासादिकान् परीषहान् अक्षोभ्यतया निर्जरार्थमभ्यासयेत्–अधिसहेत । तथा सुरभिगन्धं दुरभिगन्धं च, चशब्दादाक्रोशवधादिकाँश्च परीषहान् मुमुक्षुस्तितिक्षयेदिति गाथार्थः ॥ १४ ॥ किञ्चान्यत्—

गुत्तो वईए य समाहिपत्तो, लेसं समाहट्टु परिव्वएज्जा ।
गिहं न छाए नवि छावएज्जा, संमिस्सभावं पयहे पयासु ॥ १५ ॥

व्याख्या—'वाचा गुप्तो' मौनव्रती सुपर्यालोचितधर्मसम्बद्धभाषी चेत्येवं भावसमाधिं प्राप्तो भवति । तथा शुद्धां तेजोलेश्यादिकां 'समाहृत्य' उपादाय अशुद्धां च कृष्णादिकां लेश्यां परिहृत्य 'परि' समन्तात्संयमानुष्ठाने 'व्रजेत्' गच्छेत् । तथा गृहं स्वतोऽन्येन वा न छादयेत्, तथाऽपरमपि गृहादेः संस्कारं न कुर्यात्, उरगवत् परकृतबिलनिवासित्वात्साधोः, अन्यदपि गृहस्थकर्त्तव्यं न कुर्यात् । तथा प्रजासु–[ स्त्रीषु ] सम्मिश्रभावं प्रजह्यात् । एतदुक्तं भवति–प्रव्रजितोऽपि पचनपाचनादिकां क्रियां कुर्वन् कारयँश्च गृहस्थैः सम्मिश्रभावं भजते, यदि वा 'प्रजासु' स्त्रीषु स्त्रीभिर्वा सह यः सम्मिश्रीभावस्तं अविकलसंयमार्थी परित्यजेदिति गाथार्थः ॥ १५ ॥ किञ्च—

जे केइ लोगंमि उ अकिरियआया, अन्नेण पुट्ठा धुयमादिसंति ।
आरंभसत्ता गढिता य लोए, धम्मं न याणंति विमुक्खहेउं ॥ १६ ॥

व्याख्या—ये केचन अस्मिँल्लोके अक्रिय आत्मान एवं मन्यन्ते, अक्रियात्मानस्तु साँख्यास्तेषां हि मते सर्वव्यापित्वा-

" इति वचनात् । तथा

दात्मा निष्क्रियः पठ्यते, तथा चोक्तं–" अकर्त्ता निर्गुणो × भोक्ता, आत्मा कापिलदर्शने " इति वचनात् । तथा
अक्रियश्चेदात्मा तर्हि कथं मोक्षावाप्तिः ? एवं पृष्टाः सन्तस्ते साँख्याः अक्रियेऽप्यात्मनि ' धूतं ' मोक्षं प्रतिपादयन्ति, ते तु
पचनपाचनादिके स्नानार्थं जलावगाहनरूपे चारम्भे–सावद्ये सक्ताः, गृद्धाः लोके, मोक्षैकहेतुभूतं धर्मं श्रुतचारित्राख्यं
न जानन्ति, कुमार्गग्राहिणो न सम्यगवगच्छन्तीति गाथार्थः ॥ १६ ॥

पुढो य छंदा इह माणवा उ, किरियाकिरीणं च पुढो य वायं ।
जायस्स बालस्स पकुव देहं, पवड्ढती वेरमसंजतस्स ॥ १७ ॥

इह मनुष्यलोके ये केचन मानवाः
व्याख्या—' पृथक्छन्दाः ' पृथगभिप्रायाः, इहास्मिन्मनुष्यलोके मानवाः सन्ति । इह मनुष्यलोके ये केचन मानवाः
सन्ति ते सर्वेऽपि पृथगभिप्राया एव सन्ति । कथं पृथगभिप्रायाः ? क्रियाअक्रिययोः पृथक्त्वेन, एके क्रियावादिनः एके-
ऽक्रियावादमाश्रिताश्च । एके वदन्ति–" क्रियैव फलदा पुंसां, न ज्ञानं फलदं स्मृतम् । यतः स्त्रीभक्ष्यभोगज्ञो, न
ज्ञानात्सुखितो भवेत् ॥ १ ॥ " इति क्रियावादिनो वदन्ति । अन्ये एतद्विपर्ययेण अक्रियावादमाश्रिताः, एवं च ना-
नाऽभिप्राया मानवाः क्रियाऽक्रियादिकं पृथग्वादमाश्रिताः, मोक्षैकहेतुं धर्ममजानानाः, आरम्भमग्नाः, इन्द्रियवशगाः
सातगारवाश्रिताश्चैतत्कुर्वन्ति—जातस्य ' बालस्य ' सदसद्विवेकविकलस्य सुखैषिणो देहं खण्डशः कृत्वाऽऽत्मनः सुखमु-

× सत्त्वरजस्तमोगुणै रहितः ।

त्पादयन्ति, तदेवं परोपघातक्रियया तेषां जन्मान्तरशतानुबन्धि वैरं वर्द्धते, को भावः? हिंसादिषु कर्मसु प्रवृत्तस्य निरनुकम्पस्य या जाता प्रगल्भता-धार्ष्ट्यं, तया वैरमेव प्रवर्द्धत इति गाथार्थः ॥ १७ ॥ अपि च—

आउक्खयं चेव अबुज्झमाणे, ममाइ से साहसकारि मंदे।
अहो य राओ परितप्पमाणे, अट्टे सुमूढे अजरामरुव्व ॥ १८ ॥

व्याख्या—कश्चिन्मूढः आयुःक्षयं अजानन् आरम्भप्रवृत्तो 'ममाइ'त्ति किमुच्यते? ममत्ववान् भवति+ 'इदं मे अहमस्य स्वामी' इत्येवं स 'मन्दो' बालः साहसकारी स्यात्, कामभोगेष्वतृप्तः सन् अह्नि रात्रौ च द्रव्यार्थी मम्मणवणिग्वदार्त्तध्यानध्यायी कायेनापि क्लिश्यते। यतः-"अजरामरवद्बालः, क्लिश्यते धनकाम्यया। शाश्वतं जीवितं चैव, मन्यमानो धनानि च ॥ १ ॥" तदेवं अट्टे—इति आर्त्तध्यानी-मूढः सुमूढः अजरामरवदात्मानं मन्यमानोऽपगतशुभाध्यवसायोऽहर्निशमारम्भे प्रवर्त्तत इति गाथार्थः ॥ १८ ॥ अपि च—

जहाहि वित्तं पसवो य सव्वे, जे बंधवा जे य पिया य मित्ता।

---

+ "यथा कश्चिद्वणिग्महता क्लेशेन बहुमूल्यरत्नानि प्राप्योज्जयिन्या बहिरावासितः। स च 'राजचौरदायादभयाद्रात्रौ रत्नान्येवमेवं नगरे नयामी, त्येवं विचाराकुलो निशाक्षयं न ज्ञातवान्, दिवैव रत्नानि प्रवेशयन् राजपुरुषैर्धृतो रत्नानि गृहीतानि चेति" हर्ष०।

लालप्पती सेवि य एइ मोहं, अन्ने जणा तं से हरंति वित्तं ॥ १९ ॥

व्याख्या—' वित्तं ' द्रव्यजातं तथा ' पशवो ' गोमहिष्यादयस्तान्, ' जहाहि ' परित्यज, तेषु ममत्वं मा कृथाः । ये बान्धवाः-पित्रादयः श्वशुरादयश्च प्रियमित्राः-सहपांशुक्रीडितादयः, एतेऽपि मातापित्रादयो न किञ्चित्तस्य परमार्थतः कुर्वन्ति, सोऽपि च वित्तपशुबान्धवमित्रार्थी अत्यर्थं पुनःपुनर्वा लपति-लालप्यते, असमाधिवान् पुनःपुनर्मुह्यते, यच्च प्राण्युपमर्देनोपार्जितं वित्तं, तदन्ये जनाः ' से ' तस्यापहरन्ति जीवत एव [ वा, तस्य ] मृतस्य च क्लेश एव केवलं पापबन्धश्चेत्येवं मत्वा पापकर्माणि परित्यजेत्तपश्चरेदिति गाथार्थः ॥ १९ ॥

सीहं जहा खुद्दमिगा चरंता, दूरे चरंती परिसंकमाणा ।
एवं तु मेहावि समिक्ख धम्मं, दूरेण पावं परिवज्जएज्जा ॥ २० ॥

व्याख्या—यथा क्षुद्रमृगाश्चरन्तो-ऽटव्यामटन्तः सर्वतो बिभ्यतः परिशङ्कमानाः सिंहं व्याघ्रं वा आत्मोपद्रवकारिणं दूरेण परिहृत्य चरन्ति, एव मेधावी धर्मं ' समीक्ष्य ' पर्यालोच्य ' पापं ' कर्म दूरेण परिहृत्य परिव्रजेत्, संयमानुष्ठायी तपश्चारी च भवेत् । ' पापं ' ( वा ) सावद्यानुष्ठानं सिंहमिव मृगः स्वहितमिच्छन् परित्यजेदिति गाथार्थः ॥ २० ॥

संबुज्झमाणे उ णरे मतीमं, पावाउ अप्पाण निवट्टएज्जा ।
हिंसप्पसूयाइं दुहाइं मत्ता, वेराणुबंधीणि महब्भयाणि ॥ २१ ॥

व्याख्या—संबुध्यमानो नरो मतिमान् पापादात्मानं निवर्त्तयेत्। किं कृत्वा ? 'हिंसा' प्राणीव्यपरोपणं, तया प्रसूतानि यान्यशुभकर्माणि, तानि दुःखोत्पादकानि वर्त्तन्ते, तथा वैरानुबन्धीनि-जन्मशतसहस्रदुर्मोचानि, अत एव महाभयानीत्येवं मत्वा मतिमानात्मानं पापान्निवर्त्तयेदिति गाथार्थः ॥ २१ ॥

मुसं न बूया मुणि अत्तगामी, णिव्वाणमेयं कसिणं समाहिं ।
सयं न कुज्जा उ न कारवेज्जा, करंतमन्नंपि य नाणुजाणे ॥ २२ ॥

व्याख्या—'आप्तः' सर्वज्ञस्तदुपदिष्टमार्ग्गगामी 'मुनिः' साधुर्मृषावाद-मयथार्थं न ब्रूयात्, सत्यमपि प्राण्युपघातकं न वदेत्, एतन्मृषावादवर्जनं 'कृत्स्नं' सम्पूर्णं भावसमाधि निर्वाणं चाहुः, तदेवं मृषावादमन्येषां वा व्रतानामतिचारं स्वयमात्मना न कुर्यात्, नाप्यपरेण कारयेत्तथा कुर्वन्तमप्यपरं नानुमन्येत इति गाथार्थः ॥ २२ ॥

उत्तरगुणानधिकृत्याह—

सुद्धे सिया जाए न दूसएज्जा, अमुच्छिए ण य अज्झोववन्ने ।
धितिमं विमुक्के ण य पूयणट्ठी, न सिलोयकामी य परिव्वएज्जा ॥ २३ ॥

व्याख्या—'शुद्धे' निर्दोषे स्यात्-कदाचिज्जाते-प्राप्ते सत्याहारे साधू रागद्वेषाभ्यां न दूषयेत्, तत्राहारे न मूर्च्छित-अमूर्च्छितः, सकृदपि शोभनाहारलाभे सति गृद्धिमकुर्वन्नाहारयति। धृतिमान् संयमे, विमुक्तः-सबाह्याभ्यन्तरेण

१० समाध्ययने वैरानुबन्धकत्वं हिंसायाः ।

ग्रन्थेन विप्रमुक्तः, तथा पूजनं-वस्त्रपात्रादि, तेनार्थः-पूजनार्थः, स पूजनार्थी, तदेवम्भूतो न भवेत् । तथा न श्लोक-कामी-कीर्त्यर्थी काञ्चन क्रियां कुर्यादिति, निर्जरार्थी संयमं पालयेदिति गाथार्थः ॥ २३ ॥

निक्खम्म गेहाउ निरावकंखी, कायं विउसेज्ज नियाणछिन्ने ।
णो जीवियं णो मरणाभिकंखी, चरेज्ज भिक्खू वलया विमुक्के त्ति बेमि ॥ २४ ॥

व्याख्या—गृहान्निस्सृत्य 'निष्क्रम्य च' प्रव्रजितोऽपि भूत्वा जीवितेऽपि निराकाङ्क्षी 'कायं' शरीरं 'व्युत्सृज्य' निष्प्रतिकर्मतया चिकित्सादिकमकुर्वंश्छिन्ननिदानो भवेत् । तथा जीवितं मरणं च नाभिकाङ्क्षेत् 'भिक्षुः' साधुः 'वल-यात्' संसारवलयात् कर्मबन्धनाद्वा विप्रमुक्तः संयमानुष्ठानं चरेत्, इतिः परिसमाप्त्यर्थे, ब्रवीमीति पूर्ववत् ॥ २४ ॥

इति श्रीपरमसुविहितखरतरगच्छविभूषणश्रीमत्साधुरङ्गगणिवरसङ्कलितायां श्रीसूत्रकृताङ्गदीपिकायां
दशममध्ययनं समाध्याख्यं समाप्तमिति ॥

# अथैकादशं मार्गाध्ययनम् ।

उक्तं दशममध्ययनं, अथैकादशमं प्रारभ्यते मार्गाध्ययनम्, तत्रेयमादिगाथा–

**कयरे मग्गे अक्खाए ?, माहणेण मईमया । जं मग्गं उज्जु पावित्ता, ओहं तरति दुत्तरं ॥ १ ॥**

व्याख्या—सुधर्मस्वामिनं प्रति जम्बूस्वामी प्राह–'कतरः' किम्भूतो मार्गोऽपवर्गावाप्तिसमर्थः प्रतिपादितो ? भगवता माहनेन मतिमता, मतिः–केवलज्ञानाख्या यस्यास्त्यसौ मतिमाँस्तेन, यं प्रशस्तं भावमार्गं मोक्षगमनं प्रति प्रगुणं ऋजु–मवक्रं, तदेवम्भूतं मार्गं–ज्ञानदर्शनचारित्रात्मक 'प्राप्य' लब्ध्वा प्राणी ओघमिति भवौघं–संसारसमुद्रं तरति, अत्यन्तदुस्तरमपि हेलया प्राणी तरति इति गाथार्थः ॥ १ ॥ स एव पृच्छकः पुनरप्याह—

**तं मग्गं णुत्तरं सुद्धं, सव्वदुक्खविमोक्खणं । जाणासि णं जहा भिक्खू !, तं नो बूहि महामुणी ! ॥२॥**

व्याख्या—योऽसौ मार्गः सत्त्वहिताय सर्वज्ञेनोपदिष्टस्तं मार्गमनुत्तर–सर्वोत्कृष्टं, सर्वदुःखेभ्यो विमोचकं, हे भिक्षो ! यथा त्वं जानीषे 'ण'मिति वाक्यालङ्कारे, हे महामुने ! तथा त्वं [ नः–अस्माकं ] कथयेति ॥ २ ॥

यद्यप्यस्माकं युष्मत्प्रत्ययेनैव प्रवृत्तिः स्यात्तथाऽप्यन्येषां मया किम्भूतो मार्गः कथनीयः ? इत्यभिप्रायवानाह—

**जइ णो केई पुच्छेज्जा, देवा अदुव माणुसा । तेसिं तु कयरं मग्गं, आइक्खेज्ज ? कहाहि णो ॥ ३ ॥**

व्याख्या—'यदि' कदाचिन्नो-ऽस्मान् केचन सुलभबोधयः संसारभयोद्विग्नाः सम्यङ्मार्ग्गं पृच्छेयुः, के ते ? देवास्तथा मनुष्याः, तयोरेव प्रश्नसद्भावात्, न तिर्यङ्नैरयिकाः पृच्छेयुः, अथ तेषां पृच्छतां कतरं मार्ग्गमहमाख्यास्ये-कथयिष्ये ?, तदेतदस्माकं त्वं जानानः कथयेति गाथार्थः ॥ ३ ॥ एवं पृष्टः सुधर्मस्वाम्याह—

**जइ वो केइ पुच्छेज्जा, देवा अदुव माणुसा । तेसिमं पडिसाहेज्जा, मग्गसारं सुणेह मे ॥ ४ ॥**

व्याख्या—'यदि' कदाचिद्वो-युष्मान् देवा मनुष्याः सम्यङ्मार्ग्गं पृच्छेयुः, तेषां पृच्छतां इमं-वक्ष्यमाणं षड्जीवनिकायरक्षाप्रवणं ज्ञानदर्शनचारित्रात्मकं मुक्तिमार्ग्गप्रसाधकं प्रतिकथयेत् मार्ग्गसारं-मार्ग्गपरमार्थं, यं भवन्तोऽन्येषां प्रतिपादयिष्यन्ति तन्मे-मम कथयतः शृणुत यूयमिति गाथार्थः ॥ ४ ॥ पुनः सुधर्मस्वाम्याह—

**अणुपुव्वेण महाघोरं, कासवेण पवेइयं । जमादाय इओ पुव्वं, समुद्दं ववहारिणो ॥ ५ ॥**

व्याख्या—यथाऽहं 'अनुपूर्व्वेण' अनुपरिपाट्या कथयामि तथा शृणुत यूयम् । किम्भूतं मार्गं ? कापुरुषैः सङ्ग्रामप्रवेशवत्-दुरध्यवसेयत्वान्महाघोरं-महाभयानकं 'काश्यपेन' श्रीवर्द्धमानस्वामिना 'प्रवेदितं' प्रणीतं मार्ग्गं कथयिष्यामीत्यनेन स्वमनीषिकापरिहारः कृतः । यं शुद्धं मार्गमुपादाय 'इत' इति सन्मार्गोपादानात्पूर्व-मादावेव दुस्तरं संसारं महापुरुषास्तरन्ति, व्यवहारिणो यानपात्रेण समुद्रमिव, यथा हि सांयात्रिका वणिजो यानपात्रेण समुद्रं तरन्ति तथा साधवोऽपि सम्यग्दर्शनादिना मार्ग्गेण दुस्तरमपि भवौघं तरन्तीति गाथार्थः ॥ ५ ॥

अतरिंसु तरिंतेगे, तरिस्संति अणागया । तं सोच्चा पडिवक्खामि, जंतवो ! तं सुणेह मे ॥ ६ ॥

व्याख्या—यं मार्गं समाश्रित्य बहवोऽनन्ताः सत्त्वा अशेषकर्मक्षयात् संसारमतीर्षु-स्तीर्णवन्तः, साम्प्रतमपि संख्येयास्तरन्ति, महाविदेहादौ सर्वदा सिद्धिसद्भावात्, अनागते च काले अनन्ता एव जीवास्तरिष्यन्ति । एवं कालत्रयेऽपि संसारसमुद्रोत्तारकं भावमार्गं तीर्थकृद्भिरुपदिष्टं, त चाहं सम्यक् श्रुत्वा युष्माकं प्रतिपादयिष्यामि । सुधर्म्मस्वामी जम्बूस्वामिनं निश्रीकृत्यान्येषामपि जन्तूनां कथयतीति, एतदेव दर्शयितुमाह—हे जन्तवो ! अभिमुखीभूय तं—चारित्रमार्गं मम कथयतः शृणुत यूयमिति गाथार्थः ॥ ६ ॥ चारित्रमार्गस्य प्राणातिपातविरमणमूलत्वात्पूर्वं जीवस्वरूपनिरूपणार्थमाह—

पुढवीजीवा पुढो सत्ता, आउजीवा तहाऽगणी । वाउजीवा पुढो सत्ता, तणरुक्खा सबीयगा ॥ ७ ॥

व्याख्या—पृथिवीजीवास्ते च प्रत्येकशरीरत्वात् ‘ पृथक् ’ प्रत्येकं सत्त्वा—जीवा अवगन्तव्याः । तथा आपः—अग्निकायाश्च तथाऽपरे वायुजीवाः, एते सर्वेऽपि पृथकसत्त्वाः—प्रत्येकशरीरिणः, वक्ष्यमाणवनस्पतेस्तु साधारणशरीरत्वेनापृथक्त्वमप्यस्तीति । तत्र वनस्पतिकायो द्विधा—साधारणः प्रत्येकश्च । तत्र तृणानि—दर्भादीनि वृक्षाश्च—सहकारादयः । सबीजाश्च—[ सह बीजैः ] शालिगोधूमादिभिर्वर्त्तन्त इति सबीजकाः । एते सर्वेऽपि वनस्पतिकायिकाः अवगन्तव्या इति गाथार्थः ॥ ७ ॥

अहावरे तसा पाणा, एवं छक्काय आहिया । इत्ताव एव जीवकाए, नावरे विज्जई काए ॥ ८ ॥

व्याख्या—सुगमैव, × नवरं–एतावन्त एव जीवाः षट्कायलक्षणाः, नापरे केचन जीवाः सन्तीति गाथार्थः ॥ ८ ॥

**सव्वाहिं अणुजुत्तीहिं, मइमं पडिलेहिया । सव्वे अकंतदुक्खा य, अतो सव्वे न हिंसया ॥ ९ ॥**

व्याख्या—सर्वाभिरप्यनुयुक्तिभिः–पृथिव्यादिजीवनिकायसाधकत्वेन अनुकूलयुक्तिभिः 'मतिमान्' विवेकी पृथिव्यादिजीवनिकायेषु जीवत्वं प्रसाध्य 'प्रत्युपेक्ष्य' पर्यालोच्य, तथा सर्वेऽप्यकान्तदुःखाः–दुःखद्विषः सुखार्थिनश्च [इति] मत्वा मतिमान् सर्वानपि प्राणिनो न हिंस्यादिति मनोवाक्कायकर्मभिः कृतकारितानुमतिभिश्च नवकेन भेदेन च तत् पीडाकारिण उपमर्दान्निवर्त्तनीयमिति गाथार्थः ॥ ९ ॥

**एयं खु नाणिणो सारं, जं न हिंसंति कंचण । अहिंसा समयं चेव, एतावंतं विजाणीया ॥ १० ॥**

व्याख्या— + एतदेव ज्ञानिनो ज्ञानस्य सारं–यत्कञ्चन प्राणिनमनिष्टदुःखं सुखार्थिनं न हिनस्ति, विदितागमार्थस्यैतदेव सारं–यत् प्राणातिपातान्निवर्त्तनं, ज्ञानमपि परमार्थतस्तदेव–यत्किञ्चित्प्राणातिपातान्निवर्तनं, प्राणीपीडाकारिणो ज्ञानमपि अज्ञानमेवेति तत्त्वं, यतः–"किं ? ताए पढियाए, पयकोडीए पलालभूयाए । जत्थित्तियं न नायं, परस्स पीडा न

---

× "अथापरे त्रसाः प्राणिनो–द्वित्रिचतुष्पञ्चेद्रिया, एवं षट्काया आख्यातास्तीर्थकृद्भिः ।" इति हर्ष०

+ "खुर्वाक्यालङ्कारे निश्चये वा" इति हर्ष० ।

१ किं ? तया पठितया पदकोट्या पलालभूतया । यत्रैतावन्न ज्ञातं, परस्य पीडा न कर्त्तव्या ॥ १ ॥

कायण्वा ॥ १ ॥" तदेवमहिंसाप्रधानः 'समय' आगमः, तमेवम्भूतं अहिंसाप्रधानं आगमं एतावन्तमेव विज्ञाय, किमन्येन बहुना परिज्ञानेन ? एतावतैव कार्यसिद्धेः, एतावता अहिंसाप्रधानं समयं ज्ञात्वा न हिंस्यात् कञ्चनेति गाथार्थः ॥ १० ॥

साम्प्रतं क्षेत्रप्राणातिपातमधिकृत्याह—

**उड्ढं अहे तिरियं च, जे केइ तसथावरा । सव्वत्थ विरतिं कुज्जा, संति निव्वाणमाहियं ॥ ११ ॥**

व्याख्या—ऊर्ध्वमधस्तिर्यक् च ये केचन त्रसास्तथा स्थावरास्तत्र सर्वत्र त्रसस्थावरभेदभिन्ने विरतिं–प्राणातिपातनिवृत्तिं कुर्यात्, परमार्थत एवमेवासौ ज्ञाता भवति यदि ज्ञात्वा प्राणातिपातनिवृत्तिर्विधीयते, तन्निवृत्तेश्च परेषामात्मनश्च शान्तिर्वर्त्तते, यतो विरतिमतो नान्ये केचन बिभ्यन्ति नाप्यसौ भवान्तरेऽपि कुतश्चिद्बिभेति । तथा निर्वाणमप्येतदेव यत्प्राणातिपातान्निवर्त्तनं, शान्तिस्तथा निर्वाणमिति मत्वा प्राणातिपातनिवृत्तिं कुर्यादिति गाथार्थः ॥ ११ ॥ किञ्च—

**पभू दोसे निराकिच्चा, ण विरुज्झेज्ज केणई । मणसा वयसा चेव, कायसा चेव अंतसो ॥ १२ ॥**

व्याख्या—प्रभु–र्वश्येन्द्रियः, स एवम्भूतो 'दोषान्' मिथ्यात्वाविरतिप्रमादकषाययोगान्निराकृत्य केनापि प्राणिना सार्द्धं न विरुध्येत–न केनचित्सह विरोधं कुर्यात्, मनसा वचसा कायेन 'अन्तशो' यावज्जीवं न केनापि सह विरोधं कुर्यादिति गाथार्थः ॥ १२ ॥

**संवुडे से महापन्ने, धीरे दत्तेसणं चरे । एसणासमिए निच्चं, वज्जयंते अणेसणं ॥ १३ ॥**

व्याख्या—आश्रवद्वारनिरोधेन संवृतः स भिक्षुर्महाप्रज्ञः—विपुलबुद्धिर्धीरो—ऽक्षोभ्यो दायकेन दत्तामेषणां चरेत्, एषणीयं गृह्णातीत्यर्थः । एवंविधः साधुः एषणासमितः अनेषणां वर्जयन् संयममनुपालयेदिति गाथार्थः ॥ १३ ॥

अनेषणीयपरिहारमधिकृत्याऽह—

**भूयाइं च समारब्भ, तमुद्दिस्सा य जं कडं । तारिसं तु न गिह्णिज्जा, अन्नपाणं सुसंजए ॥ १४ ॥**

व्याख्या—भूतानि समारभ्य, ['तं'] साधुमुद्दिश्य—साध्वर्थं 'यत्कृतं' तदुपकल्पितमाहारोपकरणादिकं, तादृशमन्नं पानकं च सुसाधुर्न गृह्णीयात्—नाभ्यवरेत् । एवं तेन मार्गोनुपालितो भवतीति गाथार्थः ॥ १४ ॥ किञ्च—

**पूईकम्मं न सेवेज्जा, एस धम्मे वुसीमओ । जं किंचि अभिकंखेज्जा, सव्वसो तं न कप्पए ॥ १५ ॥**

व्याख्या—आधाकर्माद्यविशुद्धिकोट्यवयवेनापि संपृक्तं पूतिकर्म प्रोच्यते, तदेवं पूतिकर्मदोपदुष्टं आहारादिकं न सेवेत—नोपभुञ्जीत, एष धर्म्मः 'वुसीमओ' त्ति सम्यक्संयमवतः, अयमेव सम्यङ्मार्गः—साधुरशुद्धमाहारादिकं परिहरतीति । तथा यदपि शुद्धमप्यशुद्धत्वेनाभिशङ्केत किञ्चिदप्याहारादिकं तत् 'सर्वशः' सर्वप्रकारमप्याहारोपकरणं पूतिकर्म्म भोक्तुं न कल्पत इति गाथार्थः ॥ १५ ॥ किञ्च—

**हणंतं नाणुजाणेज्जा, आयगुत्ते जिइंदिए । ठाणाइं संति सड्ढीणं, गामेसु नगरेसु वा ॥ १६ ॥**

व्याख्या—धर्मश्रद्धावतां ग्रामेषु नगरेषु [वा] 'स्थानानि' आश्रयाः 'सन्ति' विद्यन्ते । तत्र तत् स्थानाश्रितः कश्चिद्-

मोंद्देशेन किल धर्मश्रद्धालुतया कूपतडागखननप्रपामत्रादिकां × प्राण्युपमर्दकारिणीं क्रियां कर्त्तुकामः कश्चिद्धर्मबुद्धया पृच्छेत्—यदहं कूपतडागखननादिकां पूर्वोक्तां क्रियां करोमि ? अस्ति कश्चिद्धर्मो न वेत्येवं पृष्टः साधुः किं कुर्यात् ? तत्र तदुपरोधाद्भयाद्वा[ तं ] प्राणिनो घ्नन्तं नानुजानीयात् । किम्भूतः ? आत्मना—मनोवाकायरूपेण गुप्तः आत्मगुप्तस्तथा जितेन्द्रियः सन् साधुः सावद्यानुष्ठानं नानुमन्येतेति गाथार्थः ॥ १६ ॥

**तहा गिरं समारब्भ, अत्थि पुन्नंति नो वए । अहवा नत्थि पुन्नंति, एवमेयं महब्भयं ॥ १७ ॥**

व्याख्या—केनचिद्राजादिना कूपखननसत्रदानादिप्रवृत्तेन पृष्टः साधुः—किमस्मदनुष्ठाने अस्ति पुण्यमाहोस्विन्नास्तीत्येवम्भूतां गिरं 'समारम्य' निशम्याऽऽश्रित्य वा अस्ति पुण्यं नास्ति वा इत्युभयथापि महाभयमिति मत्वा नानुमन्येतेति गाथार्थः ॥ १७ ॥ किमर्थं नानुमन्येत ? इत्याह—

**दाणट्ठया य जे पाणा, हम्मंति तसथावरा । तेसिं सारक्खणट्ठाए, अत्थि पुन्नंति नो वए ॥ १८ ॥**

व्याख्या—अन्नपानदानार्थमाहारमुदकं च पचनपानादिकया क्रियया कूपखननादिकया चोपकल्पयेत्तत्र यस्माद्धन्यन्ते—व्यापाद्यन्ते त्रसाः स्थावराश्च जन्तवस्तस्मात्तेषां (सं)रक्षणार्थं—रक्षार्थं साधुरात्मगुप्तोऽस्त्यत्र भवदीयेऽनुष्ठाने पुण्यमित्येवं नो वदेदिति गाथार्थः ॥ १८ ॥ यद्येवं नास्ति पुण्यमित्येवं ब्रूयादित्याह—

× सत्रादिकां—दानशालादिकाम् ।

११ मार्गाध्ययने सत्रप्रपादौ पुण्यापुण्ययोर्द्वयोरप्यवाच्यत्वम् ।

**जेसिं तं उवकप्पंति, अन्नपाणं तहाविहं । तेसिं लाभंतरायंति, तम्हा णात्थित्ति नो वए ॥ १९ ॥**

व्याख्या—येषां जन्तूनां कृते तदन्नपानादिकं किल धर्मबुद्धयोपकल्पयन्ति–तथाविधं प्राण्युपमर्ददोषदुष्टं निष्पादयन्ति, तन्निषेधे च यस्मात्तेषा–माहारपानार्थिनां तल्लाभान्तरायो–विघ्नो भवेत्तदभावेन तु [ते] पीडयेरन्, तस्मात् कूपखनन-सत्रादिके कर्मणि नास्ति पुण्यमित्येवमपि नो वदेदिति गाथार्थः ॥ १९ ॥

एनमेवार्थं पुनरपि स्पष्टतरं बिभणिषुराह—

**जे य दाणं पसंसंति, वहमिच्छंति पाणिणं । जे उण पडिसेहंति, वित्तिच्छेयं करिंति ते ॥ २० ॥**

व्याख्या—ये केचन प्रपासत्रादिकं दानं बहूनां जन्तूनामुपकारीति 'प्रशंसन्ति' श्लाघन्ते, ते परमार्थानभिज्ञाः प्रभूततरप्राणिनां तत्प्रशसाद्वारेण तेषां प्राणिनां 'वधं' प्राणातिपातमिच्छन्ति, तद्दानं तु प्राणातिपातमन्तरेण न भवेत् । ये पुनः किल सूक्ष्मधियो वयं–गीतार्था इत्येवं मन्यमाना आगमसद्भावमजानन्तः 'प्रतिषेधयन्ति' निषेधयन्ति तेऽप्यगीतार्थाः प्राणिनां 'वृत्तिच्छेदं' लाभान्तरायं कुर्वन्तीति गाथार्थः ॥ २० ॥

तदेवं राज्ञा अन्येन वा ईश्वरेण कूपतडागयागसत्रदानाद्युद्यतेन पुण्यसद्भावं पृष्टैर्मुमुक्षुभिर्यद्विधेयं तद्दर्शयितुमाह—

**दुहओ वि ते न भासंति, अत्थि वा नत्थि वा पुणो । आयं रयस्स हिच्चाणं, निव्वाणं पाउणंति ते ॥२१॥**

व्याख्या—यद्यस्ति पुण्यमित्येवं वदेयुस्तदाऽनन्तानां जीवानां सूक्ष्मबादराणां सर्वदा प्राणत्याग एव स्यात्, प्रीणन-

मात्रं पुनः[स्वल्पानां] स्वल्पकालीयं, अतोऽस्ति—पुण्यमित्येवं नो वदेत् । नास्ति पुण्यं मित्यपि न वक्तव्यं, इत्येवं वदतां तत् प्रतिषेध एव कृतो भवेत्, तत् प्रतिषेधे कृते तेषामन्तरायः स्यात् । ततो द्विधाऽप्यस्ति नास्ति वा पुण्यमित्येवं ते साधवः पुनर्न भाषन्ते, किन्तु पृष्टैः सद्भिर्मौनमेव समाश्रयणीयं, निर्बन्धे त्वस्माकं द्विचत्वारिंशद्दोषवर्जित आहारः कल्पते, एवंविधविषयेऽस्माकं मुमुक्षूणामधिकार एव नास्ति तदेवमुभयथाऽपि भाषिते 'रजसः' कर्मण 'आयो' लाभो भवति + । ततस्तमायं रजसो वा मौनेनानवद्यभाषणेन वा 'हित्वा' त्यक्त्वा ते अनवद्यभाषिणो निर्वाणं—मोक्षं प्राप्नुवन्तीति गाथार्थः ॥ २१ ॥ अपि च—

**निवाणं परमं बुद्धा, णक्खत्ताण व चंदिमा । तम्हा सया जए दंते, निवाणं संधए मुणी ॥ २२ ॥**

व्याख्या—येषां परलोकार्थिनां बुद्धानां निर्वाणं, तत्परमं प्रधानं, बुद्धास्तु निर्वाणमेवाभिसन्धाय प्रवृत्ताः, अतस्त एव प्रधानाः, नापरे इति । यदि वा यथा नक्षत्राणां चन्द्रमाः प्रधानभावमनुभवति, एवं लोकस्य निर्वाणं परमं प्रधानमेवं 'बुद्धा' अवगततत्त्वाः प्रतिपादयन्तीति । यस्माच्च निर्वाणं प्रधानं तस्मा'त्सदा' सर्वकालं 'मुनिः' साधु'र्यतः' प्रयत्नवान् 'दान्तः' इन्द्रियनोइन्द्रियदमेन, एवंविधो निर्वाणमभिसन्धये—न्निर्वाणार्थं सर्वाः क्रियाः कुर्यादिति गाथार्थः ॥ २२ ॥

**वुज्झमाणाण पाणाणं, किच्चंताण सकम्मुणा । आघाति साहु तं दीवं, पतिट्ठेसा पवुच्चती ॥ २३ ॥**

---

+ यथा चोक्तमन्यैः—"सत्य वप्रे[वापी]षु शीत हिमकरधवलं वारि पीत्वाप्रकाम, व्युच्छिन्नाशेषतृष्णाः प्रमुदितमनसः पान्थसार्था भवन्ति । शोषं नीते जलौघे दिनकरकिरणैर्यान्त्यनन्ता विनाशं,तेनोदासीनभावं व्रजति मुनिगणः कूपवप्रा[वाप्या]दिकार्ये ॥१॥" इत्यादि ।

व्याख्या—संसारसागरे मिथ्यात्वकषायादिकैरुह्यमानानां प्राणिनां, तथा स्वकर्मणा निकृत्यमानानां—छिद्यमानानां तीर्थकृदन्यो वा गणधराचार्यादिकः परमकारुणिकोऽत्यन्तवत्सलः सँस्तेषां प्राणिनामाश्वासभूतं '.साधुं' शोभनं द्वीपमाख्याति, सम्यग्दर्शनादिकं संसारभ्रमणविश्रामहेतुमाख्याति। तथैषा सम्यग्दर्शनाद्यवाप्तिः 'प्रतिष्ठा' मोक्षाद्यवाप्तिसाध्या संसारभ्रमिनिवारिणीति गाथार्थः ॥ २३ ॥

कीदृग्विधेन च अयमाश्वासद्वीपः कथ्यते इत्याह—

**आयगुत्ते सया दंते, छिन्नसोए अणासवे। जे धम्मं सुद्धमक्खाति, पडिपुन्नमणेलिसं ॥ २४ ॥**

व्याख्या—य आत्मगुप्तः सदा दान्तः, तथा छिन्नसंसारस्रोता, तथा अनाश्रवः, स एव शुद्धं धर्ममाख्याति, नापरः। कीदृशं धर्मं? प्रतिपूर्णम्—सर्वविरतिरूपं, अनीदृशं—निरुपममिति गाथार्थः ॥ २४ ॥

**तमेव अविजाणंता, अबुद्धा बुद्धमाणिणो। बुद्धामो त्ति य मन्नंता, अंत एते समाहिए ॥ २५ ॥**

व्याख्या—तमेवं शुद्धं धर्मं परिपूर्णमनीदृशमजानाना 'अप्रबुद्धाः' अविवेकिनः पण्डितमानिनो—'वयमेव धर्मतत्त्वं प्रतिबुद्धाः' इत्येवं मन्यमानाः भावसमाधेः सम्यग्दर्शनाख्यादन्ते—पर्यन्ते दूरे वर्त्तन्ते। ते च सर्वे परतीर्थिकाः द्रष्टव्या इति गाथार्थः ॥ २५ ॥ किमिति ते भावसमाधेर्दूरे वर्त्तन्ते? इत्याह—

**ते य बीओदगं चेव, तमुद्दिस्सा य जं कडं। भोच्चा झाणं झियायंति, अखेयन्नेऽ[अ]समाहिया ॥२६॥**

व्याख्या—ते च परतीर्थिकाः जीवाजीवादिनवतत्त्वानभिज्ञाः सन्तो 'बीजानि' शालिगोधूमादीनि तथा 'शीतोदकं' अप्रासुकोदकं, ताँश्च उद्दिश्य—तद्भक्तैर्यदाहारादिकं निष्पादितं तत्सर्वमविवेकितया भुक्त्वा, पुना रसलोलुपतया औद्देशिक-भक्तकृते आर्त्त[ध्यानं]ध्यायन्ति । न ह्यैहिकसुखार्थिनां परिग्रहारम्भिणां धर्मध्यानं भवति । तथा ते परतीर्थिकाः कथम्भूताः ? धर्माधर्मविवेके कर्त्तव्ये 'अखेदज्ञाः' अनिपुणास्तथा असमाहिताः, यतः–प्रायेणार्त्तध्यायिनस्त्वसन्तोषिण एव भवन्तीति गाथार्थः ॥ २६ ॥

जहा ढंका य कंका य, कुलला मग्गुका सिही । मच्छेसणं झियायंति, झाणं ते कलुसाहमं ॥२७॥

व्याख्या—यथा ढङ्काद्याः पक्षिविशेषाः, मत्स्यान्वेषणपरं ध्यानं ध्यायन्ति, ते हि पक्षिणः आमिषजीविनो मत्स्यप्राप्तिं ध्यायन्ति, एवम्भूतं च ध्यानं आर्त्तरौद्रध्यानरूपतयाऽत्यन्तकलुषमधमं च भवतीति गाथार्थः ॥ २७ ॥

दार्ष्टान्तिकं दर्शयितुमाह—

एवं तु समणा एगे, मिच्छादिट्ठी अणारिया । विसएसणं झियायंति, कंका वा कलुसाहमा ॥ २८ ॥

व्याख्या—'एव'मिति यथा ढङ्कादयो मत्स्यान्वेषणपरं ध्यानं ध्यायन्ति, तद्ध्यायिनश्च कलुषाधमा भवन्ति, एवं मिथ्यादृष्टयः श्रमणाः अनार्याः शाक्यादयो विषयाणां प्राप्तिं ध्यायन्ति, तद्ध्यायिनश्च कङ्का इव कलुषाधमा भवन्तीति गाथार्थः ॥ २८ ॥ किञ्च—

**सुद्धं मग्गं विराहित्ता, इहमेगे उ दुम्मती । उमग्गगया दुक्खं, घातमेसंति तं तहा ॥ २९ ॥**

व्याख्या—एके शाक्यादयः 'शुद्धं' निर्दोषं सम्यग्दर्शनादिकं मोक्षमार्गं कुमार्गप्ररूपणया विराध्य इहा-स्मिन् संसारे मोक्षमार्गप्ररूपणप्रस्तावे वा एके-ऽन्यतीर्थीया 'दुर्मतयः' कुमतयः 'उन्मार्गेण' संसारावतारणरूपेण 'गताः' प्राप्ताः सन्त उन्मार्गगताः दुःख-मष्टप्रकार कर्म असातोदयरूपं च तथा घातं चान्तशः सन्मार्गविराधनया उन्मार्गगमनं च एपन्ते-अन्वेपयन्ति, दुःखमरणे शतशः प्रार्थयन्तीति गाथार्थः ॥ २९ ॥ अथ शाक्यादीनां दृष्टान्तपूर्वकमाह—

**जहा आसाविणिं नावं, जाइअंधो दुरूहिया । इच्छती पारमागंतुं, अंतरा य विसीयती ॥ ३० ॥**

व्याख्या—यथा जात्यन्ध 'आस्राविणीं' शतच्छिद्रां नावमारुह्य पारमागन्तुमिच्छति, न चासौ सच्छिद्रतया पारगामी भवति, किन्त्वन्तराले एव निमज्जतीति गाथार्थः ॥ ३० ॥

**एवं तु समणा एगे, मिच्छदिट्ठी अणारिया । सोयं कसिणमावन्ना, आगंतारो महब्भयं ॥ ३१ ॥**

व्याख्या—एवमेव श्रमणा एके शाक्यादयो मिथ्यादृष्टयोऽनार्या भावस्रोतः कर्माश्रवरूपं कृत्स्नं सम्पूर्णमापन्नाः सन्तस्ते महाभयं नारकादिस्वभावं दुःखमागन्तारः-आगमनशीला भवन्ति । न तेषां संसारोदधेरास्राविणीं नावां व्यवस्थितानामेवोत्तरणं भवतीति गाथार्थः ॥ ३१ ॥

एवं शाक्यादयः श्रमणा मिथ्यादृशोऽनार्याः संसारस्रोतस्समापन्नाः सन्तो महाभयं नरकादिदुःखमाप्नुवन्ति, तत

इदमुपदिश्यते—

इमं च धम्ममादाय, कासवेण पवेइयं । तरे सोयं महाघोरं, अत्तत्ताए परिव्वए× ॥ ३२ ॥

व्याख्या—इदं धर्मं श्रुतचारित्राख्यं ‘ आदाय ’ गृहीत्वा ‘ काश्यपेन ’ श्रीवर्द्धमानस्वामिना प्रवेदितं संसारस्रोतः समुल्लङ्घ्य ‘ तरेत् ’ पारगामी स्यात् । कथम्भूतं संसारस्रोतः ‘ महाघोरं ’ दुरुत्तारत्वान्महाभयानकं, तदेवं काश्यपेन प्रवेदितं धर्मं समादाय साधुरात्मत्रायी आत्मत्राणाय परिव्रजेत्, संयमानुष्ठायी भवेदिति गाथार्थः ॥ ३२ ॥

विरए गामधम्मेहिं, जे केई जगई जगा । तेसिं अत्तुवमायाए, थामं कुव्वं परिव्वए ॥ ३३ ॥

व्याख्या—ग्रामधर्मा विषयाः पंच, तेभ्यो विरतो मुनिः, ये केचन ‘ जगति ’ संसारोदरे पृथिव्यां ‘ जगा ’ इति जन्तवस्ते सर्वेऽपि जीवितार्थिनस्तेषां दुःखद्विषामात्मोपमया दुःखमनुत्पादयन् तत्पालने सामर्थ्यं कुर्यात् । तत् कुर्वंश्च संयमाऽनुष्ठाने परिव्रजेदिति गाथार्थः ॥ ३३ ॥

संयमविघ्नकारिणामपनयनार्थमाह—

अतिमाणं च मायं च, तं परिन्नाय पंडिए । सव्वमेयं निराकिच्चा, निव्वाणं संधए मुणी ॥ ३४ ॥

× “ कचित्पश्चार्द्धस्यायं पाठः-“ कुज्जा भिक्खू गिलाणस्स, अगिलाए समाहिए ॥ ” भिक्षुः-साधुर्ग्लानस्य वैयावृत्त्यमग्लानो-ऽपरिश्रान्तः कुर्यात्समाधिना-ग्लानस्य समाधिमुत्पादयन् । ” इति हर्ष० ।

व्याख्या—चारित्रमतिक्रम्य यो [मानो] वर्त्तते सोऽतिमानः, चकारात्क्रोधोऽपि परिगृह्यते। एवमतिमायां अतिलोभं [च], तमेवम्भूतं कषायव्रातं संयमपरिपन्थिनं 'पण्डितो' विवेकी परिज्ञाय सर्वमेनं संसारकारणभूतं कषायसमूहं निराकृत्य निर्वाणमनुसन्धयेत्। सति च कषायकदम्बके न संयमः सम्यक् सफलतां प्रतिपद्यते। तदुक्तम्—"[1]सामन्नमणुचरंतस्स, कसाया जस्स उक्कडा हुंति। मन्नामि उच्छुपुप्फं व, निप्फलं तस्स चारित्तं ॥ १ ॥" इति, तस्मिन्निष्फले न मोक्षसम्भवः, अतः कषायपरित्यागात् प्रशस्तभावानुसन्धानेन निर्वाणं साधयेदिति गाथार्थः ॥ ३४ ॥ किञ्च—

**संधए साहुधम्मं च, पावधम्मं निराकरे। उवहाणवीरिए भिक्खू, कोहं माणं ण पत्थए ॥ ३५ ॥**

व्याख्या—साधुधर्मः क्षान्त्यादिको दशप्रकारः सम्यग्दर्शनचारित्राख्यो वा, तं साधुधर्ममनुसन्धयेत्-वृद्धिमापादयेत्। तथा 'पापं' पापोपादानकारणं 'धर्मं' प्राण्युपमर्द्दनप्रवृत्तं निराकुर्यात्। तथोपधानं-तपः, तत्र यथाशक्त्या वीर्यं यस्य स उपधानवीर्यो भिक्षुः, क्रोधं मान च न प्रार्थयेन्न वर्द्धयेद्वा इति गाथार्थः ॥ ३५ ॥

अथैवम्भूतं भावमार्गं किं वर्द्धमानस्वाम्येवोपदिष्टवान्? उतान्येपीत्येतदाशङ्क्याह—

**जे य बुद्धा अतिक्कंता, जे य बुद्धा अणागया। संति तेसिं पइट्ठाणं, भूयाणं जगती जहा ॥ ३६ ॥**

व्याख्या—ये बुद्धा-स्तीर्थकृतोऽतीतेऽनादिके कालेऽनन्ता अतिक्रान्तास्ते सर्वेऽप्येवंविधं भावमार्गमुपदिष्टवन्तः।

---

१ श्रामण्यमनुचरतः कषाया यस्योत्कटा भवन्ति। मन्ये इक्षुपुष्पमिव निष्फल तस्य चारित्रम् ॥ १ ॥

तथा ये चानागता-भविष्यदनन्तकालभाविनोऽनन्ता एव तेऽप्येवमेवोपन्यसिष्यन्ति । चशब्दात् वर्त्तमानकालभाविनः संख्येयास्तेऽप्येवमेवोपदिशन्ति कुर्वन्ति च । एतावता ते सर्वेऽप्येनं भावमार्ग्गमुक्तवन्तोऽनुष्ठितवन्तश्च, तेषां सर्वेषामप्यर्हतां प्रतिष्ठान-माधारो मोक्षः, स शान्तिस्तेषां प्रतिष्ठानं, को भावः ? यथा 'भूतानां' स्थावरजङ्गमानां 'जगती' त्रिलोकी प्रतिष्ठानं, एवं ते सर्वेऽपि बुद्धाः शान्तिप्रतिष्ठानाः, एतावता 'शान्तिः' सर्वजीवानां दया, सैव सर्वधर्माणा मूलं सर्वेऽप्यर्हन्तः प्ररूपयन्तीति गाथार्थः ॥ ३६ ॥

**अह णं वयमावन्नं, फासा उच्चावया फुसे । ण तेसु विणिहण्णेज्जा, वाएणेव महागिरी ॥ ३७ ॥**

व्याख्या—'अथ' भावमार्ग्गप्रतिपत्त्यनन्तरं तं भिक्षुं 'स्पर्शाः' परीषहोपसर्ग्गरूपाः 'उच्चावचा' गुरुलघवः 'स्पृशेयुः' अभिद्रवेयुः, स च साधुस्तैरभिद्रुतः संसारस्वरूपं विदन् कर्मनिर्जरां च भावयंस्तैः परीषहोपसर्ग्गैर्न विहन्यात्, न संयमाऽनुष्ठानात् मनागपि विचलेत् । किमिव ? महावातैरिव महागिरि-र्मेरुरिति गाथार्थः ॥ ३७ ॥

**संवुडे से महापन्ने, धीरे दत्तेसणं चरे । निव्वुडे कालमाकंखी, ए(यं)वं केवलिणो मयं ॥३८॥ ति बेमि**

व्याख्या—सः साधुः 'संवृतः' संवरयुक्तः, महाप्राज्ञो धीरः, स एवम्भूतः परेण दत्ते सत्याहारादिके एषणां चरेत् । तथा 'निर्वृतः' कषायोपशमाच्छीतीभूतः 'कालं' मृत्युं यावत् अभिकाङ्क्षेत् । एतन्मया प्राक्प्रतिपादितं, तत् 'केवलिनः' सर्वज्ञस्य मतं । एतच्च जम्बूस्वामिनमुद्दिश्य सुधर्मस्वाम्याह । तदेतद्यत्त्वया मार्ग्गस्वरूपं प्रश्नितं तन्मया न स्वमनीषिकया

कथितं, किं तर्हि ? केवलिनो मतमित्येवं भवता ग्राह्यमिति गाथार्थः ॥ ३८ ॥ [ इतिः परिसमाप्त्यर्थे, ब्रवीमीति पूर्ववत् ]

इति श्रीपरमसुविहितखरतरगच्छविभूषण-श्रीमत्साधुरङ्गगणिवरगुम्फितायां श्रीसूत्रकृताङ्गदीपिकायां मार्गाध्ययनमेकादशं सम्पूर्णमिति ।

## अथ द्वादशं समवसरणाभिधमध्ययनम् ।



उक्तमेकादशमध्ययनं साम्प्रतं द्वादशमारभ्यते ।

**चत्तारि समोसरणाणिमाणि, पावादुया जाइं पुढो वयंति ।**
**किरियं अकिरियं विणियंति तइयं, अन्नाणमाहंसु चउत्थमेव ॥ १ ॥**

व्याख्या—चत्वारि ' समवसरणानि ' परतीर्थिकाभ्युपगमसमूहरूपाणि, यानि प्रावादुकाः पृथक्पृथक् प्रवदन्ति, तानि चामूनि अन्वर्थाभिधायिभिः संज्ञापदैर्निर्दिश्यन्ते, तद्यथा-एके क्रियावादिनः एके अक्रियावादिनो विनयवादिनस्त्वेके, एके अज्ञानवादिन इति गाथार्थः ॥ १ ॥ अथाज्ञानवादिन एव सर्वथा असम्बद्धप्रलापिनः, अतस्तानेवादावाह—

अन्नाणिया ता कुसलावि संता, असंथुया नो वितिगिच्छतिन्ना ।
अकोविया आहु अकोवियेहिं, अणाणुवाई य मुसं वयंति ॥ २ ॥

व्याख्या—अज्ञानिकास्तावद्वदन्ति–वयमेव 'कुशलाः' निपुणाः, नाऽन्ये, एवं वदन्तोऽपि ते 'असंथुया' इति असंस्तुताः, अज्ञानमेव श्रेय इत्येवंवादितया असम्बद्धाः, असंस्तुतत्वाद्विचिकित्सां–चित्तभ्रान्ति 'न तीर्णाः' नातिक्रान्ताः, चित्तभ्रान्तिस्तेषां न सम्यगपगता×, अतस्तेऽज्ञानवादिनः स्वयं 'अकोविदाः' धर्मोपदेशं प्रति अनिपुणाः, ततोऽकोविदेभ्य एव स्वशिष्येभ्यः 'आहुः' कथितवन्तः, यथा–अज्ञानमेव श्रेयः इत्यादि प्ररूपयन्ति । ते शिष्या अपि तदेव मन्यन्ते, मूर्खत्वात् "सरिसा सरिसेसु रचंति" इति वचनात् । एवं ते अपर्यालोच्यवादिनो मृषाभाषिणो ज्ञेया इति गाथार्थः ॥२॥

साम्प्रतं विनयवादं निराचिकीर्षुः प्रक्रमते—

× "तथाहि–केचित्सर्वज्ञं मन्यन्ते केचित्तं निषेधयन्ति, एके सर्वगमात्मानं वदन्ति अन्ये देहमात्रं, अपरेऽङ्गुष्ठपर्वमात्रं केचन श्यामाकतन्दुलमात्रं, अन्ये मूर्त्तममूर्त्तं हृदयमध्यवर्त्तिनं ललाटस्थित इत्यादि, एषामेकवाक्यता कथं स्यात् ?, न चातिशयज्ञानी कश्चिदस्ति यद्वाक्यं प्रमाणी क्रियते, तथा ज्ञानवतां प्रमादो बहुदोषः, ततो वरमज्ञानमेवेति वदन्तश्चित्तभ्रान्ति नातिक्रान्ताः" इति हर्षे० ।

१ सदृशाः सदृशेषु रज्यन्ते ।

सच्चं असच्चं इति चिंतयंता, असाहु साहुत्ति उदाहरंता ।
जेमे जणा वेणइया अणेगे, पुट्ठा वि भावं विणइंसु णाम ॥ ३ ॥

व्याख्या—' सत्यं ' संयमस्तदसत्यमित्येवं चिन्तयन्तोऽसत्यं सत्यमिति मन्यमानाः। एतावता सत्यमसत्यमिति असत्यं च सत्यमिति, विनयादेव मोक्ष इत्येतदसत्यमपि सत्यतया मन्यमानाः, तथा असाधुमपि वन्दनादिकया विनयप्रतिपत्त्या साधुमित्येवमुदाहरन्तः–प्रतिपादयन्तो न सम्यग्यथाऽवस्थितधर्मस्य परीक्षकाः, कथं ? यतस्ते विनयादेव धर्म इत्येवं युक्तिविकलं भाषन्ते, के एते एवं भाषन्ते ? इत्याह–' जेमे जणा वेणइया अणेगे ' ये इमे जना इव–प्राकृतपुरुषा इव, यथा प्राकृतपुरुषाः–पामराः विनयादेव केवलात्स्वर्गमोक्षवाप्तिरित्येवं भाषन्ते, गुणागुणविशेषो नापरो मोक्षकारणं, विनयस्यैव प्राधान्यं। एवंविधा विनयवादिनः कियन्तः ? ' अणेगे ' अनेके, द्वात्रिंशद्भेदभिन्नत्वात्–बहवः, ' पुट्ठा वि ' ते विनयवादिनः पृष्टा अपि परैर्विनयादेव मोक्षावाप्तिरित्येवं व्यनैषु–र्विनीतवन्तः। ' नाम ' इति सम्भावनायां। सर्वदा सर्वस्य सिद्धये विनयं ग्राहितवन्तः, " तस्मात् कल्याणानां सर्वेषां भाजनं विनय " इति वचनादिति गाथार्थः ॥३॥ किञ्च—

अणोवसंखा इति ते उदाहु, अट्ठे स ओभासति अम्ह एवं ।
लवावसंकी य अणागएहिं, णो किरियमाहंसु अकिरियवादी ॥ ४ ॥

व्याख्या—सम्यग् यथावस्थितार्थपरिज्ञानं–उपसंख्या, न उपसंख्या ' अनुपसंख्या ' अपरिज्ञानं, तेन व्यामूढ-

मतयस्ते वैनयिका अज्ञानाच्छादिता इति 'उदाहुः' कथयन्ति । यथा 'स्वोऽर्थः' स्वर्गमोक्षादिकः सर्वोऽपि सर्वस्य विनयप्रतिपत्त्या अस्माकमवभासते—आविर्भवति, प्राप्यते, अस्माकं मते सर्वोऽप्यर्थो विनयप्रतिपत्त्या सिद्ध्यतीति ( प्रत्युत्तरं दीयते ) भावः, इति विनयवादिमतं । तत्र प्रतिविधीयते—नैकस्माद्विनयादर्थसिद्धिः, किन्तु सम्यग्दर्शनादिसम्भवे सति विनयस्य कल्याणभाक्त्वं भवति, नैककस्येति, तद्रहितो हि विनयोपेतः सर्वस्य प्रह्वतया न्यत्कार + मवाप्नोति । ततश्च विवक्षितार्थावभासनाभावात्तेषामेव वादिनामज्ञानावृतत्वमेवावशिष्यते, नाभिप्रेतार्थावाप्तिरिति । उक्ता वैनयिकाः, साम्प्रतमक्रियावादिदर्शनं निराचिकीर्षुर्गाथापश्चार्द्धमाह—'लवावसंकी'त्यादि, 'लवं' कर्म, तस्मादपशङ्कि[ तुं—अपसर्त्तुं शीलं येषां ते लवापशङ्कि]नो लोकायतिकाः शाक्यादयश्च सर्वेऽप्यक्रियावादिनः क्रियां न मन्यन्ते, क्षणिकत्वात्सर्वपदार्थानां, "क्षणिकाः सर्वसंस्काराः" इति वचनात् यत्किञ्चित्क्रियते तत्सर्वमनागतमेवोच्यत इत्यक्रियत्वं, क्रियां विना कर्मबंधोऽपि नास्ति, एवं ते अक्रियावादिन उच्यन्त इति गाथार्थः ॥ ४ ॥

## सम्मिस्स भावं सगिरा गहीए, से मुम्मुई होति अणाणुवादी ।

+ "न्यक्कारस्तु तिरस्क्रिया" इति हैमः श्लो. ४४१ । "तिरस्कारे परीभावः, परापर्यभितो भवः ॥ ६८ ॥ न्यक्कारः, सनिकारः स्यात्" इति शब्दरत्नाकरः कांड ३ । "न्यग् निम्ने नीचकारस्न्ययोः" इत्यनेकार्थः १–७ । इत्यादिप्रामाण्यतो 'न्यक्कार' एव समीचीनमाभाति, पर न ज्ञायते केन हेतुना सर्वेष्वप्यादर्शेषु 'न्यत्कार' एवोपलभ्यते ।

१२ समवसरणाऽध्ययनेऽक्रियावादिनः शाक्यादयः ।

## इमं दुपक्खं इममेगपक्खं, आहंसु छलायतणं च कम्मं ॥ ५ ॥

व्याख्या—ते लोकायतिकाः 'स्वगिरा' स्ववाचैव गृहीता [ सं]मिश्रभावं भजन्ते, एतावता स्ववाचैव बद्धाः, यस्यैव पदार्थस्यास्तित्व तस्यैव नास्तित्व प्रतिपादयन्ति, यस्यैव नास्तित्वं प्रतिपादयन्ति तस्यैवास्तित्वं प्रतिपादयन्ति, एवं मिश्रीभावं भजन्ते। यदि ते जीवादिपदार्थस्य सर्वस्याप्यभावं मन्यन्ते तर्ह्यात्मन एवाभावं प्रतिपद्यन्ते, तथा शिष्यस्य शास्त्रस्य चाभावं प्रतिपद्यन्ते। यदि सर्वशून्यता तर्हि कः कस्योपकुरुते ? सर्वाभावप्रसङ्गात्, आत्मनः शिष्याणां शास्त्रस्य चाभावो जायते। एव ते सर्वाभावप्रतिपादनात् असम्बद्धप्रलापिनः सन्तः मिश्रीभावं स्ववाचैव प्रतिपद्यन्ते। तथा सांख्या अप्यात्मनः सर्वव्यापित्वं मन्यन्ते अक्रियत्वं च, एवं साङ्ख्या अप्यसमञ्जसभाषिणः, यतस्तेऽप्यक्रियमात्मानमभ्युपगच्छन्तो बन्धमोक्षसद्भावं च स्वाभ्युपगमेनैव सम्मिश्रीभावं व्रजन्ति। यतः सांख्यानां प्रकृतिवियोगे मोक्षः, यद्येवं तदा बन्धं विना न मोक्षः, पूर्वं कर्मणां बन्धस्ततो मोक्षः, कर्मबन्धस्तु क्रिया विना न स्यात्तन्मोक्षोऽपि क्रियां विना न स्यात्। एतावता आत्माऽपि सक्रियः, एवमात्मनः सक्रियत्वं स्ववाचैव प्रतिपन्नं सांख्यैरेवं स्ववचनेनैवात्मनोऽक्रियत्वं व्यवस्थाप्य पुनर्बन्धमोक्षप्ररूपणया चात्मनि सक्रियत्वं प्रतिपन्नं, एव मिश्रीभावं सांख्यानामप्यायातम्। सर्वदर्शनिनामपि ज्ञेयमिति। एतद्वर्णिकामात्रं दर्शितमस्ति। अपरं टीकातोऽवगन्तव्यमिति। एव सर्वोऽपि परवादिसमूहः स्याद्वादिना हेतुदृष्टान्तैर्व्याकुली क्रियमाणः सन् सम्यगुत्तरं दातुमसमर्थो यत्किञ्चनभाषितया " मुम्मुई

होइ "त्ति गद्गदभाषित्वेनाव्यक्तभाषी भवति×, न किमपि वक्तुमलम् । तथा " अणाणुवाई " स्याद्वादिनोक्तं साधनमनुवदितुं शीलमस्येत्यनुवादी, तत्प्रतिषेधादननुवादी, सद्धेतुभिर्व्याकुलितमना मौनमेव प्रतिपद्यत इति भावः । यद्यपि ते परतीर्थिका जैनैः समं वक्तुं न प्रभविष्णवस्तथापि कदाग्रहग्रस्ताः स्वपक्षमेव स्थापयन्ति, तद्यथा-' इमं दुपक्खं इममेगपक्खं ' इदमस्मदभ्युपगतं दर्शनमेकपक्षं, अप्रतिपक्षतया एकान्तिकं-अविरुद्धार्थाभिधायितया निष्प्रतिबाधं पूर्वापराविरुद्धमित्यर्थः । एतद्गुरुवचः शिष्यं प्रति गुरुर्वक्ति । यद्यपि ते दर्शनिनः स्वीयं वचनं एकपक्षमिति भाषन्ते परं द्विपक्षं, द्वौ पक्षावस्येति द्विपक्षं सप्रतिपक्षमनैकान्तिकम्, [ परस्पर ] विरुद्धवचनमित्यर्थः । अथवा विरुद्धमनृतमपि निजं वचः ' अविरुद्धं तथ्यं चैतत् ' एवं प्रलापिनां एकपक्षमपि द्विपक्षतया व्यवस्थितं, उत्सूत्रप्ररूपणादिहामुत्र च विडम्बनाकारि चौरपारदारिकयोरिव, यथा ते हि करचरणनाशिकाछेदादिकामिहैव पुष्पसदृशां विडम्बनां स्वकर्मजनितामनुभवन्ति, परत्र च नरकादौ तत्फलभूतां वेदनामनुभवन्तीति, एवमन्यदपि कर्मोभयवेद्यमभ्युपगम्यते, एवमेकपक्षमपि इहामुत्र च विडम्बनाहेतुकत्वाद् द्विपक्षमित्यर्थः । तथा ते तीर्थान्तरीयाः स्याद्वादोच्छेदाय ' छलायतनं'वाक्छलं १ सामान्यछलं २ उपचारछलं ३ चेति छलत्रयं प्रयुञ्जन्ते । ' नवकम्बलो देवदत्त ' इत्यादिकं छलमाहु-रुक्तवन्तः । अथवा षट् ' आयतनानि ' उपादानकारणानि-आश्रवद्वाराणि श्रोत्रेन्द्रियादीनि यस्य कर्मणस्तत्षडायतनं कर्मेत्येवमाहुरिति गाथार्थः ॥ ५ ॥

सम्प्रतमेतद्दूषणायाह—

× " अथवा मूकादपि मूको[ मूक ]मूकः स्यात् " इति हर्ष० ।

ते एवमक्खंति अबुज्झमाणा, विरूवरूवाणि अकिरियवाई ।
जे मायइत्ता बहवे मणूसा, भमंति संसारमणवदग्गं ॥ ६ ॥

व्याख्या—ते चार्वाकबौद्धादयो ह्यक्रियावादिनः सम्यग्मार्गानभिज्ञा मिथ्यामलपटलावृतात्मानः परं आत्मानं च व्युद्ग्राहयन्तो 'विरूपरूपाणि' नानाप्रकाराणि शास्त्राणि प्ररूपयन्ति+ । कथम्भूता ? अक्रियात्मानो-ऽक्रियावादिनः, ते च परमार्थमविदन्तो यद्दर्शनमादाय-गृहीत्वा बहवो मनुष्याः संसारमनवदग्र-मपर्यवसानं भ्रमन्त्यरघट्टघटीन्यायेन पर्यटन्तीति गाथार्थः ॥ ६ ॥ अथ शून्यवादभेदं दर्शयन्नाह—

णाइच्चो उएति ण अत्थमेति, ण चंदिमा वड्ढति हायती वा ।
सलिला ण संदंति ण वंति वाया, वंझे णियते कसिणे हु लोए ॥ ७ ॥

व्याख्या—सर्वशून्यवादिनो ह्यक्रियावादिनश्च सर्वजगत्प्रत्यक्षामादित्योद्गमनादिकामेव क्रियां तावन्न मन्यन्ते-निषेधयन्तीत्यर्थः, तथाहि-आदित्यो हि सर्वजनप्रतीतो जगत्प्रदीपकल्पो दिवसादिकालविभागकारी, स एव तावन्नास्ति,

+ "तथाहि—" दानेन महाभोगश्च देहिनां सुरगतिश्च शीलेन । भावनया च विमुक्ति—स्तपसः सर्वाणि सिद्ध्यन्ति ॥ १॥" तथा 'पृथिव्यापस्तेजोवायुरिति चत्वारि सन्ति०, न कश्चिदात्मा'। तथा बौद्धः-'सर्वं क्षणिकं निरात्मकं' इत्यादीनि शास्त्राणि वदन्ति" इति दृ०।

कुतस्तस्योद्गमनमस्तमनं वा ? यच्च जाज्वल्यमानं तेजोमण्डलं दृश्यते तद् भ्रान्तमतीनां द्विचन्द्रादिप्रतिभास-मृगतृष्णिकाकल्प वर्त्तते । तथा न चन्द्रमा वर्द्धते शुक्लपक्षे नापि कृष्णपक्षे प्रतिदिनमपहीयते । तथा न सलिला-न्युदकानि 'स्यन्दन्ते' पर्वतनिर्झरेभ्यो न स्रवन्ति । तथा 'वाताः' सततगतयो न वान्ति । किं बहुनोक्तेन ? कृत्स्नोऽप्ययं लोको 'वन्ध्यो' ऽर्थशून्यो 'नियतो' निश्चितः अभावरूप इति यावत् । सर्वमिदं यदुपलभ्यते तन्मायास्वप्नेन्द्रजालकल्पमिति गाथार्थः ॥ ७ ॥

एतत् परिहर्तुकाम आह—

जहा हि अंधे सह जोतिणावि, रूवाइं णो पासति हीणणेत्ते ।
संतं पि ते एवमकिरियवाई, किरियं ण पस्संति निरुद्धपन्ना ॥ ८ ॥

व्याख्या—यथा ह्यन्धो-जात्यन्धो हीननेत्रः ज्योतिषाऽपि-प्रदीपादिना सह वर्त्तमानोऽपि रूपाणि-घटपटादीनि 'न पश्यति' नोपलभते, एवं तेऽप्यक्रियावादिनः सदपि घटपटादिकं वस्तु तत्क्रियां चास्तित्वादिकां परिस्पन्दादिकां [वा] न पश्यन्ति । किमिति ? यतो निरुद्धप्रज्ञाः-ज्ञानावरणादिना समाच्छादिता 'प्रज्ञा' ज्ञानं येषां ते तथा, तथाहि—आदित्योद्गमः सर्वान्धकारक्षयकारी कमलाकरोद्घाटनपटुः प्रत्यहं सवन्नुपलक्ष्यते, तत्क्रिया च देशाद्देशान्तरावाप्तिलक्षणा सर्वजगत्प्रतीताऽनुमीयते । तथा चन्द्रमा अपि प्रत्यहं क्षीयमाणः पुनः कलाभिवृद्ध्या प्रवर्द्धमानश्चोपलभ्यते । तथा सरितोऽपि प्रावृषि उत्कल्लोलाः वहमानाः दृश्यन्ते । वायवोऽपि वृक्षभङ्गकम्पादिभिरनुमीयन्ते । एवं च न सर्वाभावः,

१२ समवसरणाध्ययने शून्यवाद-निराकरणम् ।

( या हि )सर्वशून्यताप्ररूपणा सा तु वृथैव, सर्वाभावे कः कस्याग्रे प्रतिपादयति ? कथकोऽपि नास्ति श्रोताऽपि नास्ति । स्वप्नादिकमपि कः पश्यति ? सर्वशून्यत्वात् । तथा यः सर्वशून्यवादी तस्याप्यभावः स्यात्, तस्माद्यत्किञ्चिदेतदिति । तदेवं विद्यमानायां क्रियायां निरुद्धप्रज्ञास्तीर्थिका अक्रियावादमाश्रिताः । अनिरुद्धप्रज्ञास्तु यथावस्थितार्थवेदिनो भवन्ति, तथाहि–अवधिमनःपर्यायकेवलज्ञानिनस्त्रैलोक्योदरविवरवर्त्तिनः पदार्थान् करतलामलकन्यायेन पश्यन्ति,समस्तश्रुतज्ञानिनोऽपि आगमबलेनातीतानागतानर्थान् विदन्ति, येऽप्यन्येऽष्टाङ्गनिमित्तपारगास्तेऽपि निमित्तबलेन जीवादिपदार्थपरिच्छेदं विदधतीति गाथार्थः ॥ ८ ॥ तदेवाह—

संवच्छरं सुविणं लक्खणं च, निमित्तदेहं च उप्पाइयं च ।
अट्ठंगमेतं बहवे, अहित्ता, लोगंसि जाणंति अणागताइं ॥ ९ ॥

व्याख्या—‘संवच्छरं’ (नाम) ज्योतिषं ‘सुविणं’ स्वप्नप्रतिपादको ग्रन्थः ‘लक्षणं’ सामुद्रिकादि [‘निमित्तं’ वाक्प्रशस्तशकुनादिकं] ‘देहं’ मष तिलकादि ‘औत्पातिकं’ उल्कापातदिग्दाहनिर्घातभूमिकम्पादिकं, अष्टाङ्गनिमित्तं चाधीत्य लोके अतीतानि वस्तून्यनागतानि च जानन्ति, न च शून्यादिवादेष्वेतत् घटते, तस्माच्छून्यवादिनामक्रिया-वादिनां च युक्तयो निरर्थकाः ॥ ९ ॥

अत्राह परः–ननु श्रुतज्ञानमपि व्यभिचरति, अष्टाङ्गनिमित्तान्यपि व्यभिचारीणि, अत इदमाह—

केई निमित्ता तहिया भवंति, केसिंचि तं विप्पडिएति नाणं ।
ते विज्जभावं अणहिज्जमाणा, जाणामो लोगंसि वयंति मंदा ॥ १० ॥

व्याख्या—ज्ञानिचिन्निमित्तानि 'तथ्यानि' सत्यानि भवन्ति, केषाञ्चिन्निमित्तानां निमित्तवेदिना वा बुद्धिवैकल्यात्तथाविधक्षयोपशमाभावेन तन्निमित्तज्ञानं 'विपर्यास'व्यत्ययमेति । तथा विद्यामनधीत्यैव लोके भावान् वयं जानीम एवं 'मन्दाः' जडाः वदन्ति, न च निमित्तस्य तथ्यता । तथाहि—कस्यचित् क्षुतेऽपि गच्छतः कार्यसिद्धिदर्शनात् शुभशकुनसद्भावेऽपि कार्यविघातदर्शनात्, अतो निमित्तबलेनादेशविधायिनां मृषावाद एव केवलमिति, नैतदस्ति, न हि सम्यगधीतस्य श्रुतस्यार्थे विसंवादोऽस्ति, न हि सुविवेचितं कार्यं कारणं व्यभिचरतीति । ततश्च प्रमातुर[यम]पराधो, न प्रमाणस्य, एवं सुविवेचितं निमित्तं श्रुतमपि न व्यभिचारीति । यश्च–क्षुतेऽपि कार्यसिद्धिदर्शनेन व्यभिचारः शङ्क्यते सोऽपि वृथा, तथाहि–कार्याकूतेन क्षुतेऽपि गच्छतो या कार्यसिद्धिः सा अपान्तराले अपरशोभननिमित्तबलात्सञ्जातेत्येवमवगन्तव्यं, शोभननिमित्तेन प्रस्थितस्यापि इतरनिमित्तबलात्कार्यव्याघात इति, तदेवमन्तराऽपरनिमित्तसद्भावात्तद्व्यभिचारशङ्केति स्थितम् ॥ १० ॥

साम्प्रतं क्रियावादिमतं दुदूषयिषुस्तन्मतमाविष्कुर्वन्नाह—

ते एवमक्खंति समिच्च लोगं, तहा तहा समणा माहणा य ।
सयं कडं णऽन्नकडं च दुक्खं, आहंसु विज्जाचरणं पमोक्खं ॥ ११ ॥

व्याख्या—ये क्रियात एव मोक्षमिच्छन्ति ते एवमाख्यान्ति—"अस्ति माता पिताऽस्ति सुचीर्णस्य कर्मणः फल'मिति। किं कृत्वा त एव कथयन्ति ? क्रियात एव सर्वं सिद्ध्यतीति स्वाभिप्रायेण 'लोकं' स्थावरजङ्गमात्मकं 'समेत्य' ज्ञात्वा 'किल वयं यथावस्थितवस्तुनो ज्ञातार' इत्येवमभ्युपगम्य सर्वमस्त्येवेत्येवं सावधारणं प्रतिपादयन्ति, न कथञ्चिन्नास्तीति। कथमाख्यान्ति ? 'तथा तथा' तेन तेन प्रकारेण, यथा यथा क्रिया तथा तथा स्वर्गनरकादिकं फलमिति, ते च श्रमणा ब्राह्मणा वा क्रियात एव सिद्धिमिच्छन्ति। किल यत्किमपि संसारे दुःखं तथा सुखं तत्सर्वमात्मना कृतं, नान्येन कालेश्वरादिना, एतावता सर्वं कृतं स्यात्, नाकृतं, ततश्चैतदक्रियावादे घटते। एतावता क्रियात एव कार्यसिद्धिः, न ज्ञानेन। अत्रोच्यते—न च ज्ञानरहितायाः क्रियायाः सिद्धिः, तदुपायपरिज्ञानाभावात्। न चोपायमन्तरेणोपेयमाप्यत इति प्रतीतम्। सर्वा हि क्रिया ज्ञानवत्येव फलवती जायते। यतः—"[1] पढमं नाणं तओ दया, एवं चिट्ठइ सव्वसंजए। अन्नाणी किं काही ?, किं वा नाही ? छेयपावगं ॥ १० ॥" [ दश० अ. ४ ] इति वचनात्। इत्यतो ज्ञानस्यापि प्राधान्यम्। नापि ज्ञानादेव कार्यसिद्धिः, क्रियारहितस्य ज्ञानस्य पङ्गोरिव कार्यसिद्धेरनुपपत्तेरित्यालोच्याह—"आहंसु विज्जाचरणं पमुक्खं"ति। न ज्ञाननिरपेक्षायाः क्रियायाः सिद्धिरन्धस्येव, नापि क्रियाविकलस्य ज्ञानस्य पङ्गोरिवेत्यवगम्याहुरुक्तवन्तस्तीर्थकरगणधरादयः। कमाहुः ? मोक्षं, कथं ? विद्या च—ज्ञानं, चरणं च—क्रिया, ते द्वे अपि विद्येते कारणत्वेन यस्य [ असौ ] 'विद्याचरणो' मोक्षः, ज्ञानक्रियासाध्य इत्यर्थः। ॥ ११ ॥

१ प्रथमं ज्ञानं ततो दया एवं तिष्ठति सर्वसंयतः। अज्ञानी किं करिष्यति ? किं वा ज्ञास्यति ? छेकपापकम् ॥ १ ॥

[ ते एवमक्खंति समि(क्ख)च्च लोगं, तहा तहा समणा माहणा य ।
सयं कडं णऽन्नकडं च दुक्खं, आहंसु विज्जाचरणं पमोक्खं ॥ ११ ॥ ]

व्याख्या—इय गाथा अन्यथा व्याख्यायन्ते—अनिरुद्धप्रज्ञा—स्तीर्थकरगणधरादयः, लोकं चतुर्दशरज्ज्वात्मक 'म[मित्य]मीक्ष्य' ज्ञात्वा एवमाख्यान्तीति सम्बन्धः। 'तहा तहा' यथा यथा समाधिमार्गो व्यवस्थितस्तथा तथा कथयन्ति। किं कथयन्ति? तथा तथा—यत्किञ्चित् संसारान्तर्गतानामसुमतां यद्दुःख यच्च सुखं तत्स्वयमात्मना कृतं नान्येन केनचित्तत्कालेश्वरादिना कृतमिति। पुनस्तीर्थकर गणधरादयः किमाहुः? तदेवाह—'विद्या' ज्ञानं 'चरणं' चारित्रं, तत्प्रधानो मोक्षस्तं उक्तवन्तः, न ज्ञानक्रियाभ्यां समुदिताभ्या विना मोक्षः, एवमाख्यान्तीति गाथार्थः ॥ ११ ॥

अथैतानि समवसरणानि केन प्रणीतानि? यच्चोक्तं यच्च वक्ष्यते इत्येतदाशङ्क्याह—

ते चक्खुलोगंसिह णायगा उ, मग्गाणुसासंति हितं पयाणं ।
तहा तहा सासयमाहु लोए, जंसी पया माणव ! संपगाढा ॥ १२ ॥

व्याख्या—ते तीर्थकरगणधरादयो [इह—अस्मिन्] लोके चक्षुरिव वर्त्तन्ते, यथा चक्षुर्योग्यदेशावस्थितान् पदार्थान् परिछिनत्ति, एवं तेऽपि लोकस्य यथावस्थितपदार्थाविष्करणं कारयन्ति। तथा ते च भगवन्तोऽस्मिंल्लोके 'नायकाः' प्रधानाः सदुपदेशदानतो वा नायकाः, तथा 'मार्गं' ज्ञानक्रियादिकं मोक्षमार्गमनुशासन्ति—प्रतिपादयन्ति। प्रजानां

' हितं ' सद्गतिप्रापक-मनर्थनिवारकं । किञ्च-तथा तथा लोकं शाश्वतमाहुः, येन येन प्रकारेण द्रव्यास्तिकनयाभिप्रायेण यद्वस्तु शाश्वतं[ तत्तथा ] आहु-रुक्तवन्तः। यदिवा प्राणिगणः संसारान्तर्वर्ती यथा यथा शाश्वतो भवति तथा तथा आहुरिति। यथा यथा मिथ्यादर्शनाभिवृद्धिस्तथा तथा शाश्वतो लोकः, यथा च " महारंभयाए महापरिग्गहयाए" इत्यादिभिश्चतुष्प्रकारैर्जीवा नारकायुष्कं यावन्निवर्त्तयन्ति तावत्संसारवृद्धिः । अथवा यथा यथा रागद्वेषादिवृद्धिस्तथा तथा संसारोऽपि शाश्वत इत्याहुः । यथा यथा कर्मोपचयमात्रा तथा तथा संसाराभिवृद्धिः, दुष्टमनोवाक्कायाभिवृद्धौ च संसाराभिवृद्धिरवगन्तव्येति । यस्मिंश्च संसारे ' प्रजाः ' लोकाः हे मानव ! ' प्रगाढाः प्रकर्षेण व्यवस्थिता इति गाथार्थः ॥ १२ ॥

अथ तत्पर्यटनद्वारेणाह—

जे रक्खसा वा जमलोइया य, जे या सुरा गंधव्वा य काया ।
आगासगामी य पुढो सिया जे, पुणो पुणो विप्परियासुवेंति ॥ १३ ॥

व्याख्या—ये राक्षसात्मानो ये यमलौकिकात्मानः-सर्वे परमाधार्मिकाः, एतावता सर्वे भवनपतयो गृहीताः, ये च सुराः सौधर्मादिवैमानिकाः, च शब्दाज्ज्योतिष्काः, गान्धर्वा-विद्याधरास्तथा ' कायाः ' पृथिवीकायादयः षडपि, तथा [आकाशगामिनः-सम्प्राप्तलब्धयश्चतुर्विधा देवा विद्याधराः पक्षिणो वायवश्च, ये च] पृथिव्याश्रिताः सर्वेऽपि जीवनिकायाः

१ महारम्भतया महापरिग्रहतया ।

स्वकृतकर्मभिः पुनः पुनर्विविध-मनेकप्रकारं 'पर्यासं' परिक्षेपं-अरघट्टघटीन्यायेन परिभ्रमणं 'उप' सामीप्येन 'यान्ति' गच्छन्तीति गाथार्थः ॥ १३ ॥ किञ्च—

जमाहु ओहं सलिलं अपारगं, जाणाहि णं भवगहणं दुमोक्खं ।
जंसी विसन्ना विसयंगणाहिं, दुहओ वि लोयं अणुसंचरंति ॥ १४ ॥

व्याख्या—यं संसारमाहु-रुक्तवन्तः, के ? तीर्थंकरगणधरादयः, कीदृशमाहुः संसारं ? स्वयंभूरमणसलिलौघवदपारगं, यथा स्वयम्भूरमणसलिलौघो न केनचिज्जलचरेण लङ्घयितुं शक्यते, एवमयमपि संसारसागरः सम्यग्दर्शनमन्तरेण लङ्घयितुं न शक्यत इति 'जानीहि' अवगच्छ, णमिति वाक्यालङ्कारे, भवगहनमिदं चतुरशीतियोनिलक्षप्रमाणं 'दुर्मोक्षं' दुस्तरमस्तिवादिनामपि, किम्पुनर्नास्तिकानामिति । 'यस्मिन्' संसारगहने सावद्यानुष्ठायिनः कुमार्गपतिताः 'विषण्णा' मग्नाः विषयाङ्गनाभिर्वशीकृताः सर्वत्र सदनुष्ठाने अवसीदन्ति । ततश्च विषयाङ्गनाभिर्वशीकृताः सदनुष्ठानविमुखाः कुमार्गपतिताः 'लोकं' स्थावरजङ्गमात्मकं 'अनुसञ्चरन्ति' गच्छन्ति । यदि वा लिङ्गमात्रप्रव्रज्यया अविरत्या च स्वकर्मप्रेरिता 'लोकं' चतुर्दशरज्ज्वात्मकं 'अनुसञ्चरन्ति' पर्यटन्तीति गाथार्थः ॥ १४ ॥ किञ्च—

न कम्मुणा कम्म खवेंति बाला, अकम्मुणा कम्म खवेंति वीरा ।
मेधाविणो लोभमया वितीता, संतोसिणो नो पगरेंति पावं ॥ १५ ॥

ते णेव कुव्वंति न कारविंति, भूताहिसंकाए दुगुंछमाणा ।
सया जता विप्पणमंति धीरा, वि[न्नाय]न्नत्ति धीरा य हवंति एगे ॥ १७ ॥

व्याख्या—'ते' वीतरागाः सम्यग्ज्ञानिनः सावद्यानुष्ठानं भूतोपमर्दाभिशङ्कया पापं कर्म जुगुप्समानाः सन्तो न स्वतः कुर्वन्ति नाप्यन्येन कारयन्ति कुर्वन्तमप्यन्यं नानुमन्यन्ते । एवमन्यान्यपि महाव्रतान्यायोज्यानि । तदेवं सदा 'यताः' संयताः पापान्निवृत्ताः तथाविधं संयमानुष्ठानं प्रति प्रणमन्ति । के ? 'धीराः' महापुरुषाः, एके धीराः एवंविधं सम्यङ्मार्गं ज्ञात्वा शूराः वीराः परीषहाञ्जयन्तीति गाथार्थः ॥ १७ ॥

किं ज्ञात्वा सावद्यं न कुर्वन्तीत्याह—

डहरे य पाणे वुड्ढे य पाणे, ते आत्तओ पासाति सवलोए ।
उवेहती लोगमिणं महंतं, बुद्धप्पमत्ते सुपरिव्वएज्जा ॥ १८ ॥

व्याख्या—'डहरा' लघवः कुन्थ्वादयः सूक्ष्मा वा, ते सर्वेऽपि 'प्राणाः' प्राणिनो, ये च 'वृद्धाः' बादराः प्राणिनस्तान् सर्वानप्यात्मतुल्यान्–आत्मवत्पश्यति, सर्वस्मिन्नपि लोके यथा मम दुःखमनभिमतं एवं सर्वेषामपि प्राणिनां दुःखमप्रियं, सर्वेऽपि दुःखादुद्विजन्ति, इति मत्वा तेऽपि प्राणिनो नाक्रमितव्याः–न संघट्टनीया इत्येवं यः [ पश्यति स ] पश्यति । तथा लोकमिमं महान्तमुत्प्रेक्षते, सूक्ष्मबादरभेदैः प्राणिभिराकुलत्वान्महान्तमुत्प्रेक्षते, एवं लोकमुत्प्रेक्षमाणो 'बुद्धः'

अवगततत्त्वः सर्वाणि स्थानान्यशाश्वतानि, तथा नात्र संसारे सुखलेशोऽप्यस्तीत्येवं मन्यमानोऽप्रमत्तः सन् संयमं पालयन् परिव्रजेदिति गाथार्थः ॥ १८ ॥ किञ्च—

जे आयओ परओ वा वि णच्चा, अलमप्पणो होति अलं परेसिं ।
तं जोइभूतं व सयाऽऽवसेज्जा, जे पाउकुज्जा अणुवीइ धम्मं ॥ १९ ॥

व्याख्या—यः स्वयं सर्वज्ञ आत्मनस्त्रैलोक्योदरविवरवर्त्तिपदार्थदर्शी यथावस्थितं लोकं ज्ञात्वा, यश्च गणधरादिकः परत–स्तीर्थकरादेर्जीवादीन् पदार्थान् विदित्वा परेभ्य उपदिशति, स एवम्भूतो हेयोपादेयवेदी आत्मनः संसारात्रातुमलं, आत्मानं भवाटव्या लङ्घितुं समर्थः स्यात्, सदुपदेशदानेन परेषां च त्राता जायते, तमेवम्भूतं पदार्थप्रकाश[क]तया 'ज्योतीरूपं' चन्द्रार्कप्रदीपकल्पमात्महितमिच्छन् भवभयोद्विग्न आत्मानं धन्यं मन्यमान आ[वसेत्–] सेवेत, गुर्वन्तिक एव यावज्जीवं संवसेत् । उक्तं च–"[1]नाणस्स होइ भागी, थिरयरओ दंसणे चरित्ते य । धन्ना आवकहाई, गुरुकुलवासं न मुंचंति ॥ १ ॥" गुरुकुलवासं के न मुञ्चन्ति ? ये कर्मपरिणतिं अनुविचिन्त्य यदि वा 'धर्मं' श्रुतचारित्राख्यं श्राद्धधर्मं साधुधर्मं वा 'अनुविचिन्त्य' पर्यालोच्य, तमेव धर्मं 'प्रादुष्कुर्युः' प्रकटयेयुस्ते गुरुकुलवासं सदा आसेवन्ते, यदि-वा ज्योतिर्भूतं आचार्यं सततमासेवन्ते त एव आगमज्ञा धर्ममनुविचिन्त्य यथावस्थितं प्रादुष्कुर्युरिति गाथार्थः ॥ १९ ॥

१ ज्ञानस्य भवति भागी स्थिरतरको दर्शने चारित्रे च । धन्या यावत्कथा गुरुकुलवासं न मुञ्चन्ति ॥ १ ॥

अत्ताण जो जाणइ जो य लोगं, गइं च जो जाणइ णागइं च ।
जो सासयं जाण असासयं × च, जाई च मरणं च जणोववायं ॥ २० ॥

व्याख्या—यः आत्मानं सम्यग्जानाति, तथा यश्च लोकस्वरूपं जानाति, तथा यश्च जीवानां गतिमागतिमनागतिं च-यत्र गतः सन् वलमानो नायाति (तां सिद्धिं) इत्यादि जानाति, यश्च पदार्थानां नित्यानित्यत्वं जानाति, तथा यश्च जीवानां जन्म मरणं च जानाति, तथा यश्च देवनारकाणां उपपातोद्वर्तनां च जानाति, स एव क्रियावादी, स एवात्मज्ञ, इति द्वितीयवृत्तस्यान्ते क्रिया विज्ञेयेति गाथार्थः ॥ २०॥

अहो वि सत्ताण विउट्टणं च, जो आसवं जाणइ संवरं च ।
दुक्खं च जो जाणइ निज्जरं च, सो भासिउमरिहइ किरियवादं ॥ २१ ॥

व्याख्या—तथा यश्च [सत्त्वानां] अधो-नरकादिषु कर्मविपाकजनितां 'विकुट्टनां' शरीरादिव्यथा जानाति, तथा आश्रवं संवर च जानाति, यश्च, चकारात् पुण्यपापे जानाति, तथा जीवानां दुःखं सुखं च यो जानाति, तथा तपसा निर्जरां च यो जानाति, तथा यश्च कर्मबन्धहेतूँस्तद्विपर्यासहेतूँश्च तुल्यतया जानाति, तथा 'यावन्तः संसारहेतवस्तावन्त एव निर्वाण-हेतवः' एवं यः सम्यक् परमार्थतो जानाति, स एव क्रियावादं भाषितुमर्हति। किंविशिष्टं क्रियावादं ? अस्ति जीवः अस्ति

× पाठान्तरं "जाणतिऽसासय च" इति हर्षकुलीयदीपिकाप्रतिकृतौ ।

पुण्यमस्ति पापं चास्ति च पूर्वाचरितस्य कर्मणः फलमस्ति च कर्मनिर्जरा, इत्येवंरूपं क्रियावादं स एव भाषितुमर्हति, नापर इति । अत्र च श्लोकद्वयेन नवापि पदार्थाः सङ्गृहीता इति विस्तरार्थिना बृहद्वृत्तिरनुसरणीयेति गाथार्थः ॥ २१ ॥

साम्प्रतमध्ययनार्थमुपसञ्जिहीर्षुः सम्यग्वादफलमुपदर्शयति—

सद्देसु रूवेसु असज्जमाणो, गंधेसु रस्सेसु अदुस्समाणो ।
णो जीवितं णो मरणेऽहिकंखी, आयाणगुत्ते वलया विमुक्के त्ति बेमि ॥ २२ ॥

व्याख्या—' शब्देषु ' श्रुतिसुखदेषु ' रूपेषु ' नयनानन्दकारिषु ' सङ्गमकुर्वन् ' गार्द्ध्यमकुर्वाणस्तथा गन्धेष्वमनोज्ञेषु रसेषु च अन्तप्रान्तेषु ' अदुष्यमाणो ' द्वेषमकुर्वन् जीवित-मसंयमजीवितं नाभिकाङ्क्षेत् नापि परीषहोपसर्गैरभिद्रुतो मरणमभिकाङ्क्षेत्, जीवितमरणेऽनभिलाषी संयममनुपालयेत् । तथा ' आदाने ' संयमे ' गुप्तो ' रक्षपालः तथा ' वलया विमुक्के'ति भाववलयं-माया, तया विप्रमुक्तः संयममनुपालयेदिति: परिसमाप्त्यर्थे, ब्रवीमीति पूर्ववदिति गाथार्थः ॥ २२ ॥

इति श्रीपरमसुविहितखरतरगच्छविभूषण-श्रीमत्साधुरङ्गगणिवरगुम्फितायां श्रीसूत्रकृताङ्गदीपिकायां
समाप्तं समवसरणाख्यं द्वादशमध्ययनम् ।

## अथ त्रयोदशं याथातथ्यमध्ययनम् ।



अथानन्तरं त्रयोदशमारभ्यते याथातथ्याख्यं, तस्येयमादिगाथा—

आहातहियं तु पवेयइस्सं, नाणप्पकारं पुरिसस्स जातं ।
सओ य धम्मं असतो असीलं, संतिं असंतिं करिस्सामि पाउं ॥ १ ॥

व्याख्या—' याथातथ्यं ' तत्त्वं, तच्च परमार्थचिन्तायां सम्यग्ज्ञानादिकं-ज्ञानदर्शनचारित्ररूपं, एतत्पुरुषस्य-जन्तो र्यज्जातं-उत्पन्नं, तदहं ' प्रवेदयिष्यामि ' कथयिष्यामि । ' तु ' शब्दो विशेषणे । वितथाचारिणस्तद्दोषाँश्चाविर्भावयिष्यामि । तथा नानाप्रकारं वा विचित्रं पुरुषस्य स्वभावमुच्चावचं-प्रशस्ताप्रशस्तरूपं प्रवेदयिष्यामि । तथा ' सतः ' सत्पुरुषस्य धर्मं श्रुतचारित्राख्यं तथा ' शीलं ' उद्यतविहारित्वं, तथा शान्ति-मशेपकर्मक्षयलक्षणां प्रादुष्करिष्ये-प्रकटयिष्यामि । तथा ' असत ' अशोभनस्य परतीर्थिकस्य गृहस्थस्य पार्श्वस्थस्य वा ' अशीलं ' कुत्सितशीलं अशान्तिमनिर्वाणरूपां संसृतिं प्रादुर्भावयिष्यामीति गाथार्थः ॥ १ ॥

अहो य राओ य समुट्ठिएहिं, तहागएहिं पडिलब्भ धम्मं ।
समाहिमाघातमजोसयंता, सत्थारमेवं फरुसं वयंति ॥ २ ॥

व्याख्या—'अहोरात्र'महर्निशं सम्यगुत्थिताः–समुत्थितास्ते हि सदनुष्ठानवन्तस्तेभ्यः श्रुतधरेभ्यस्तथा [ताथा]गतेभ्यस्तीर्थकृद्भ्यो वा धर्मं संसारनिस्सरणोपायभूतं समवाप्य पुनः कर्मोदयान्मन्दभाग्यतया जमालिप्रभृतय आत्मोत्कर्षात्तीर्थकृदा-[द्या]ख्यातं सम्यग्दर्शनादिकं मोक्षमार्गं 'अजोषयन्तः' असेवन्तः–सम्यगकुर्वाणा निन्हवा बोटिकाश्च स्वरुचिविरचितव्याख्याप्रकारेण निर्दोषमपि सर्वज्ञप्रणीतं मार्गं विध्वंसयन्ति, कुमार्गं प्ररूपयन्ति। एवं भाषन्ते–असौ सर्वज्ञ एव न भवति, यः 'क्रियमाणं कृत'मिति प्रत्यक्षेण विरुद्धं प्ररूपयतीति जमालिवचः, तथा 'यः पात्रादिपरिग्रहान्मोक्षमार्गमाविर्भावयति सोऽपि न सर्वज्ञः' इत्येवं बोटिकाः प्रतिपादयन्ति, एवं सर्वज्ञोक्तमश्रद्दधाना धृतिसंहननदुर्बलतया संयमभारं वोढुमसमर्थाः कचिद्विषीदन्तोऽपरेण केनापि वत्सलतया शिक्षिताः सन्तस्तं–शास्तारं परुषं वदन्ति–कर्कशं निष्ठुरं भाषन्त इति गाथार्थः ॥ २ ॥

विसोहियं ते अणुकाहयंते, जे आयभावेण वियागरेज्जा।
अट्ठाणिए होंति बहूगुणाणं, जे नाणसंकाए मुसं वएज्जा ॥ ३ ॥

व्याख्या—कुमार्गप्ररूपणाऽपनयनद्वारेण विशोधितः सम्यग्दर्शनज्ञानचारित्राख्यो मोक्षमार्गस्तं मोक्षमार्गं 'ते' निन्हवा मिथ्यामतयः आत्मोत्कर्षात् स्वरुचिविरचितव्याख्याप्रकारेण व्यामोहिता 'आत्मभावेन' स्वाभिप्रायेण आचार्यपारम्पर्येणायातमप्यर्थं निषिद्ध्य अन्यथा व्याख्यानयन्ति। किमिति ? यतस्ते गम्भीराभिप्रायं सूत्रार्थं कर्मोदयात्पूर्वापरेण यथावत्परिणामयितुमसमर्थाः पण्डितमानिन उत्सूत्रं प्रतिपादयन्ति। आत्मभावव्याकरणं महतेऽनर्थाय। स एवम्भूतः

स्वकीयाभिनिवेशादस्थानिकोऽनाधारो बहूनां गुणानां ज्ञानादीनां अभाजनं भवति । [ क्वचित्पाठः ] " अट्ठाणिए होंति बहूणिवेस "त्ति, अस्यायमर्थः-अस्थान-मभाजनं अपात्रमसौ भवति सम्यग्ज्ञानादीनां गुणानां, किम्भूतो ? बहु-रनर्थ-सम्पादकत्वेनासदभिनिवेशो यस्य स बहुनिवेशः, यदि ना बहूनां गुणानामस्थानिको-ऽनाधारो बहूनां दोषाणां [च]' निवेशः ' स्थानं आश्रय इति । किम्भूताः ? पुनरेवं सम्भवन्तीति दर्शयति-' ये ' केचन दुर्गृहीतज्ञानलवाऽवलेपिनो ' ज्ञाने ' श्रुत-ज्ञाने शङ्का-ज्ञानशङ्का, तया मृषावादं वदेयुः, एतदुक्तं भवति-सर्वज्ञप्रणीते आगमे शङ्कां कुर्वन्ति, अयं तत् प्रणीत एव न भवेत्, अन्यथा वाऽस्यार्थः स्यात् । यदि वा ' ज्ञानशङ्कया ' पाण्डित्याभिमानेन मृषावाद वदेयुः यथाऽहं ब्रवीमि तथैव [ युज्यते ] नान्यथेति गाथार्थः ॥ ३ ॥ किञ्चान्यत्—

जे आवि पुट्ठा पलिउंचयंति, आयाणमट्ठं खलु वंचयंति ।
असाहुणो ते इह साहुमाणी, मायण्णि एसिंति अणंतघातं ॥ ४ ॥

व्याख्या—ये केचन अविदितपरमार्थाः स्वल्प[तुच्छ]तया समुत्सेकिनोऽपरेण पृष्टाः-कस्मादाचार्यात्सकाशादधीतं ? श्रुतं भवद्भिः, ते तु स्वकीयमाचार्यं ज्ञानावलेपेन निह्नुवाना अपर प्रसिद्धं प्रतिपादयन्ति, यदि वा मयैवैतत्स्वत उत्प्रेक्षित-(ज्ञात)मित्येवं ज्ञानावलेपात् 'पलिउंचयंति'त्ति निह्नुवते, निह्नवं च कुर्वाणाः 'आदानं' ज्ञानादिकं मोक्षो वा, तमर्थं [ 'खलु'र्निश्चयेन ] 'वञ्चयन्ति ' भ्रंशयन्त्यात्मनः, एवं कुर्वाणाश्च ते ' असाधवः ' परमार्थतः-साधुविचारे असाधवोऽपि

'साधुमानिनः' आत्मोत्कर्षात्सदनुष्ठानमानिनो मायान्विता 'एष्यन्ति' यास्यन्ति 'अनन्तशो' बहुशो 'घातं' विनाशं संसारं वा अनवदग्रं अनुवर्त्तयिष्यन्तीति, दोषद्वयदुष्टत्वात्तेषां, एकं तावत्स्वयं असाधवो द्वितीयं साधुमानिनः, उक्तं च—"पावं काऊण पुणो, अप्पाणं सुद्धमेव वाहरइ। दुगुणं करेइ पावं, बीयं बालस्स मंदत्तं ॥ १ ॥" तदेवमात्मोत्कर्षदोषात् बोधिलाभमप्युपहत्यानंतसंसारभाजो भवन्त्यसुमन्तः-प्राणिन इति स्थितमिति गाथार्थः ॥ ४ ॥

मानविपाकमुपदर्श्याधुना क्रोधादिदोषमुद्भावयितुमाह—

जे कोहणे होति जगट्ठभासी, विओसियं जे उ उदीरएज्जा।
अंधे व से दंडपहं गहाय, अविओसिए धासति पावकम्मी ॥ ५ ॥

व्याख्या—यः प्रकृतौ स्वभावेन क्रोधनो भवति तथा यश्च जगदर्थभाषी भवति, जगत्यर्था जगदर्थाः, ये यथा व्यवस्थिताः पदार्थाः तांस्तथैव भाषते [यः] स जगदर्थभाषीत्युच्यते। तद्यथा-'ब्राह्मणं डोडमिति ब्रूयात्' तथा 'वणिजं किराट'मिति 'शूद्रं आभीर'मिति 'श्वपाकं चाण्डाल'मिति, तथा 'काणं काण'मिति, तथा 'खंजं कुब्जं वडभं, कुष्ठिनं क्षयिण'मित्यादि, तथा यो यस्य दोषस्तं तेन खरं परुषतरं ब्रूयात् यः स जगदर्थभाषीति। अथवा जयार्थभाषी-यथैवात्मनो जयो भवति तथैव अविद्यमानमप्यर्थं भाषते, येन केनचित् प्रकारेण असत्प्ररूपणयाऽपि

१ पाप कृत्वा पुनरात्मानं शुद्धमेव व्याहरति। द्विगुण करोति पापं द्वितीयं बालस्य मन्दत्वम् ॥ १ ॥

आत्मनो जयमिच्छतीत्यर्थः । तथा ' विओसियं 'ति व्यवसितं-उपशान्तं कलहं-विवादं यः पुनरप्युदीरयेत्-प्रज्वालयेत्, किमुक्तं भवति ? कलहकारिभिर्मिथ्यादुष्कृतादिना परस्पर क्षामितेऽपि तत्तद्ब्रूयात् येन पुनरपि तेषां क्रोधोदयो भवति । साम्प्रतमेतद्विपाकं दर्शयति-यथा ह्यन्धः ' दण्डपथं ' गोदण्डं [ लघुमार्गं ] गृहीत्वा व्रजन् अज्ञानतया कण्टकश्वापदादिभिः पीड्यते, एवमसावपि केवललिङ्गधारी अनुपशान्तक्रोधः कर्कशभाषी अधिकरणोद्दीपकः अनुपशान्तद्वन्द्वः ' पापकर्मकारी ' अनार्यकर्मकर्त्ता, एते सर्वेऽपि संसारे अनन्तशः [ घृष्यन्ते- ] पीड्यन्त इति गाथार्थः ॥ ५ ॥ किञ्चान्यत्—

जे विग्गहीए अन्नायभासी, न से समे होति अझंझपत्ते ।
ओवायकारी य हिरीमणे य, एगंतदिट्ठी य अमाइरूवे ॥ ६ ॥

व्याख्या—तथा यः कश्चित् साधुर्यद्यपि प्रत्युपेक्षणादिका क्रिया करोति तथापि युद्धप्रियः कश्चि[ द्भवे ]द् [ इ ]ति, तथाऽन्याय्यभाष्य-स्थानभाषी गुर्वाद्यधिक्षेपकारी[ वा ], यश्चैवम्भूतो नासौ ' समो ' रक्तद्विष्टतया मध्यस्थो भवति, त[था] ' अझंझाप्राप्तः ' अकलहप्राप्तः, [ यदि वा ] सम्यग्दृष्टिभिः समो न भवति । अतः-अक्रोधनेन अकर्कशभाषिणा उपशान्तयु[द्धे]न नि[ष्पत]केण न्याय्यभाषिणा अझंझाप्राप्तेन मध्यस्थेन च भाव्यमिति । एवं पूर्वोक्तदोषवर्जी सन्नुपपातकारी-आचार्यनिर्देशकारी, यथोपदेशं क्रियासु प्रवृत्तः सूत्रोपदेशप्रवर्त्तको वा, तथा ह्रीमनाः, 'ह्री' लज्जासंयमो मूलोत्तरगुणभेदभिन्नः, तत्र मनो यस्य स ह्रीमनाः, [ यदि वा ] अनाचार कुर्वन् आचार्यादिभ्यो लज्जते, तथा ' एगंतदिट्ठी ' एकान्तेन तत्त्वेषु जीवादिपदार्थेषु दृष्टि-

१३ याथा-
तथ्या-
ध्ययनेऽ-
संसार-
पर्यटनमनु-
पशान्त-
कषायपु-
णाम् ।

रेकान्तदृष्टिस्तथा ' अमाइरूवे ' न गुर्वादीन् छद्मना उपचरति, नाप्यन्येन केनचित्सार्द्धं छद्मव्यवहारं विधत्ते, एवंविधेन साधुना भाव्यमिति गाथार्थः ॥ ६ ॥ पुनरपि सद्गुणोत्कीर्त्तनायाह—

से पेसले सुहुमे पुरिसजाए, जच्चन्निए चेव स उज्जुयारी ।
बहुंपि अणुसासिए जे तह(च्चे)च्चा, समे हु से होति अझंझपत्ते ॥ ७ ॥

व्याख्या—कश्चित्संसारोद्विग्नः प्रमादस्खलने गुर्वादिना [बह्वपि] अनुशास्यमानस्तथैव सन्मार्गानुसारिणी ' अर्चा ' लेश्या–चित्तवृत्तिर्यस्य भवति स तथाऽर्चः । तथा स एव ' पेशलो ' मिष्टवाक्यो विनयादिगुणसमन्वितः, तथा सूक्ष्मदर्शित्वात्सूक्ष्मभाषित्वात्सूक्ष्मः, स एव पुरुषजातः–स एव परमार्थतः पुरुषा[र्थ]कारी, तथा स एव जात्यन्वितः–सुकुलोत्पन्नः, सुशीलान्वितो हि कुलीन इत्युच्यते, न सुकुलोत्पत्तिमात्रेण, तथा स एव ' ऋजुकारी ' यथोपदेशं यः प्रवर्त्तते, न पुनर्वक्रतया गुरुवचनं प्रतिकूलयति । तथा यश्च तथार्चः पेशलः सूक्ष्मभाषी जात्यादिगुणान्वितः क्वचिदवक्रः ' समो ' मध्यस्थः, निन्दा-[यां पूजा]यां च न रुष्यति [ नापि तुष्यति ], तथा ' झंझा ' क्रोधो माया वा, तामप्राप्तः अझंझाप्राप्तः, एवंविधः साधुर्वीतरागतुल्यो भवतीति गाथार्थः ॥ ७ ॥

'प्रायस्तपस्विनां ज्ञानावलेपो भवतीत्यतस्तमधिकृत्याऽऽह—

जे आवि अप्पं वसुमंति मत्ता, संखाय वायं अपरिच्छ कुज्जा ।

तवेण वाऽहं सहिओ त्ति मंता, अण्णं जणं पासति बिंबभूयं ॥ ८ ॥

व्याख्या—यः कोऽपि तुच्छप्रकृतिरल्पतयात्मानं 'वसु' द्रव्यं, तच्च परमार्थचिन्तायां संयमस्तद्वन्तमात्मानं मत्वाऽहमेवात्र संयमवान्-मूलोत्तरगुणानां सम्यग्विधायी, नापरः कश्चिन्मत्तुल्योऽस्तीति । येन जीवादयः पदार्थाः सम्यग् परिछिद्यन्ते तज्ज्ञानं संख्येत्युच्यते, तद्वन्तमात्मानं मत्वा [सम्यक् परमार्थमपरीक्ष्य वादं-] आत्मोत्कर्षं कुर्यात् । तथा तपसा आत्मोत्कर्षं करोति, यथाऽहमेव तपस्वी, न मत्तुल्यस्तपस्वी कश्चिदस्तीति मदं करोति । अन्यं साधुजनं गृहस्थजनं वा 'बिम्बभूतं' जलचन्द्रवत्तदर्थशून्यं कूटकार्षापणवद्वा लिङ्गमात्रधारिणं पुरुषाकृतिमात्रं वा 'पश्यति' अवमन्यते साधून्, आत्मानमेव बहुमन्यते । यद्यन्मदस्थानं तत्तदात्मन्येवारोप्यापरं न किञ्चित्तया पश्यतीति गाथार्थः ॥ ८ ॥ किञ्च—

एगंतकूडेण उ से पलेति, न विज्जती मोणपयंसि गोत्ते ।
जे माणणट्ठेण विउक्कसेज्जा, वसुमन्नतरेण अबुज्झमाणे ॥ ९ ॥

व्याख्या—एवंविधः पूर्वोक्तः पुरुषः, यथा मृगादिः कूटेन बद्धः परवशः सन् एकान्तदुःखभाग्भवति, तथा सोऽपि पुरुषो भावकूटेन स्नेहमयेन बद्धः संसारे दुःखभाग् भवति, संसारचक्रवाले प्रकर्षेण लीयते-प्रलीयते, अनेकप्रकारं संसारं परिभ्रमति । एवम्भूतश्च ['मौनपदं' संयमस्तत्र] मौनीन्द्रे वा पदे-सर्वज्ञप्रणीते मार्गे नासौ विद्यते, तथा नाप्यसौ उच्चैर्गोत्रे प्रवर्त्तते, स तु नीचैर्गोत्रं प्राप्नोति, आत्मोत्कर्षवशादिति । तथा यो हि 'माननार्थेन' पूजासत्कारादिना मदं

१३ याथा-
तथ्या-
ध्ययने
त्याज्यत्वं
ज्ञानाद्य-
ष्टमदस्था-
नानाम् ।

कुर्यात्, स न सर्वज्ञप्रणीते मार्गे विद्यते, तथा 'वसु' द्रव्यं, तच्चेह संयमस्तं संयममादाय परमार्थमजानन् [अन्यतरेण] ज्ञानादिना माद्यति स पठन्नपि सर्वशास्त्राणि तदर्थं चावगच्छन्नपि सर्वज्ञमतं परमार्थतो न जानातीति गाथार्थः ॥ ९ ॥

यश्चात्मानं बहुमन्यते मदं च करोति स तु परमार्थतो अज्ञानी अत एवं करोति । अथ जातिमधिकृत्याह—

जे माहणे खत्तियजायए वा, तहुग्गपुत्ते तह लेच्छई वा ।
जे पव्वईए परदत्तभोई, गोत्ते ण जे थब्भऽभिमाणबद्धे ॥ १० ॥

व्याख्या—यो जात्या ब्राह्मणः क्षत्रियो वा उग्रपुत्रः, 'लेच्छई वा' क्षत्रियविशेष एव, एवमादि विशिष्टकुलोत्पन्नोऽपि यथावस्थितसंसारस्वरूपवेदी [यः] प्रव्रजित-स्त्यक्तराज्यादिगृहबन्धनः, परदत्तभोजी, सम्यक्संयमानुष्ठायी उच्चैर्गोत्रे हरिवंशादिके समुत्पन्नोऽपि 'स्तम्भं' गर्वं नोपयायात्, गर्वं न करोतीति भावः। किम्भूते गोत्रे जातः ? 'अभिमानबद्धे' अभिमानास्पदे। किमुक्तं भवति ? विशिष्टकुलोत्पन्नोऽपि सर्वलोकमान्योऽपि प्रव्रजितः सन् कृतशिरस्तुण्डमुण्डमुण्डनो भिक्षार्थं परगृहाण्यटन् कथं हास्यास्पदं गर्वं कुर्यात् ? नैवासौ मानं विदध्यादिति गाथार्थः ॥ १० ॥

न चासौ मानः क्रियमाणो गुणाय स्यादिति दर्शयितुमाह ।

न तस्स जाती व कुलं व ताणं, णन्नत्थ विज्जा चरणं सुचिण्णं ।
णिक्खम्म से सेवतिऽगारिकम्मं, ण से पारए होति विमोयणाए ॥ ११ ॥

व्याख्या—न तस्य जातिमदः कुलमदो वा क्रियमाणः संसारे पर्यटतस्त्राणं भवति । यत्पुनः संसारोत्तारकत्वेन त्राणसमर्थं तद्दर्शयति–ज्ञानं च चरणं च ज्ञानचरणं, तस्मादन्यत्र संसारोत्तर[णत्रा]णाशा न विद्यते । एतच्च सम्यक्त्वोपबृंहितं[सुचीर्णं] संसारादुत्तारयति "ज्ञानक्रियाभ्यां मोक्ष" इति वचनात् । यः पुनः प्रव्रज्यां गृहीत्वाऽपि 'अगारिकर्म' गृहस्थकर्मानुष्ठानं सावद्यारम्भं जातिमदादिकं वा सेवते, न चासावगारिकर्मणां सेवकोऽशेषकर्ममोचनाय पारगो भवति, निःशेषकर्मक्षयकारी न भवतीत्यर्थः । देशमोचना तु प्रायशः सर्वेषामेव प्राणिनां प्रतिक्षणमुपजायत इति गाथार्थः ॥ ११ ॥

पुनरप्यभिमानदोषं दर्शयति—

निक्किंचणे भिक्खु सुलूहजीवी, जे गारवं होति सिलोगगामी ।
आजीवमेयं तु अबुज्झमाणे, पुणो पुणो विप्परियासुवेति ॥ १२ ॥

व्याख्या—साधुर्निष्किञ्चनोऽपि 'भिक्षुः' परदत्तोपजीवी ['सुरूक्षजीवी'] अन्तप्रान्ताशनभोज्यपि यः कश्चिद्गौरवप्रियो भवति, तथा 'श्लोककामी' आत्मश्लाघाऽभिलाषी भवति, स च परमार्थमजानानः, एतदेव अकिञ्चनत्वं सुरूक्षजीवित्वं च आत्मश्लाघातत्परतया आजीविका–मात्मवर्त्तनोपायं कुर्वाणः पुनः पुनः संसारकान्तारे 'विपर्यासं' जातिजरामरणरोगशोकोपद्रवमुपैति–गच्छति । तदुत्तरणायाभ्युद्यतोऽपि तत्रैव निमज्जतीत्ययं विपर्यास इति गाथार्थः ॥ १२ ॥

जे भासवं भिक्खु सुसाहुवादी, पडिहाणवं होति विसारए य ।

आगाढपण्णे सुविभावियप्पा, अन्नं जणं पन्नया परिहवेज्जा ॥ १३ ॥

व्याख्या—तथा यः साधुर्भाषागुणदोषज्ञः, तथा सुसाधुवादी–हितमितवक्ता, प्रियंवद इत्यर्थः, क्षीराश्रवमध्वाश्रवलब्धियुक्तस्तथा 'प्रतिभा[न]वान्' बुद्धिचतुष्टययुक्तः–परेणाक्षिप्तस्तत्कालमेवोत्तरदानसमर्थः, यदिवा धर्मकथावसरे 'कोऽयं पुरुषः ? कं च देवताविशेषं प्रणतः ? कतरद्वा दर्शनमाश्रितः' इत्येवमासन्नप्रतिभतयाऽवेत्य यथायोगमुत्तरं ददाति । तथा 'विशारदो'ऽर्थग्रहणसमर्थः, चशब्दात् श्रोत्रभिप्रायज्ञः, तथा 'आगाढप्रज्ञः' परमार्थपर्यवसितबुद्धिः–तत्त्वार्थवेदी, तथा 'सुविभावितात्मा' सुधर्मवासनावासितः, एवंविधगुणान्वितः शोभनः साधुर्भवति । यश्चामीभिर्गुणैर्निर्जराहेतुभूतैर्युक्तोऽपि यदि मदं कुर्यात्तदाऽन्येषां का वार्त्ता ? । कथं मदं करोति ? तद्यथा–यथाऽहमेव भाषाविधिज्ञस्तथा साधुवाद्यहमेव, न मत्तुल्यः प्रतिभा[न]वानस्ति । नापि च मत्समानो लौकिकलोकोत्तरशास्त्रार्थविशारदो अवगाढप्रज्ञः, सुभावितात्माऽहमेवेति चैवमात्मोत्कर्षवानपरं जनं स्वकीयया प्रज्ञया 'परिभवेत्' अवहीलयति । तथाहि–किमनेन वाकुण्ठेन दुर्दुरूढेन कुण्डिकाकार्पासकल्पेन ? नाऽसौ साधुवर्ग्गः किमपि वेत्ति, वयमेव भगवदाज्ञावर्त्तिनः क्रमागता बहुश्रुता वा इत्यादिवाग्विलासेन साधूनामवर्णवादेनात्मोत्कर्षपराः क्वचित्सभायां धर्मकथावसरे वा भवन्ति । तथा चोक्तं "अन्यैः स्वेच्छारचिता–नर्थविशेषान् क्र[श्र]मेण विज्ञाय । कृत्स्नं वाङ्मयमित इति, खादत्यङ्गानि दर्पेण ॥ १ ॥" ॥ १३ ॥

साम्प्रतमेतद्दोषाभिधित्सयाऽऽह—

व्याख्या—न त्र

मृतार्चः, तथा 'दृष्टधर्म्मा' अवगतयथावस्थितधर्म्मस्वरूपः, एवंविधो भिक्षुः कचिदवसरे ग्रामनगरादिषु भिक्षाऽर्थं प्रविश्य एषणामनेषणां च जानन् अन्नस्य पानकस्य वा कृते, तत्र 'अ[नतु]गृद्धो'ऽलोलुपः सन् सम्यग्विहरेत्। आहारादावमूर्च्छितः सम्यक् शुद्धां भिक्षां गृह्णीयादिति गाथार्थः ॥ १७ ॥

एवंविधस्य साधोः कदाचित्संयमे रतिररतिश्च प्रादुष्ष्यात्, सा चापनेतव्येत्येतदाह—

अरइं रइं च अभिभूय भिक्खू, बहूजणे वा तह एगचारी ।
एगंतमोणेण वियागरेज्जा, एगस्स जंतो गतिरागती य ॥ १८ ॥

व्याख्या—महामुनेरप्यस्नानतया मलाविलस्यान्तप्रान्तवल्लचणकादिभोजिनः कदाचित्कर्मोदयादरतिः संयमे समुत्पद्येत, तां चारतिमुत्पन्नामभिभवेत्-निराकुर्यात्, तथा रतिं चासंयमे अनादिभवाभ्यासादुत्पन्नां चाभिभवेत्, अभिभूय च संयमोद्युक्तो भवेत्। पुनः साधुमेव विशिनष्टि-बहवो 'जनाः' साधवो गच्छवासितया संयमसहाया यस्य स बहुजनः, तथा एक एव चर[ती]ति-एकचारी, स च बहुजन एकाकी वा केनचित्पृष्टोऽपृष्टो वा 'एकान्तमौनेन' संयमेन 'व्यागृणीयात्' धर्मकथाऽवसरे संयमाबाधया किञ्चिद्धर्मसम्बद्धं ब्रूयात्। किमसौ ब्रूयादित्याह-एकस्य जन्तोः शुभाशुभसहायस्य 'गतिः' परलोके गमनं भवति, तथा आगति-रागमन भावान्तरादुपजायते शुभाशुभकर्मसहायस्य, यतः-" एकः प्रकुरुते कर्म, भुनक्त्येकश्च तत् फलम्। जायते म्रियते चैक, एको याति भवान्तरम् ॥ १ ॥" इत्यादि। ततः संसारे परमार्थतो

न कश्चित्सहायो धर्ममेकं विहाय, एतद्विगणय्य संयम[स्तेन तत् ]प्रधानं वा ब्रूयादिति गाथार्थः ॥ १८ ॥ किञ्च—

सयं समिच्चा अदुवा वि सोच्चा, भासेज्ज धम्मं हितयं पयाणं ।
जे गरहिया सणियाणप्पओगा, ण ताणि सेवंति सुधीरधम्मा ॥ १९ ॥

व्याख्या—'स्वयं' आत्मना परोपदेशमन्तरेण संसारकारणानि मिथ्यात्वाविरतिप्रमादकषाययोगरूपाणि 'समेत्य' ज्ञात्वा तथा मोक्षं तत्कारणानि च सम्यग्ज्ञानदर्शनचारित्राणि, एतत्सर्वं स्वत एव ज्ञात्वा अन्यस्माद्वाऽऽचार्यादेः सकाशाच्छ्रुत्वा अन्यस्मै मुमुक्षवे धर्मं भाषेत । किम्भूतं ? 'प्रजाना' स्थावरजङ्गमानां जन्तूनां हितं धर्मं ब्रूयादिति उपादेयं प्रदर्श्य हेयं प्रदर्शयति-ये 'गर्हिता' जुगुप्सिता मिथ्यात्वादयः कर्मबन्धहेतवः, सनिदानाः 'प्रयोगा' व्यापारा ममास्मात्सकाशात् किञ्चित्पूजालाभसत्कारादिकं भविष्यतीत्येवम्भूतनिदानाशंसारूपास्तांश्च चारित्रविघ्नभूतान् महर्षयः सुधीरधर्माणो 'न सेवन्ते' नानुतिष्ठन्ति, न वदन्तीति गाथार्थः ॥ १९ ॥ किञ्च—

केसिंचि तक्काइ अबुज्झ भावं, खुद्दंपि गच्छेज्ज असद्दहाणे ।
आउस्स कालाइयारं वघाए, लद्धाणुमाणे य परस्स अट्ठे ॥ २० ॥

व्याख्या—केषांचिन्मिथ्यादृष्टीनां कुतीर्थिकभावितानां 'तर्कया' वितर्केण दुष्टाभिप्रायं अबुद्ध्वा कश्चित्साधुः श्रावको वा स्वधर्मस्थापनेच्छया कुतीर्थिकतिरस्कारप्रायं वचो ब्रूयात्, [ स च ] तीर्थिकस्तद्वचनमश्रद्दधानोऽतिकटुकत्वं भावयन्

'क्षुद्रत्वमपि गच्छेत्' विरूपमपि कुर्यात्, पालकपुरोहितवत् स्कन्दकाचार्यस्येति । ततः स निन्दावचनकुपितो वक्तु+रायुपो व्याघातं कालातिचारं-दीर्घस्थितिकमप्यायुस्संवर्त्तयेत् । धर्मदेशना हि पुरुषविशेषं ज्ञात्वा विधेया, तद्यथा-कोऽयं पुरुषो राजादिकः, कं च देवताविशेषं नतः, कतरद्वा दर्शनमाश्रित इति सम्यग्भावं परिज्ञाय यथायोग्यं देशना विधेया । यः पुनरेत-दबुद्ध्वा धर्मदेशनाद्वारेण परविरोधकृद्वचो ब्रूयात् स तस्मान्मरणादिकमपकारं प्राप्नुयात् । यत एवं ततो लब्धानुमानः-पराभिप्राय ज्ञात्वा यथायोगमर्थान्-सद्धर्मप्ररूपणादिकान् भावान् स्वपरोपकाराय वदेदिति गाथार्थः ॥ २० ॥

कम्मं च छंदं च विगिंच धीरे, विणएज्ज उ सव्वतो आय(पाव)भावं × ।
रूवेहिं लुप्पंति भयावहेहिं, विज्जं गहाय तसथावरेहिं ॥ २१ ॥

व्याख्या—'धीरः' अक्षोभ्यो धर्मकथाश्रोतुः देशनावसरे 'कर्म' अनुष्ठानं गुरुलघुकर्मभावं [ वा ], छन्द-मभिप्रायं च श्रोतुर्जानीयात् । असौ धर्मश्रोता किं गुरुकर्मा लघुकर्मा वा इत्याद्यालोच्य धर्मकथिको धर्मदेशनां कुर्यात् । यथा च तस्य श्रोतुर्जीवादिपदार्थावगमो भवति, यथा च मनसि न दूयते, अपि तु प्रसन्नतां व्रजेत्तथा वाच्यं, एवं च धर्मोपदेशं यच्छन् विशेषेण अपनयेत्पर्षदः 'पापभावं' अशुद्धमन्तःकरणं विशिष्टगुणारोपणं च कुर्यात् । [क्वचित्पाठ] 'आयभावं'

+ जिनधर्मभापकस्य । × 'पावभाव'मिति स्वाभाविकत्वेन 'आयभाव'मिति तु पाठान्तरत्वेन स्वीकृतो वृत्तिकृत्पूज्यैरपि । तथा "आतभावं-आतभावो णाम मिथ्यात्व अविरतो वा" इति चूर्णिकाराः ।

१२ याथातथ्याध्ययने श्रोत्रनुरूपदेशनायाः कर्त्तव्यत्वम्

ति [ तत्र ] आत्मभावोऽनादिभवाभ्यस्तो मिथ्यात्वादिकस्तमपनयेत् । यदिवा 'आत्मभावो' विषयगृध्नुता, तामपनयेदिति । एतद्दर्शयति—'रूवेहिं लुप्पंति भयावहेहिं' रूपै-र्नयनमनोहारिभिः स्त्रीणामङ्गप्रत्यङ्गकटाक्षनिरीक्षणादिभिरल्पसत्त्वा 'विलुप्यन्ते' सद्धर्माच्च्याव्यन्ते, रूपैः कथम्भूतैः' ! 'भयावहैः' भयानकैः, इहैव तावद्रूपादिविषयासक्तस्य साधुजनजुगुप्सा, नानाविधा विडम्बनाश्च प्रादुर्भवन्ति इहलोके, परलोके च बहुविधा वेदनाः विषयासक्ता अनुभवन्ति । एवं विद्वान्-पण्डितो धर्मदेशनाचतुरो पराभिप्रायं सम्यग्गृहीत्वा पर्षदनुसारेण त्रसस्थावरेभ्यो हितं धर्ममाविर्भावयेदिति गाथार्थः ॥ २१ ॥

पूजासत्कारादिनिरपेक्षेण च सर्वं तपश्चरणादिकं विधेयं विशेषतो धर्मदेशनेत्येतदभिप्रायवानाह—

न पूयणं चेव सिलोयकामी, पियमप्पियं कस्सइ णो करिज्जा ।
सव्वे अणट्ठे परिवज्जयंते, अणाउले या अकसाइ भिक्खू ॥ २२ ॥

व्याख्या—साधुर्धर्मदेशनां कुर्वन् 'पूजनं' वस्त्रादिलाभरूप न वाँछेन्नापि 'श्लोकं' कीर्त्ति-प्रशंसामभिलपेत् । तथा श्रोतुः प्रियं ( राजकथादिकं ) अप्रियं च न कथयेत्-तत्समाश्रितदेवताविशेषं न निन्देत् । रागद्वेषरहितः श्रोतुरभिप्रायं समीक्ष्य यथावस्थितं धर्मं सम्यग्दर्शनादिरूपं कथयेत् । उपसंहारमाह-सर्वाननर्थान् पूजासत्कारलाभाभिप्रायेण स्वकृतान् परदूषणतया च परकृतान् परिहरन् कथयेदनाकुलः, अकषायी भिक्षुर्भवेदिति गाथार्थः ॥ २२ ॥

सर्वाध्ययनोपसंहारार्थमाह—

आहत्तहीयं समुपेहमाणे, सव्वेहिं पाणेहिं निहाय दंडं ।
नो जीवियं नो मरणाहिकंखी, परिव्वएज्जा वलया विमुक्के त्ति बेमि ॥ २३ ॥

व्याख्या—'याथातथ्यं' धर्म्ममार्ग्गं सूत्रानुगतं सम्यक् 'प्रेक्षमाणः' पर्यालोचयन् 'सर्वेषु' स्थावरजङ्गमेषु प्राणिषु दण्डं प्राणिवधात्मकं परित्यज्य प्राणात्ययेऽपि याथातथ्यं धर्मं नोल्लंघयेत् । तथा 'जीवितं' असंयमजीवितं जन्तुदण्डेन नाभिकाङ्क्षेत् । परीषहपराजितो वेदनासमुद्घातगतोऽपि तद्वेदनामसहमानो जलानलादिना जन्तुघातेन न मरणमभिकाङ्क्षेत् । तदेवं सर्वेष्वपि प्राणिषूपरतदण्डो जीवितमरणापेक्षारहितः संयमानुष्ठानं चरे–दुद्युक्तविहारी भवेत् । मेधावी 'वलयेन' मायारूपेण मोहनीयकर्मणा वा विप्रमुक्त इति, इतिः परिसमाप्त्यर्थे, ब्रवीमीति पूर्ववत् ॥ २३ ॥

इति श्रीपरमसुनिहितखरतरगच्छविभूषणश्रीमत्साधुरङ्गसङ्कलितायां श्रीसूत्रकृताभिधद्वितीयाङ्गदीपिकायां समाप्तं याथातथ्याध्ययनं त्रयोदशमिति ॥

## अथ चतुर्दशं ग्रन्थाभिधमध्ययनम् ।

उक्तं त्रयोदशमध्ययनं, साम्प्रतं चतुर्दशमारभ्यते ग्रन्थाख्यं, बाह्यग्रन्थपरित्यागाद्याथातथ्यं स्यात्, अत( स्तद् )-एवाह, तत्रेयमादिगाथा—

गंथं विहाय इह सिक्खमाणे, उट्ठाय सुबंभचेरं वसेज्जा ।
ओवायकारी विणयं सुसिक्खे, जे छेए विप्पमायं न कुज्जा ॥ १ ॥

व्याख्या—' इह ' प्रवचने ज्ञातसंसारस्वभावः साधुः सम्यगुत्थानेन उत्थितो ' ग्रन्थं ' परिग्रहं धनधान्यहिरण्य-द्विपदचतुष्पदादिरूपं त्यक्त्वा ग्रहणासेवनारूपां च शिक्षां कुर्वाणः सम्यगासेवमानो नवभिर्ब्रह्मचर्यगुप्तिभिर्गुप्तः [सु]ब्रह्मचर्यं वसे-त्तिष्ठेत्, यदिवा [ ब्रह्मचर्यं- ] संयमस्तमावसेत्-तं सम्यक्कुर्यात् । गुर्वन्तिके यावज्जीवं वसमानो यावदभ्युद्यतविहारं न प्रतिपद्यते तावदाचार्यवचनस्य ' अवपातकारी ' गुरोरादेशकारी विनयं सुष्ठु शिक्षे-द्विदध्यात् । तथा यश्छेको-निपुणः स संयमानुष्ठाने सदाचार्योपदेशे वा विविधं प्रमादं न कुर्यादिति गाथार्थः ॥ १ ॥

जहा दियापोतमपत्तजायं, सावासगा पविउं मन्नमाणं ।
तमचाइयं तरुणमपत्तजायं, ढंकाइ अव्वत्तगमं हरेज्जा ॥ २ ॥

व्याख्या—यः पुनर्गुरूपदेशमन्तरेण स्वच्छन्दतया गच्छान्निर्गत्य एकाकिविहारितां प्रतिपद्यते स बहुदोषभाग् भवतीति । अस्यार्थस्य दृष्टान्तमाविर्भावयन्नाह–' जहा दिया( पोतं ) ' यथा ' द्विजपोतः ' पक्षिशिशुरपत्रजातः–अजातपक्षस्तं ' स्वावासकात् ' स्वनीडात् ' उत्प्लवितुं ' उत्पतितुकामं [ तत्र ] तत्र पतन्तमुपलभ्य पक्षाभावाद्गन्तुमसमर्थं ( तथा ' तरुणं' नूतनं ' अपत्रजातं ' अनुद्भूतपक्षं तं ) ढङ्ककङ्कादयः क्षुद्रसत्त्वाः पिशिताशिनः ' अव्यक्तगमं ' गमनाभावे नंष्टुमसमर्थं हरेयुः–चञ्चवादिनोत्क्षिप्य नयेयु–र्विनाशयेयुरिति गाथार्थः ॥ २ ॥ एवं दृष्टान्तं प्रदर्श्य दार्ष्टान्तिकमाह—

एवं तु सेहंपि अपुट्ठधम्मं, निस्सारियं वुसिमं मन्नमाणा ।
दियस्स छावं व अपत्तजायं, हरिंसु णं पावधम्मा अणेगे ॥ ३ ॥

व्याख्या—यथा तं अव्यक्तं पक्षिशिशुं ढङ्कादयः क्षुद्रपक्षिणो विनाशयन्ति तथा अगीतार्थं शिष्यं गच्छवासान्निर्गतं अनेके क्षुद्राः पाखण्डिनो विप्रतार्य संयमजीवितव्याद्भ्रंशयन्ति, ते कीदृशाः पाखण्डिनः ?, तं अगीतार्थशिष्यं ' वुसिमं मन्नमाणा ' आत्मवशगं मन्वाना–आत्मवशे पतितमिति मत्वा पक्षरहितं पक्षिणो बालकमिव ते पापधर्माणो × हरन्तीति गाथार्थः ॥ ३ ॥

एवमेकाकिनः साधोर्यतो बहवो दोषाः प्रादुर्भवन्ति अतः सदा गुरुपादमूले स्थातव्यमित्येतद्दर्शयितुमाह—

ओसाणमिच्छे मणुए समाहिं, अणोसिते णंऽतकरोति णच्चा ।

× " कुतीर्थिकाः स्वजनराजादयो वा अनेके हृतवन्तो हरन्ति हरिष्यन्ति चेति कालत्रयोपलक्षणार्थं भूतनिर्देशः " इति हर्ष० ।

ओभासमाणे दवियस्स वित्तं, ण णिक्कसे बहिया आसुपन्ने ॥ ४ ॥

व्याख्या—'अवसानं' गुरोरन्तिकेऽवस्थानं, तद्यावज्जीवमिच्छे-दभिलषेत् 'मनुजो' मनुष्यः साधुरित्यर्थः । स एव तत्त्वतो मनुष्यो यो यथाप्रतिज्ञातं निर्वाहयति, तच्च सदा गुरोरन्तिके व्यवस्थितेन निर्वाह्यते इत्येतद्दर्शयति-गुरोरन्तिके 'अनुपिता' अव्यवस्थितः-स्वच्छन्दविधायी यथाप्रतिज्ञातस्य नान्तकरो भवति, न यथाप्रतिज्ञातं निर्वाहयितुं समर्थः स्यान्नापि संसारस्यान्तं करोतीति ज्ञात्वा सदा गुरुकुलवासोऽनुसरणीयः, गुरुकुलवासं विना शिक्षितमपि विज्ञानमुपहासाय स्याद्, यतः "नहि भवति निर्विगोपक-मनुपासितगुरुकुलस्य विज्ञानं । प्रकटितपश्चाद्भागं, पश्यत नृत्यं मयूरस्य ॥ १ ॥" एवं ज्ञात्वा गुरुकुलवासे स्थातव्यमिति दर्शयति-'ओभासमाणे दवियस्स वित्तं' 'अवभासयन्' उद्भासयन्-सम्यगनुतिष्ठन् 'द्रव्य(द्रविक)स्य' मुक्तिगमनयोग्यस्य साधोः सर्वज्ञस्य वा 'वृत्तं' अनुष्ठानं, तत्सदनुष्ठानतोऽवभासयेत्-धर्मकथिकः [कथनतो वोद्भासयेदिति]। तदेवं गुरुकुलवासो बहूनां गुणानामाधारः, अतो न निर्गच्छेद् गच्छात्-स्वेच्छचारी न भवेदाशुप्रज्ञ इति गाथार्थः ॥ ४ ॥

जे ठाणओ य सयणासणे य, परक्कमे यावि सुसाहुजुत्ते ।
समितीसु गुत्तीसु य आसु[आय]पन्ने, वियागरंते य पुढो वदेज्जा ॥ ५ ॥

व्याख्या—यो हि वैराग्यात् प्रव्रजितः साधुः, स 'स्थाने' कायोत्सर्गादौ शयने आसने गमने च 'पराक्रमं कुर्वन्'

बलं स्फोरयन् साधुगुणैर्युक्तो भवति । साधुर्हि यत्र स्थानं कायोत्सर्गादिकं विधत्ते तत्र सम्यक् प्रत्युपेक्षणादिकां क्रियां करोति, कायोत्सर्गं च मेरुरिव निष्प्रकंपो विधत्ते, तथा शयनं च कुर्वन् संस्तारकं भुवं काय च प्रत्युपेक्ष्य उचितकाले गुर्वनुज्ञातः स्वपेत्, तत्रापि जाग्रदिव नात्यन्तं निस्सह इति, एवमासनादिष्वपि योज्यम् । तदेवमादिसुसाधुक्रियायुक्तो गुरुकुलवासी साधुर्भवतीति स्थितम् । अपि च–गुरुकुलवासे निवसन् पञ्चसमितिसमितः त्रिगुप्तिगुप्तः 'आशु[आगत]प्रज्ञः' सञ्जात-[कर्त्तव्या]कर्त्तव्यविवेकः [ स्वतो भवति ] परस्यापि च व्याकुर्वन् समितिगुप्तीनां यथावस्थितस्वरूपप्रतिपालनं तत्फलं च [ पृथक्-पृथग् ] वदेत्–प्रतिपादयेदिति गाथार्थः ॥ ५ ॥

सद्दाणि सोच्चा अदु भेरवाणि, अणासवे तेसु परिव्वएज्जा ।
निद्दं च भिक्खू न पमाय कुज्जा, कहंकहंची वितिगिच्छतिन्ने ॥ ६ ॥

व्याख्या—शब्दान् श्रुतिमधुरान् श्रुत्वा अथवा 'भैरवान्' कर्णकटुकान् श्रुत्वा ('तेषु' अनुकूलप्रतिकूलशब्देषु) 'अनाश्रवो' रागद्वेषरहितो भूत्वा 'परि' समन्ताद्व्रजेत्–संयमानुष्ठायी भवेत् । तथा निद्रां च प्रमादं च स साधुर्न कुर्यात् । एवं निषिद्धसर्वप्रमादः सन् गुरोरन्तिके [ कथङ्कथमपि ] विचिकित्सां चित्तविप्लुतिरूपां 'वितीर्णो'ऽतिक्रान्तो भवति । [ यदिवा मद्गृहीतोऽयं पञ्चमहाव्रतभारोऽतिदुर्वहः ] कथङ्कथमप्यन्तं गच्छेत् ? इत्येवम्भूतां 'विचिकित्सां' चित्तविप्लुतिं गुरुप्रसादात्तीर्णो भवति । अन्येषामपि तदपनयनसमर्थः स्यादिति गाथार्थः ॥ ६ ॥ किञ्च—

डहरेण वुड्ढेणऽणुसासितो उ, रायणिएणा वि समवएणं।
सम्मं तयं थिरतो णाभिगच्छे, णिज्जंतए वावि अपारए से ॥ ७ ॥

व्याख्या—स साधुः गुरुसमीपे वसन् कचित्प्रमादस्खलितः सन् केनापि क्षुल्लकेन प्रमादाचरणं प्रति निषिद्धस्तथा 'वृद्धेन वा' [ वयोऽधिकेन ] श्रुताधिकेन वा 'अनुशासितो'ऽभिहितो रत्नाधिकेन समवयसा वा अनुशासितः कुप्यति, यथाऽहमनेन द्रमकप्रायेणोत्तमकुलप्रसूतः सर्वजनसम्मत एवं लोकसमक्षं शिक्षित, इत्येवमनुशास्यमानो न मिथ्यादुष्कृतं ददाति नापि तदनुशासनं सम्यक्स्थिरतो वाऽपुनःकरणतयाऽभिगच्छेत्—न प्रतिपद्येत, सम्यक् अप्रतिपद्यमानश्चासौ संसारस्रोतसा 'नीयमान' उह्यमानोऽनुशास्यमानः कुपितोऽसौ न संसारार्णवपारगो भवति किन्त्वपारग एव भवतीति गाथार्थः ॥ ७ ॥

विउट्ठिएणं समयाणुसिट्ठे, डहरेण वुड्ढेण उ चोइए य ।
अब्भुट्ठियाए घडदासिए वा, अगारिणं वा समयाणुसिट्ठे ॥ ८ ॥

व्याख्या—विरुद्धोत्थानेनोत्थितं असम्यक्चारिणं साधुं दृष्ट्वा कश्चित् परतीर्थिको गृहस्थो वा स्वसमयेन शिक्षयेत्, यथा—नैवंविधमनुष्ठानं भवतामागमे व्यवस्थितं कथं त्वमेवंविधाचरणं कुरुष ? अथवा केनापि साधुना अर्हत्प्रणीतागमानुसारेण मूलोत्तरगुणाऽऽचरणे स्खलितः सन् आगमं प्रदर्श्य अभिहितः, यथा—नैतत्त्वरितगमनादिकं भवतामनुज्ञातं,

इत्यादि 'डहरेण' लघुतरेण वृद्धेन वा कुत्सिताचारप्रवृत्तः साधुः शिक्षितः, (दासीत्वेनात्यन्तमुत्थिता या दासी, तया) दास्या 'घटदास्यां' जलवाहिन्या वा शिक्षितो न क्रोधं कुर्यात् । 'अगारिणं' गृहस्थानामप्येतन्न युज्यते कर्त्तुम् । ततः स साधुर्ममैवैतद्धितकारी ब्रूते इत्येवं मन्यमानो मनागपि न कोपं कुर्यादिति गाथार्थः ॥ ८ ॥ एतदेवाह—

ण तेसु कुज्झे ण य पव्वहेज्जा, नयावि किंची फरुसं वएज्जा ।
तहा करिस्संति पडिसुणेज्जा, सेयं खु मेयं ण पमाय कुज्जा ॥ ९ ॥

व्याख्या—एवं साधुः शिक्षितः सन्न कुप्येत् न च तं प्रव्यथेत्-न च तं दण्डादिप्रहारेण पीडयेन्न चापि किञ्चित्परुषं वचो वदेत् । तमेवं वदति-भवताऽहं सुष्ठु शिक्षितः, भवदुक्तमेव करिष्यामीत्येवं मध्यस्थवृत्त्या प्रतिशृणुया-दनुतिष्ठेत्, मिथ्यादुष्कृतादिना निवर्त्तेत, एतच्छिक्षादान ममैव श्रेयो । यत एतद्भयात् कश्चि[त्कचि]त्पुनः प्रमादं न कुर्यान्नैव असदाचरणमनुतिष्ठेदिति गाथार्थः ॥ ९ ॥

वणंसि मूढस्स जहा अमूढा, मग्गाणुसासंति हितं पयाणं ।
तेणेव मज्झं इणमेव सेयं, जं मे बुहा समणुसासयंति ॥ १० ॥

व्याख्या—यथा 'वने' अरण्ये दिग्भ्रमेण कस्यचिन्मूढस्य-मार्ग्गभ्रष्टस्य यथा केचिदन्ये 'अमूढाः' सदसन्मार्ग्गज्ञाः प्रजानां हित-मीप्सितस्थानप्रापकं मार्ग्गं 'अनुशासन्ति' दर्शयन्ति । स च तैर्विवेकिभिः सन्मार्ग्गावतारणतोऽनुशासित

आत्मनः श्रेयो मन्यते। यदेतद्बुधाः सम्यगनुशासयन्ति। पुत्रमिव पितरः। तन्ममैव श्रेय इति मन्तव्यमिति गाथार्थः ॥१०॥

अह तेण मूढेण अमूढगस्स, कायव्व पूया सविसेसजुत्ता ।
एओवमं तत्थ उदाहु वीरे, अणुगम्म अत्थं उवणेति सम्मं ॥ ११ ॥

व्याख्या—अथानन्तरं यथा तेन दिङ्मूढेन सन्मार्गावतारिते तस्यामूढस्य–सन्मार्गोपदेशकस्य पुलिन्दादेरपि परममुपकारं मन्यमानेन पूजा विशेषयुक्ता कर्त्तव्या, एषोपमा श्रीमहावीरदेवेनोदाहृता, इत्य(र्थम)वगम्य सम्यक् प्रकारेण + यदहमनेन पुरुषेण मिथ्यात्ववनगहनात्सदुपदेशेन दुःखान्निस्तारितः, अतोऽस्य सन्मार्गोपदेशकस्य भक्तिः–पूजा विशेषतः कर्त्तव्येति गाथार्थः ॥ ११ ॥

णेता जहा अंधकारंसि राओ, मग्गं ण जाणाति अपस्समाणे ।
से सूरिअस्स अब्भुग्गमेणं, मग्गं वियाणाति पगासियंसि ॥ १२ ॥

व्याख्या—यथा 'नेता' नायकोऽटव्यां बहुलान्धकारायां रात्रौ 'मार्ग' पन्थानं न सम्यग्जानाति, स एव प्रणेता सूर्यस्याभ्युद्गमेनाऽपनीते तमसि जाते प्रकाशे मार्गं जानाति, विवक्षितपुरप्रापकं पन्थानं सम्यग्वेत्ति। गुणदोषविचारणतः सम्यगूजानातीति गाथार्थः ॥ १२ ॥

+ "आत्मनि उपनयति परमोपकारं" इति हर्ष० ।

एवं तु सेहेवि अपुट्ठधम्मे, धम्मं न जाणाति अबुज्झमाणे ।
से कोविए जिणवयणेण पच्छा, सूरोदये पासति चक्खुणेव ॥ १३ ॥

व्याख्या—एवं शिष्योऽप्यपुष्टधर्मा–अगीतार्थः अभिनवप्रव्रजितो [ सूत्रार्थानभिज्ञत्वादबुध्यमानो ] धर्मं न जानाति, स एव पश्चात्सूर्योदये यथा निर्मलचक्षुः सर्वं पश्यति तथा शिष्योऽपि गुरुकुलवासात् जिनवचनेन 'कोविदो'ऽभ्यस्त-सर्वज्ञप्रणीतागमत्वान्निपुणः सन् सर्वान् जीवादीन् पदार्थान् पश्यतीति गाथार्थः ॥ १३ ॥

कदाचिच्चक्षुषाऽन्यथाभूतोऽप्य[र्थोऽ]न्यथा परिछिद्यते, तद्यथा–मरुमरीचिकानिचयो जलभ्रान्त्या, किंशुकनिचयोऽन्याकारेणापीति । न च सर्वज्ञप्रणीतागमस्य क्वचिदपि व्यभिचारः, तद्व्यभिचारेण हि सर्वज्ञत्वहानिप्रसङ्गात्, +तत्सम्भवस्य चासर्वज्ञत्वेन प्रतिषेद्धुमशक्यत्वादिति । शिक्षको हि गुरुकुलवासितया जिनवचनाभिज्ञो भवति, तत् कोविदश्च सम्यङ्मूलोत्तरगुणान् जानाति, तत्र मूलगुणानधिकृत्याह—

उड्ढं अहेयं तिरियं दिसासु, तसा य जे थावर जे य पाणा ।
सदा जए तेसु परिव्वएज्जा, मणप्पओसं अविकंपमाणे ॥ १४ ॥

व्याख्या—ऊर्ध्वमधस्तिर्यग् दिक्षु विदिक्षु च ये त्रसाः स्थावराः प्राणिनस्तेषु [ सदा ] 'यतः' यत्नं कुर्वन्

+ सर्वज्ञप्रणीतागमोक्तपदार्थसम्भवस्य सर्वज्ञसम्भवस्येति वा ।

संयमानुष्ठायी परिव्रजेत्-संयमं पालयेत् । तेषु प्राणिषु-अपकारिषु मनसापि प्रद्वेषं न गच्छेत्, आस्तां तावद्दुर्वचनदण्डप्रहारादिकं, मनसापि न विरूपकं चिन्तयेत् । 'अविकम्पमानः' संयमादविचलन् सदाचारमनुपालयेदिति गाथार्थः ॥ १४ ॥

कालेण पुच्छे समियं पयासु, आइक्खमाणे दवियस्स वित्तं ।
तं सोयकारी य पुढो पवेसे, संखा इमं केवलियं समाहिं ॥ १५ ॥

व्याख्या—गुरोरन्तिके वसन् विनय करोति, कथम् ? आचार्यस्य समीपे अवसर ज्ञात्वा प्रष्टव्यकाले सूत्रार्थं पृच्छेत् । कथम्भूतस्य गुरोः समीपे ? 'प्रजासु' सर्वजन्तुषु समितस्य, सदाचारानुष्ठायिन इत्यर्थः । स च गुरुस्तेन पृष्टः आचक्षाणः शुश्रूषयितव्यो भवति । ततश्च 'द्रविकस्य' मुक्तिगमनयोग्यस्य पुरुषस्य वृत्त-माचारं भाषते, भाषमाणश्च वन्दनीयः पूजनीयो भवति । तानि च गुरुवचांसि पृथक् पृथक्श्रोत्रकारी श्रोत्रे-कर्णौ धारयति, यथोपदेशकारी आज्ञाविधायी सन् पृथक् हृदये प्रवेशयति-चेतसि स्थापयति । किं कृत्वा ? 'संख्याय' सम्यग् ज्ञात्वा, किम् ? इमं 'केवलिकं' केवलिना कथितं 'समाधिं' सम्यङ्मार्गमाचार्यादिना कथितं स्वहृदये धारयेदिति गाथार्थः ॥ १५ ॥ किञ्च—

अस्सिं सुठिच्चा तिविहेण तायी, एएसु या संति निरोहमाहु ।
ते एवमक्खंति तिलोगदंसी, ण भुज्जमेयंति पमायसंगं ॥ १६ ॥

व्याख्या—अस्मिन् गुरुकुलवासे वसता यच्छ्रुतं, श्रुत्वा च हृदयेऽवधारितं, तस्मिन् समाधिमार्गे स्थित्वा 'त्रिविधेन'

मनोवाक्कायकर्मणा कृतकारितानुमतिभिश्च 'त्रायी' षट्कायपालकः 'एतेषु' समितिगुप्त्यादिषु समाधिमार्गे[षु] स्थितस्य तस्य साधोः शान्तिर्भवति–अशेषद्वन्द्वोपरमो भवति । तथाऽशेषकर्मक्षयरूपं निरोधमाहुः । क एवमाहुः ? त्रिलोकदर्शिनः–सर्वज्ञाः केवलालोकेन दृष्ट्वा प्रतिपादयन्ति । किम् ? एतदेव समितिगुप्त्यादिकं संसारोत्तारणसमर्थं मार्गं जानीहि, नान्यथेति । एतदेव कथितवन्तः, न पुनः प्रमादसङ्गं विधेयत्वेन प्रतिपादितवन्त इति गाथार्थः ॥ १६ ॥

निसम्म से भिक्खु समीहियट्ठं, पडिभाणवं होति विसारए य ।
आयाणअट्ठी वोदाणमोणं, उवेच्च सुद्धेण उवेति मोक्खं ॥ १७ ॥

व्याख्या—स गुरुकुलवासी भिक्षुः 'द्रव्यस्य' मुक्तिगमनयोग्यस्य 'वृत्तं' आचारं निशम्य स्वतः समीहितार्थं मोक्षाख्यं बुद्ध्वा–हेयोपादेयं सम्यक्परिज्ञाय 'प्रतिभा[न]वान्' उत्पन्नप्रतिभो भवति । ततश्च श्रोतॄणां यथास्थितार्थानां 'विशारदः' प्रतिपादको भवति । ईदृशः साधुरादानार्थी–मोक्षार्थी+ 'व्यवदानं' द्वादशप्रकारं तपस्तथा 'मौनं' संयमस्तदेवमेतौ तपस्संयमौ 'उपेत्य' प्राप्य 'शुद्धेन' द्विचत्वारिंशद्दोषरहितेन आहारेणात्मानं यापयन् मोक्षमुपैतीति गाथार्थः ॥१७॥

तदेवं गुरुकुलवासितया धर्मे सुस्थिताः बहुश्रुताः प्रतिभा[न]वन्तोऽर्थविशारदाश्च सन्तो यत्कुर्वन्ति तद्दर्शयितुमाह—

संखाए धम्मं च वियागरंति, बुद्धा हु ते अंतकरा भवंति ।

---

+ "आदीयते मोक्षार्थिभिरिति आदानं–ज्ञानादि, स एवार्थो विद्यते यस्य स आदानार्थी–ज्ञानादिप्रयोजनवान्" इति हर्ष० ।

ते पारगा दोण्ह वि मोयणाए, संसोधितं पण्हमुदाहरंति ॥ १८ ॥

व्याख्या—'संख्या' सद्बुद्धिस्तया स्वतो धर्मं परिज्ञाय परेषां यथावस्थितं धर्मं 'व्यागृणन्ति' प्रतिपादयन्ति, यदिवा स्वपरशक्तिं पर्षदं च 'परिज्ञाय' सम्यगवबुद्ध्य धर्मं प्रतिपादयन्ति। ते चैवंविधा 'बुद्धाः' कालत्रयवेदिनो जन्मान्तरसञ्चितानां कर्मणामन्तकरा भवन्ति, अन्येषां च कर्मापनयनसमर्था भवन्ति, तदेव दर्शयति–ते यथावस्थित-धर्मप्ररूपका 'द्वयोरपि' (स्व)परात्मनोः कर्मपाशविमोच[नया]काः (?) स्नेहादिनिगडविमोचनया वा करणभूतया संसारसमुद्रपारगा भवन्ति। ते चैवम्भूताः सम्यक् शोधितं 'प्रश्नं' शब्दमुदाहरन्ति। तदेवं [ते] गीतार्था यथावस्थितं धर्मं कथयन्तः स्वपरतारका भवन्तीति गाथार्थः ॥ १८ ॥

स च प्रश्नमुदाहरन् कदाचिदन्यथाऽपि ब्रूयात्, अतस्तत्प्रतिषेधार्थमाह—

णो छायए णो वि य लूसएज्जा, माणं ण सेवेज्ज पगासणं च।
ण या वि पन्ने परिहास कुज्जा, ण याऽऽसीआवाय वियागरेज्जा ॥ १९ ॥

व्याख्या—स प्रश्नस्योदाहर्ता रत्नकरण्डककल्पः कुत्रिकापणकल्पो वा चतुर्दशपूर्विणामन्यतरः कश्चिदाचार्यादिः कुतश्चिन्निमित्ताच्छ्रोतुः कुपितोऽपि सूत्रार्थं न 'छादयेत्' नान्यथा व्याख्यानयेत्, स्वगुरुं [वा] नापलपेत्, आत्मगुणोत्कर्षाभिप्रायेण परगुणान्नाच्छादयेत्। न परगुणान् लूषयेत्। तथा समस्तशास्त्रार्थवेत्ताऽहं, सर्वलोकविदितोऽहं, समस्तसंशयापनेता,

न मनुष्यो हेतुयुक्तिभिरर्थप्रतिपादयितेत्येवं मानं न सेवेत–न कुर्यात् । नाप्यात्मनो बहुश्रुतत्वेन [ तपस्वित्वेन वा ] प्रकाशनं कुर्यात् । तथा न चापि प्रज्ञावान् कस्यापि परिहासं कुर्यात् यदि वा अनाकुट्यमाने श्रोतरि न तदुपहासं कुर्यात् । न चापि नाशीर्वादं 'बहुपुत्रो बहुधनो दीर्घायुर्वा [त्व] भूया' इत्यादि व्यागृणीयादिति गाथार्थः ॥ १९ ॥

भूताभिसंकाइ दुगुंछमाणे, ण णिव्वहे मंतपदेण गोयं ।
ण किंचि मिच्छे मणुओ पयासुं, असाहुधम्माणि ण संवएज्जा ॥ २० ॥

व्याख्या—'भूताभिशङ्कया' जन्तूपमर्दशङ्कया आशीर्वादं सावद्यं जुगुप्सन्न ब्रूयात् । न 'मन्त्रपदेन' विद्याप्रयुञ्जनेन 'गोत्रं' [वाक्]संयमं निस्सारं कुर्यात्, न राजादिना सार्द्धं जन्तुजीवोपमर्दकं मन्त्रं कुर्यात् । तथा 'मनुष्यो' भिक्षुः प्रजासु व्याख्यानं कुर्वन् लाभपूजासत्कारादिकं नेच्छेत्–नाभिलषेत् । तथा असाधूनां धर्मान्–दानवधतर्पणादिकान् संवदेत्–न ब्रूयादिति गाथार्थः ॥ २० ॥ किञ्च—

हासं पि णो संधति पावधम्मे, ओए तहीयं फरुसं वियाणे ।
नो तुच्छए णो य विकंथएज्जा, अणाउ[अणाइ]ले वा अकसाइ भिक्खू ॥ २१ ॥

व्याख्या—यथा परात्मनोर्हास्यमुत्पद्यते तथा 'न सन्धयेत्' न कुर्यात् । तथा 'पापधर्मं' सावद्यं वचो न वदेत्, तथा कुप्रावचनिकाश्रोत्रामयेत् । तथा 'ओजो' रागद्वेषरहितः सन् तथ्यमपि 'परुषं' कठोरं वचः परिहरेत्, सावद्यं वचो

ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञयां परिहरेत्, पूजासत्कारादिना 'नो तुच्छए' नोन्मादं कुर्यात्। तथा 'णो य विकंथएज्जा' आत्मश्लाघां न कुर्यात्। तथा अनाकुलो× व्याख्यानावसरे, तथा 'अकषायी' कषायरहितो भवेद्भिक्षुः–साधुरिति गाथार्थः ॥ २१ ॥

संकेज्ज याऽसंकितभाव भिक्खू, विभज्जवायं च वियागरेज्जा।

भासादुगं धम्मसमुट्ठितेहिं, वियागरेज्जा समया सुपन्ने ॥ २२ ॥

व्याख्या—साधुः सूत्रार्थे निःशङ्कितोऽपि शङ्केत, नो गर्वं कुर्यात्, अहमेवार्थवेत्ता, न मत्तुल्यः कश्चिदपरोऽस्तीति न गर्वं कुर्वीत। तथा 'विभज्यवादं' पृथगर्थनिर्णयवादं व्यागृणीयाद्यदिवा 'विभज्यवादं 'स्याद्वादं वदेत्। विभज्य वादमपि भाषाद्वितयेनैव ब्रूयादित्याह–भाषयोराद्यचरमयोः सत्या–ऽसत्याऽमृषयोर्द्विकं भाषाद्विकं, तद्भाषाद्वयं कचित्पृष्टोऽपृष्टो वा धर्मकथावसरे व्यागृणीयात्। सम्यग् संयमानुष्ठानेन समुत्थितैः साधुभिः सह, न पुनः कुत्रिमैरुदायिनृपमारकवत्, एवंविधैः साधुभिः सह विहरन् चक्रवर्त्तिद्रमकयोः समतया रागद्वेषरहितो वा शोभनप्रज्ञो भाषाद्वयोपेतः सम्यग्धर्मं व्यागृणीयादिति गाथार्थः ॥ २२ ॥ किञ्च—

अणुगच्छमाणे वितहं वियाणे, तहातहा साहु अकक्कसेणं।

---

× "अणाइले" इति पाठान्तरे "अनाविलो–लोभादिनिरपेक्षः स्यात्" इति हर्ष०।

न कत्थई भास विहिंसइज्जा, निरुद्धगं वावि ण दीहइज्जा ॥ २३ ॥

व्याख्या—तस्यैवं भाषाद्वयेन धर्मं कथयतः साधोः—कश्चित्पण्डितस्तथैव तमर्थमनुगच्छन् सम्यगवबुध्यते, अपरस्तु मन्दमेधावितया 'वितथं' अन्यथैवाभिजानीयात्, तं च सम्यगनवबुध्यमानं 'तथातथा' तेन तेन हेतूदाहरणसद्युक्तिप्रकटनप्रकारेण साधुरकर्कशैर्वचोभिस्तमवबोधयेत्, न पुनस्त्वं मूर्खोऽसि ! एतदपि नावगच्छसि ! शठतरस्त्वं ! इत्यादि परुषवचनं न ब्रूयात्, मधुरभाषया भाषते, न पर तं अवगणयति । न तद्भाषां विहिंसते—न विध्वंसयति, न निन्दति । तथा 'निरुद्धं' अर्थस्तोकं दीर्घवाक्यैर्महता शब्ददर्दुरेण न कथयेत्, 'निरुद्धं' वा स्तोककालीनं व्याख्यानं न दीर्घये—न दीर्घकालिकं कुर्यात्, (अर्थात्) स्तोकमप्यर्थमालजालप्रकटनेन न विस्तारयति, यतः—"सो[1] अत्थो वत्तव्वो, जो भन्नइ अक्खरेहिं थोवेहिं। जो पुण थोवो बहुअक्खरेहिं सो होइ निस्सारो ॥ १ ॥" इति वचनात्, स्तोकाक्षरैर्बहुवक्तव्यमिति गाथार्थः ॥ २३ ॥

समालवेज्जा पडिपुण्णभासी, निसामिया समियाअट्ठदंसी ।

आणाइ सुद्धं वयणंऽभिउंजे, अभिसंधए पावविवेग भिक्खू ॥ २४ ॥

व्याख्या—यत् पुनरतिविषमत्वादल्पाक्षरैर्न सम्यगवबुध्यते, तच्छोभनेन प्रकारेण समन्तात्पर्यायशब्दोच्चारणतो

१ सोऽर्थो वक्तव्यो यो भण्यतेऽक्षरैः स्तोकैः । यः पुनः स्तोको बहुभिरक्षरैः स भवति निस्सारः ॥ १ ॥

भावार्थकथनतश्चालपे-द्भापेत, नाल्पाक्षरकथनतः कृतार्थो भवेत्, प्रतिपूर्णभाषी स्यात्, अस्खलितामिलिताहीनाक्षरैर्भाण्य-मिति। आचार्यादेः सकाशात् सम्यगवबुद्ध्य निशम्य सम्यग् यथावस्थितमर्थं यथा गुरुसकाशादवधारितमर्थं [ प्रतिपाद्यं द्रष्टुं शीलमस्य स भवति सम्यगर्थदर्शी, स एवम्भूतः सन् ] तीर्थंकराज्ञया शुद्ध-मवदातं निरवद्यं वचनमभियुञ्जीत। उत्सर्गे उत्सर्गं अपवादे चापवादं, न व्यत्ययं कुर्यात्। स्वपरसमययोर्यथास्वं वचनमभिवदेत्। एवमभियुञ्जन् भिक्षुः 'पापविवेकं' पापपरिहार कुर्यादिति गाथार्थः ॥ २४ ॥ किञ्च—

अहाबुइयाइं सुसिक्खएज्जा, जइज्ज या णातिवेलं वदेज्जा।
से दिट्ठिमं दिट्ठि ण लूसएज्जा, से जाणई भासिउं तं समाहिं ॥ २५ ॥

व्याख्या—तीर्थंकरगणधरादिभिर्यथोक्तानि तान्यहर्निशं सुष्ठु शिक्षेत-ग्रहणशिक्षया सर्वज्ञोक्तमागमं सम्यग्गृह्णीयात्, आसेवनाशिक्षया तु सेवेत, अन्येषां च तथैव प्ररूपयेत्। यो यस्य कर्त्तव्यस्य कालोऽध्ययनकालो वा, तां वेलामतिलङ्घ्य नातिवेलं वदेत्, अध्ययनकर्त्तव्यमर्य्यादां नातिलङ्घयेत्, यथावसरं परस्पराबाधया सर्वाः क्रियाः कुर्यादित्यर्थः। स एवंविधगुणजातीयो यथाकालवादी यथाकालचारी 'सम्यक्दृष्टिमान्' यथावस्थितान् पदार्थान् श्रद्दधानो देशनां च कुर्वन् 'दृष्टिं' सम्यग्दर्शनं न लूषयेत्-न दूषयेत्। एतदुक्तं भवति-पुरुषविशेषं ज्ञात्वा अपसिद्धान्तपरिहारेण तथा कथनीयं यथा श्रोतुः सम्यक्त्वं स्थिरी भवति। यश्चैवंविधः स भाषितुं जानाति समाधिं च ज्ञानदर्शनचारित्राख्यं सम्यग-

वगच्छतीति गाथार्थः ॥ २५ ॥ किञ्च—

अलूसए नो पच्छन्नभासी, नो सुत्तमत्थं च करेज्ज ताई।
सत्थारभत्ती य अणुवीइ वायं, सुयं च धम्मं पडिवाययंती ॥ २६ ॥

व्याख्या—सर्वज्ञोक्तमागमं न लूपये-न्न दूपयेत्तथा न प्रच्छन्नभापी भवेत्, सिद्धान्तार्थं-सार्वजनीनं, तत् प्रच्छन्नभापणेन न गोपयेत् अपशब्दभापणेनापि न सूत्रं दूपयेत्तथा अर्थं न गोपयेत्। तथा 'त्रायी' पट्कायपालकः। तथा प्रच्छन्नं चार्थं नापरिणताय भापेत, सिद्धान्तरहस्यमपरिणतस्याग्रे प्रकटनं दोपायैव संपद्यते। तथा 'शास्ता' परहितैकरतः, तथा शास्तरि या व्यवस्थिता भक्तिस्तया अनुविचिन्त्य-ममानेनोक्तेन न काचिदाबाधा स्यादित्येवं पर्यालोच्य यथा श्रुतं गुरोः सकाशे तथैव प्रतिपादयेत्, न सुखशीलतां मन्यमानो यथाकथंचित्तिष्ठेदिति गाथार्थः ॥ २६ ॥

से सुद्धसुत्ते उवहाणवं च, धम्मं च जे विंदाति तत्थ तत्थ।
आदेज्जवक्के कुसले वियत्ते, से अरिहइ भासिउं तं समाहि त्ति बेमि ॥ २७ ॥

व्याख्या—अनया रीत्या यः प्ररूपयति तस्य सूत्रं शुद्धं कथ्यते, स धर्मोपदेशकः शुद्धसूत्र इति। तथोपधानं-तपश्चरणं यद्यस्य सूत्रस्याभिहितमागमे तद्विद्यते यस्यासावुपधानवान्+। तथा 'धर्मं' श्रुतचारित्राख्यं, यः सम्यग्वेत्ति 'तत्र तत्रे'ति

+ स्फुटं ध्वन्यतेऽनेन, यदुत-सर्वेऽप्यागमग्रन्था: सति सामर्थ्ये सामग्रीसद्भावे च योगोद्वहनापरपर्यायोपधानपुरस्सरमेवाध्येतव्या इति।

[ य ] आज्ञाग्राह्योऽर्थः स आज्ञयैव प्रतिपत्तव्यो हेतुकश्च सम्यग् हेतुना, यदिवा स्वसमयसिद्धोऽर्थः स्वसमये व्यवस्थापनीयः परसमयसिद्धश्च परसमये । अथवोत्सर्गापवादयोर्व्यवस्थितोऽर्थस्ताभ्यामेव यथास्वं प्रतिपादयितव्यः । एतद्गुणसम्पन्नश्च ' आदेयवाक्यो ' ग्राह्यवचनो भवति । तथा ' कुशलो ' निपुणः आगमप्रतिपादनेन सदनुष्ठानेन च व्यक्तः, सोऽर्हति-योग्यो भवति ' तं ' सर्वज्ञोक्तं ज्ञानादिकं भावसमाधिं भाषितुं, नापरः कश्चिदिति गाथार्थः ॥ २७ ॥ इतिः परिसमाप्त्यर्थे, ब्रवीमीति पूर्ववत् ।

इति श्रीपरमसुविहितखरतरगच्छविभूषणश्रीमत्साधुरङ्गगणिवरविरचितायां श्रीसूत्रकृताभिधद्वितीयाङ्ग-दीपिकायां समाप्तं ग्रन्थाख्यं चतुर्दशमध्ययनमिति ।

# अथ आदानीयाभिधं पञ्चदशमध्ययनम् ।



अथ पञ्चदशमारभ्यते—

जमतीतं पडुप्पन्नं, आगमिस्सा य णायओ । सव्वं मन्नति तं ताई, दंसणावरणंऽतए ॥ १ ॥

व्याख्या—यत् किमपि द्रव्यजातमतीतं यच्च प्रत्युत्पन्नं यच्चानागतं, कालत्रयभावि, तस्य यथावस्थितस्वरूपं यो ['मन्यते'] जानाति, जानानश्च विशिष्टोपदेशदानेन [नायकः-प्रणेता] संसारोत्तारणतः सर्वप्राणिनां त्रायी स्यात्, स च दर्शनावरणीयस्य कर्मणोऽन्तकः । मध्यग्रहणेन घातिचतुष्टयस्यान्तकृद्द्रष्टव्य इति गाथार्थः ॥ १ ॥

अंतए वितिगिच्छाए, जे जाणति अणेलिसं । अणेलिसस्स अक्खाया, ण से होति तहिं तहिं ॥२॥

व्याख्या—यो घातिकर्मचतुष्टयक्षपकः स 'विचिकित्सा' चित्तविप्लुतिर्मिथ्याज्ञानं, तस्यान्तकृद्ज्ञेयः । घातिकर्मचतुष्टयक्षयकर्त्तुर्मिथ्याज्ञानं न स्यादिति भावः । यो घातिक्षयकृत् स 'अनीदृशं' निरुपमं जानाति, एतावता नापरः कश्चित्तत्सदृक् ज्ञानी जगत्यस्ति । यस्त्वनीदृशस्यानन्यसदृशस्यार्थस्य परिच्छेदआख्याता, स तेषु तेषु दर्शनेषु बौद्धादिषु न स्यात् । स एवं बौद्धादिदर्शनेषु न मुक्तिमिच्छति, अर्हद्दर्शनमन्तरेण न कर्मभ्यो मुक्तिं प्ररूपयतीति गाथार्थः ॥ २ ॥

तहिं तहिं सुअक्खायं, से य सच्चे सुआहिए । सदा सच्चेण संपन्ने, मित्तिं भूएसु कप्पए ॥ ३ ॥

व्याख्या—य[द्य]त्तेनार्हता जीवाजीवादिकं पदार्थजातं तथा मिथ्यात्वाविरतिप्रमादकषाययोगा बन्धहेतव इति कृत्वा संसारकारणत्वेन प्ररूपितास्तथा "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग्गः" [त० १-१] इत्येतत्सर्वं पूर्वोत्तराविरोधितया सुष्ठु आख्यातं-स्वाख्यातम् । ( स च वीतरागः सद्भ्यो हितत्वात्सत्यः स्वाख्यातः ), तीर्थिकानां तु वचनं पूर्वं "न हिंस्यात्सर्वभूतानि" इति भणित्वा पश्चात्तदुपमर्दकारम्भप्ररूपणात्पूर्वोत्तरविरोधितया तत्र तत्र चिन्त्यमानं निर्युक्तिकत्वान्न स्वाख्यातं भवति, सर्वज्ञोक्तं तु स्वाख्यातं ज्ञेयम् । एवंविधेन सत्यवचसा यः सम्पन्नः स किं करोतीत्याह—'मित्तिं भूएसु कप्पए' भूतेषु-प्राणिषु मैत्रीभावं कल्पयेत् "मित्ती मे सव्वभूएसु" इति वचनात्सर्वेऽपि प्राणिनः आत्मसमाना गणनीया इति गाथार्थः ॥ ३ ॥

भूएहिं न विरुज्झेज्जा, एस धम्मे वुसीमओ । वुसीमं जगं परिन्नाय, अस्सिं जीवितभावणा ॥ ४ ॥

व्याख्या—भूतैः स्थावरजङ्गमैः सह न विरोधं कुर्यात् । एष धर्मो भूताविरोधकारी, 'वुसीमओ'त्ति तीर्थकृतामयं धर्मः सत्संयमवतो वा ज्ञेयः । [ 'वुसीमं'ति ] स साधुस्तीर्थकृद्वा जगच्चराचरभूतग्रामाख्यं केवलालोकेन सर्वज्ञप्रणीतागमपरिज्ञानेन वा परिज्ञाय इह जगति भावनाः पञ्चविंशतिरूपा द्वादशप्रकारा वा सत्संयमाङ्गतया मोक्षकारिणीर्भावयेदिति गाथार्थः ॥ ४ ॥

भावणाजोगसुद्धप्पा, जले णावा व आहिया । नावा व तीरसंपन्ना, सव्वदुक्खा तिउट्टति ॥ ५ ॥

व्याख्या—भावनायोगेन यो विशुद्धात्मा परित्यक्तसंसारस्वभावः सन् ( जले ) नौरिव समाख्यातः, यथा नौः समुद्रं

तीर्त्वा पारगामिनी भवति, तथा जीवोऽपि भावनाविशुद्धात्मा संसारार्णवं तीर्त्वा पारगामी स्यात् । संसारदुःखेभ्यो मुच्यत इति गाथार्थः ॥ ५ ॥

**तिउट्टई उ मेहावी, जाणं लोगंसि पावगं । तुट्टंति पावकम्माणि, नवं कम्ममकुवओ ॥ ६ ॥**

व्याख्या—स भावनायोगशुद्धात्मा नौरिव जले संसारे परिवर्त्तमानः 'तिउट्टति' + त्रुट्यति सर्वबन्धनेभ्यो मुच्यते । 'मेधावी' पण्डितः पुनः अस्मिल्लोके यत् किमपि पापकर्म सावद्यानुष्ठानरूपं, तत् ज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया परिहरँस्त्रुट्यति मुच्यते कर्मभ्य इति । तस्यैवं कर्मस्वरूपं जानतो नवानि कर्माण्यकुर्वतः निरुद्धाश्रवद्वारस्य विकृष्टतपश्चरणवतः पूर्वसञ्चितानि कर्माणि त्रुट्यन्ति । नवं च कर्माकुर्वतोऽशेषकर्मक्षयो भवतीति गाथार्थः ॥ ६ ॥

केषाञ्चिन्मते कर्मक्षयानन्तरं मोक्षावाप्तौ स्वतीर्थनिकारदर्शनतः पुनः संसाराभिगमनं भवतीदमाशङ्कयाह—

**अकुवओ णवं नत्थि, कम्मं नाम विजाणई । विन्नाय से महावीरे, जेण जाई ण मिज्जइ ॥ ७ ॥**

व्याख्या—तस्य सर्वज्ञस्याशेषक्रियारहितस्य नवं ज्ञानावरणादिकं कर्म 'नास्ति' न भवति, कारणाभावात्तत्कार्याभावः, कर्माभावे च पुनः कुतः संसारेऽवतरणं ?, तस्य सर्वज्ञस्य रागद्वेषाभावात्तद्दर्शनतिरस्काराभिनिवेशोऽपि न भवत्येव, एतद्गुणोपेतः कर्मस्वरूपं जानाति । नमनं नाम-कर्मनिर्जरणं, तच्च सम्यग् जानाति, विज्ञाय च कर्मबन्धं तत्संवरनिर्जरणो-

+ "त्रिभ्यो मनोवाक्कायेभ्योऽशुभेभ्यः" इति बृहद्वृत्तिः ।

पायं चासौ महावीरस्तत्करोति, येन कृतेनास्मिन् संसारोदरे न पुनर्जायते, जन्माभावाच्च नापि म्रियत इति गाथार्थः ॥७॥

केन कारणेन संसारे न जायते न म्रियते ? इत्याशङ्क्याह—

**ण मिज्जई महावीरे, जस्स नत्थि पुरेकडं। वाउव जालमच्चेति, पिया लोगंसि इत्थिओ ॥ ८ ॥**

व्याख्या—स महावीरः परित्यक्ताशेषकर्मा न जात्यादिना मीयते, न म्रियते वा, जातिजरामरणरोगशोकैर्वा संसारे पर्यटन्न भ्रियते–न पूर्यते। किमिति ? यतस्तस्यैव जात्यादिकं भवति यस्य पुराकृतं कर्म विद्यते, यस्य भगवतो महावीरस्य पुराकृतं कर्म न विद्यते, न तस्य मरणं [ जातिजरामरणैर्भरणं वा ] सम्भाव्यते, जन्मनोऽभावात्। तस्य कथं पुराकृतकर्म्माभावः ? यतस्तस्य स्त्रीः पराभवं कर्त्तुं न शक्नोति, यथा वायुरग्निज्वालामतिक्रामति–अग्निमध्ये भूत्वा व्रजति, परं वायुर्न दह्यते, एवं लोके स्त्रीरपि प्रिया अग्निज्वालासमाना, साधुर्वायुसमानः, यथा वायुरग्नेर्मध्ये भूत्वा व्रजति परं न दह्यते तथा साधुरपि न स्त्रीभिर्जीयते, न स्त्रियः पराभवितुं शक्नुवन्ति, स्त्रीसंसर्गात्कर्मबन्धस्तदभावात्कर्मबन्धाभाव इति गाथार्थः ॥ ८ ॥

**इत्थीओ जे ण सेवंति, आइमोक्खा हु ते जणा। ते जणा बंधणुम्मुक्का, णावकंखंति जीवितं ॥ ९ ॥**

व्याख्या—ये महासत्त्वाः स्त्रियो न सेवन्ते, स्त्रीप्रसङ्गं नाभिलषन्ति, ते साधवः आदिमोक्षा अवगन्तव्याः। आदौ मोक्षस्तेषामेव यैः स्त्रीप्रसङ्गो निवारितः, नान्ये आदिमोक्षाः, ते तु स्त्रीपाशबन्धनोन्मुक्ततयाऽशेषकर्मबन्धनोन्मुक्ताः सन्तो

'नावकांक्षन्ति' नाभिलषन्ति असंयमजीवितं, अथवा परित्यक्तविषयेच्छाः सदनुष्ठानपरायणाः मोक्षैकताना 'जीवितं' दीर्घकालजीवितं नाभिकांक्षन्तीति गाथार्थः ॥ ९ ॥

**जीवितं पिट्ठओ किच्चा, अंतं पावंति कम्मुणो । कम्मुणा संमुहीभूता, जे मग्गमणुसासई ॥ १० ॥**

व्याख्या—'जीवितं' असंयमजीवितं पृष्ठतः कृत्वा सदनुष्ठानपरायणाः कर्मणामन्तं–पर्यवसानं प्राप्नुवन्ति । तथा 'कर्मणा' विशिष्टानुष्ठानेन मोक्षस्य सम्मुखीभूता उत्पन्नदिव्यज्ञानाः शाश्वतपदस्याभिमुखीभूताः, क एवम्भूताः ? इत्याह–ये समासादितदिव्यज्ञाना मोक्षमार्गं ज्ञानदर्शनचारित्ररूपमनुशासन्ति–सत्त्वहिताय प्राणिनां प्रतिपादयन्ति स्वतश्चानुतिष्ठन्तीति गाथार्थः ॥ १० ॥

**अणुसासणं पुढो पाणी, वसुमं पूयणा[सते]सुते । अणासए जते दंते, दढे आरयमेहुणे ॥ ११ ॥**

व्याख्या—'अनुशासनं' धर्मदेशनया सन्मार्गावतारणं, तद्भव्याभव्यादिषु प्राणिषु पृथक् पृथक् परिणमति, क्षित्युदकवत्स्वाशयवशादनेकधा भवति । यद्यप्यभव्येषु तदनुशासनं न सम्यक्परिणमति तथापि सर्वोपायज्ञस्यापि न सर्वज्ञस्य दोषः, तेषामेव स्वभावपरिणतिरियं, यदुलूको दिवा न पश्यति स दोषः किं सूर्यस्य ? न, तस्यैव स्वभावोऽयं, यत्सर्वज्ञवचोऽमृततुल्यमेकान्तपथ्यं न यथावत्परिणमति । (इयं) अभव्यानामेव स्वभावपरिणतिः । किम्भूतोऽसावनुशासकः ? 'वसुमं' संयम(द्रव्य)वान् 'पूजनं' देवादिकृतमास्वादय–त्युपभुङ्क्ते इति पूजनास्वादकः, ननु चाधाकर्मणो देवादि-

कृतस्य समवसरणादेरुपभोगात्कथमसौ सत्संयमवान् ? उच्यते ' अणासए ' न विद्यते ' आशा ' अभिप्रायो यस्यासावनाशयः, यदिवा द्रव्यतो विद्यमानेऽपि समवसरणादिके भावतोऽनास्वादको, गार्द्ध्याभावात् । सत्यप्युपभोगे ' यतः ' प्रयतः संयमवानेव । तथा ' दान्त ' इन्द्रिय-नोइन्द्रियाभ्यां दान्तः, तथा ' दढे ' दृढः परीषहोपसर्गैरप्यक्षोभ्यस्तथा ' आरतमैथुनो ' निवृत्तमैथुनाभिप्राय इति गाथार्थः ॥ ११ ॥

**नीवारे व ण लीएज्जा, छिन्नसोए अणाविले । अणाविले सया दंते, संधिं पत्ते अणेलिसं ॥ १२ ॥**

व्याख्या—' नीवारः ' शूकरादीनां वध्यस्थानप्रवेशनोपायभूतो भक्ष्यविशेषस्तत्सदृशमेतन्मैथुनं, यथाऽसौ शूकरो नीवारादिना प्रलोभ्य वध्यस्थानमानीय बहुविधा वेदनाः प्राप्यते, एवममावप्यसुमान्नीवारकल्पेन स्त्रीप्रसङ्गेन वशीकृतो बहुप्रकारा यातनाः प्राप्नोति, अतो नीवारप्राये मैथुने न ज्ञाततत्त्वो लीयेत । कथम्भूतः साधुः ? ' छिन्नश्रोताः ' छिन्नाश्रवद्वारस्तथा ' अनाविलो ' मलरहितो, रागद्वेषाभावात् । तथा अना(विलः)कुलः, विषयनिवृत्तत्वात् स्वस्थचेताः । तथा [सदा] दान्त—इन्द्रिय-नोइन्द्रियदमनात् । ईदृशस्तु भावसन्धिं कर्मविवरलक्षणमनीदृश—मनन्यतुल्यं प्राप्तो भवतीति गाथार्थः ॥ १२ ॥

**अणेलिसस्स खेयन्ने, न विरुज्झेज्ज केणई । मणसा वयसा चेव, कायसा चेव चक्खुमं ॥ १३ ॥**

व्याख्या—' अनीदृशः ' अनन्यसदृशः संयमस्तस्मिन् ' खेदज्ञो ' निपुणः साधुः केनचित्सार्द्धं न विरोधं कुर्वीत, सर्वेषु प्राणिषु मैत्रीं भावयेत्, कथं ? मनसा वाचा कायेन, दृष्टिपूतपादचारी सन् परमार्थतश्चक्षुष्मान् भवतीति गाथार्थः ॥ १३ ॥

से हु चक्खू मणुस्साणं, जे कंखाए य अंतए । अंतेण खुरो वहती, चक्कं अंतेण लुट्टति ॥ १४ ॥

व्याख्या—हुरवधारणे, स एव प्राप्तकर्मविवरोऽनीदृशस्य सेदृशो मध्यमनुष्याणां 'चक्षुः' सदसत्पदार्थविभावनान्नेत्रभूतो वर्त्तते । किम्भूतोऽसौ ? 'काङ्क्षाया' भोगेच्छाया 'अन्तको' विषयतृष्णायाः पर्यन्तवर्त्ती । आह परः-किमन्तवर्ती विवक्षितमर्थं साधयति ? साधयत्येव, अमुमेवार्थं दृष्टान्तेन साधयन्नाह 'अंतेन' पर्यन्तेन क्षुरो [नापितोपकरणं,] वहति, तथा चक्रमपि-रथाङ्गं अन्तेनैव मार्गे प्रवर्त्तते, इदमुक्तं भवति-यथा क्षुरादीनां पर्यन्त एवार्थक्रियाकारी, एवं विषयकषायात्मकमोहनीयान्त एव संसारक्षयकारीति गाथार्थः ॥ १४ ॥

अंताणि धीरा सेवंति, तेण अंतकरा इहं । इह माणुस्सए ठाणे, धम्ममाराहिउं नरा ॥ १५ ॥

व्याख्या—अन्तप्रान्तानि धीराः सेवन्ते, तेन चान्तप्रान्ताभ्यसनेनान्तकराः-संसारस्य तत्कारणस्य कर्मणो वा क्षयकारिणो भवन्ति । 'इहे'ति मनुष्यलोके आर्यक्षेत्रे वा, न केवलं त एव तीर्थङ्करादयोऽन्येऽपीह मनुष्यलोके स्थाने प्राप्ताः सम्यग्ज्ञानदर्शनचारित्रात्मकं धर्ममाराधयित्वा 'नराः' मनुष्याः सदनुष्ठानसामग्रीमवाप्य निष्ठितार्था-उपरतसर्वद्वन्द्वा भवन्तीति गाथार्थः ॥ १५ ॥

निट्ठियट्ठा व देवा वा, उत्तरीइ इमं सुयं । सुतं च मेयमेगेर्सि, अमणुस्सेसु णो तहा ॥ १६ ॥

व्याख्या—एवंविधपूर्वोक्तसंयमक्रियाधारिणः 'निष्ठितार्थाः' कृतकृत्या भवन्ति, केचन प्रचुरकर्मतया सत्यामपि

सम्यक्त्वादिकायां सामग्र्यां न तद्भव एव मोक्षमास्कन्दन्ति, अपितु सौधर्माद्याः पञ्चो[पञ्चानु]त्तरविमानावसाना देवा भवन्त्येतल्लोकोत्तरीये प्रवचने श्रुतं-आगम एवम्भूतः सुधर्मस्वामी वा जम्बूस्वामिनमुद्दिश्यैवमाह-यथा मयैतल्लोकोत्तरीये भगवत्य-र्हत्युपलब्धं । तद्यथा-अवाप्तसम्यग्दर्शनः सिद्ध्यति वैमानिको वा भवतीति, परमेतन्मनुष्यगतावेव मोक्षगमनं पञ्चो[ पञ्चानु]त्तरविमानगमनं चेतीति गाथार्थः ॥ १६ ॥

मनुष्यगतावेवैतन्नान्यत्रेति दर्शयितुमाह—

**अंतं करिंति दुक्खाणं, इहमेगेसि आहियं । आघायं पुण एगेसिं, दुल्लभेऽयं समुस्सए ॥ १७ ॥**

व्याख्या—न ह्यमनुष्या अशेषदुःखानामन्तं कुर्वन्ति, तथाविधसामग्र्यभावात् । यथा एकेषां वादिनामाख्यातमेतत् , एके वादिन एवमाख्यान्ति-देवा एवोत्तरोत्तरं स्थानमास्कन्दन्तोऽशेषक्लेशप्रहाणं कुर्वन्ति, एतावता देवा अपि मोक्षगतयो भवन्ति( इति )एके वादिनः-शाक्यादयः प्रतिपादयन्ति, तदपास्तं, मनुष्या एव सिद्धिगमनार्हा, नापरे । परमेकेषां गणधरादीनामेतदाख्यातं, तद्यथा-युगसमिलादिन्यायावाप्तकर्मविवरात् योऽयं शरीरसमुच्छ्रयः सोऽकृतधर्मोपायैरसुमद्भि-र्महासमुद्रभ्रष्टरत्नवद्दुर्लभो भवतीति गाथार्थः ॥ १७ ॥ अपि च—

**इओ विद्धंसमाणस्स, पुणो संबोहि दुल्लहा । दुल्लहाओ तहऽच्चाओ, जे धम्मट्ठं वियागरे ॥ १८ ॥**

व्याख्या—'इतो' मनुष्यभवाद्विध्वंसमानस्याकृतपुण्यस्य पुनरस्मिन् संसारे परिभ्रमतो जीवस्य बोधिः सुदुर्लभा-

सम्यग्दर्शनप्राप्तिर्दुर्लभा । तथा 'दुर्लभा' दुरापा तथाभूता–सम्यग्दर्शनप्राप्तियोग्या 'अर्चा' लेश्या–ऽन्तःकरणपरिणतिरकृतधर्माणामिति, तत्रापि ये शुद्धं धर्मं प्ररूपयन्ति तेषामर्चा दुर्लभा । एतावता शुद्धधर्मप्ररूपिणो दुर्लभास्तथा धर्मप्रतिपत्तियोग्यास्तेऽपि सुदुर्लभा इति गाथार्थः ॥ १८ ॥ किञ्च—

**जे धम्मं सुद्धमक्खंति, पडिपुन्नमणेलिसं । अणेलिसस्स जं ठाणं, तस्स जम्मकहा कुओ ? ॥ १९ ॥**

व्याख्या—ये महापुरुषा वीतरागाः परिहितकरताः 'शुद्धं' अवदातं विशुद्धं धर्मं प्ररूपयन्ति–आख्यान्ति, स्वतः समाचरन्ति[ च ] । 'प्रतिपूर्णं' सम्पूर्णं यथाख्यातचारित्ररूपं वा 'अनीदृशं' अनन्यसदृशं धर्ममाख्यान्त्यनुतिष्ठन्ति च । तदेवमनीदृशस्या–नन्यसदृशस्य ज्ञानचारित्रोपेतस्य यत्स्थानं मोक्षाख्यं, तत्प्राप्तस्य तस्य प्राणिनः कुतो जन्मकथा ? जातो मृतो वेत्येवंरूपा कथा स्वमान्तरेऽपि न, तस्य कर्मबीजाभावाज्जन्ममृत्युकथा न विद्यते । "दग्धे बीजे यथाऽत्यन्तं, [ प्रादुर्भवति नाङ्कुरः । कर्मबीजे तथा दग्धे, न रोहति भवाङ्कुरः ॥ १ ॥ ]" इति वचनादिति गाथार्थः ॥ १९ ॥

**कुतो कयाइ मेधावी, उप्पज्जंति तथा गया । तहागया अपडिन्ना, चक्खू लोगस्सऽणुत्तरा ॥ २० ॥**

व्याख्या—कर्मबीजाभावात् 'कुतः' कस्मात्कदाचिदपि 'मेधाविनो' ज्ञानात्मकास्तथा–पुनरनावृत्त्या गताः, यथा पुनरस्मिन् संसारे अशुचिगर्भाधानं न समुत्पद्यन्ते, न कथञ्चित्कर्मोपादानाभावादुत्पद्यन्ते । एतावता सिद्धिगतानां पुनरागमनं नास्तीति भावः । यतस्ते तीर्थकराः 'तथागताः' अप्रतिज्ञा–निदानरहिताः निराशंसास्तथा लोके 'अनुत्तराः' सर्वोत्तमाः सर्वलोकस्य चक्षुर्भूताः सर्वज्ञा भवन्तीति गाथार्थः ॥ २० ॥

**अणुत्तरे य से ठाणे, कासवेणं पवेइए। जं किच्चा निव्वुडा एगे, निट्ठं पावंति पंडिया ॥ २१ ॥**

व्याख्या—'अनुत्तरं' प्रधानं [ तत् ] स्थानं संयमाख्यं 'काश्यपेन' श्रीवर्द्धमानस्वामिना 'प्रवेदितं' कथितम्। कथम्भूतम्? यदनुत्तरं संयमाख्यं स्थानं 'कृत्वा' अनुपाल्य 'निर्वृताः' निर्वाणमनुप्राप्ताः, निर्वृताश्च सन्तः संसारचक्रवालस्य 'निष्ठां' पर्यवसानं पण्डिताः प्राप्नुवन्ति। तदेवम्भूतं संयमस्थानं काश्यपेन प्रवेदितं यदनुपाल्य सिद्धिमवाप्नुवन्तीति गाथार्थः ॥ २१ ॥ अपि च—

**पंडिए वीरियं लद्धुं, निग्घायाय पवत्तगं। धुणे पुव्वकडं कम्मं, णवं चावि ण कुव्वती ॥ २२ ॥**

व्याख्या—'पण्डितो' विवेकी 'वीर्यं' कर्मोद्दलनसमर्थं सत्संयम[वीर्यं] तपोवीर्यं वा 'लब्ध्वा' प्राप्य निःशेषकर्मणो निर्घाताय प्रवर्त्तकं पण्डितवीर्यं बहुभवशतदुर्लभं कथञ्चित्कर्मविवरादवाप्य 'धुनीयात्' अपनयेत्। पूर्वभवेष्वनेकेषु यत्कृतं कर्म अष्टप्रकारं तत् पण्डितवीर्येण धुनीयात्, नवं चाश्रवनिरोधान्न करोत्यसाविति गाथार्थः ॥२२॥ किञ्च—

**न कुव्वती महावीरे, अणुपुव्वकडं रयं। रयसा संमुहीभूतो, कम्मं हिच्चा ण जं मयं ॥ २३ ॥**

व्याख्या—'महावीरः' कर्मविदारणसहिष्णुः सन् आनुपूर्व्येण—मिथ्यात्वाविरतिप्रमादकषाययोगैर्यत्कृतं रजोऽपरजन्तुभिस्तदसौ न करोति। स च तत्प्राक्तनं कर्म अवष्टभ्य [ सत्संयमात्संमुखीभूतः, ] तदभिमुखी भूतश्च यदष्टप्रकारं कर्म्म, तत्सर्वं 'हित्वा' त्यक्त्वा मोक्षस्य सत्संयमस्य वा सम्मुखीभवतीति गाथार्थः ॥ २३ ॥ अन्यच्च—

जं मयं सवसाहूणं, तं सच्चं सल्लगत्तणं । साहइत्ताण तं तिन्ना, देवा वा अभविंसु ते ॥ २४ ॥

व्याख्या—सर्वसाधूनां यन्मत-मभिप्रेतं, तदेतत् सत्संयमस्थानं । तत् कीदृशं संयमस्थानं ? शल्यकर्त्तनं, शल्यं-पापानुष्ठानं 'कर्त्तयति' छिनत्ति तच्छल्यकर्त्तनं, तच्च संयममुद्युक्तविहारिणः 'साधयित्वा' सम्यगाराध्य बहवः संसारकान्तारं तीर्णाः । अपरे तु सर्वकर्मक्षयाभावाद्देवा अभूवन् । ते चावाप्तसम्यक्त्वाः सचारित्रिणो वैमानिकत्वमवा[पुः प्रा]प्नुवन्ति प्राप्स्यन्ति चेति गाथार्थः ॥ २४ ॥ सर्वोपसंहारार्थमाह—

अभविंसु पुरा धीरा, आगमिस्सा वि सुवता । दुन्निबोहस्स मग्गस्स, अंतं पाउकरा तिन्ने त्ति बेमि ॥२५॥

व्याख्या—'पूर्व'मतीते काले बहवो 'धीरा'श्चारित्रिणोऽभूवन्, वर्त्तमानकाले च सन्ति, आगामिनि च काले 'सुव्रताः' संयमानुष्ठायिनो भविष्यन्ति । ये किं कृतवन्तः कुर्वन्ति करिष्यन्ति ? चेत्याह—यस्य 'निर्बो[ दुर्निबो ]धस्य' अतीव दुष्प्रापस्य [ 'मार्गस्य' ] ज्ञानदर्शनचारित्राख्यस्य अन्तं परमकाष्ठामवाप्य तस्यैव मार्गस्य 'प्रादुष्कराः' स्वतः सन्मार्गानुष्ठायिनोऽन्येषां च 'प्रादुर्भावकाः' प्रकाशकाः सन्तः संसारार्णवं तीर्णास्तरन्ति तरिष्यन्ति चेति गाथार्थः ॥ २५ ॥ इतिः परिसमाप्तौ, ब्रवीमीति पूर्ववत् ।

इति श्रीपरमसुविहितखरतरगच्छविभूषणश्रीमत्साधुरङ्गगणिसङ्कलितायां श्रीसूत्रकृताभिधद्वितीयाङ्गदीपिकायां समाप्तमादानीयाख्यं पञ्चदशमध्ययनमिति ॥

## अथ षोडशं+गाथाध्ययनम् ।



उक्तं पञ्चदशमध्ययनं, साम्प्रतं षोडशमारभ्यते—

पूर्वोक्तेषु पञ्चदशस्वप्यध्ययनेषु येऽर्थाः प्रतिपादितास्तेऽत्र संक्षेपतः प्रतिपाद्यन्ते तत्रेयमादि( सूत्रं- )गाथा—

**अहाह भगवं—एवं से दंते दविए वोसट्ठकाए त्ति वच्चे ।**

व्याख्या—'भगवान्' उत्पन्नदिव्यज्ञानः सदेवमनुजायां पर्षदीदं वक्ष्यमाणमाह, तद्यथा-'एवमसौ' पञ्चदशाध्ययनोक्तार्थयुक्तः सुसाधुर्दान्तः-इन्द्रियनोइन्द्रियदमनात्, द्रव्यभूतो-मुक्तिगमनयोग्यस्तथा 'व्युत्सृष्टकायः' निष्प्रतिकर्मशरीरतया देहेऽपि प्रतिबन्धरहितः । एवंविधः साधुः पूर्वोक्तपञ्चदशाध्ययनार्थोपयुक्तः कीदृ[ग्वाच्यः]गुच्यते ? इत्याह ।

**माहणे त्ति वा समणे त्ति वा भिक्खू त्ति वा निग्गंथे त्ति वा । पडिआह—भंते ! कहं[नु] दंते दवीए वोसट्ठकाए त्ति वच्चे [ माहणे त्ति वा समणे त्ति वा भिक्खू त्ति वा णिग्गंथे त्ति वा ] ? तन्नो बूहि**

---

+ "गाथाछन्दसोपनिबद्धस्य प्राकृतस्य मधुरत्वादित्यभिप्रायो 'गीयते' पठ्यते मधुराक्षरप्रवृत्त्या गायन्ति वा तामिति । यत एवमतस्तेन कारणेन गाथामिति ता ब्रुवते" यद्वा "गाथीकृताः-पिण्डीकृता विक्षिप्ता सन्त एकत्र मीलिता अर्था यस्याः सा गाथेति, अथवा सामुद्रेण छंदसा या निबद्धा सा गाथेत्युच्यते" इति बृहद्वृत्तौ ।

महामुणी ! ॥ १ ॥

व्याख्या—'माहण'त्ति प्रवृत्तिर्यस्यासौ स्थावरजङ्गमान् जीवान्-मा हन्यात्ततो 'माहनः' इत्युच्यते, नवब्रह्मचर्यगुप्तिधारणाद्वा ब्राह्मणः इत्यनन्तरोक्तगुणकदम्बकयुक्तः साधुर्माहनो ब्राह्मण इति वा वाच्यः। तथा तपसा श्राम्यतीति श्रमणः। 'भिक्खू त्ति वा' भिक्षणशीलो भिक्षुर्भिनत्ति वाऽष्टप्रकारं कर्मेति भिक्षुः। सबाह्याभ्यन्तरग्रन्थाभावान्निर्ग्रन्थः। एवं पञ्चदशाध्ययनोक्तार्थानुष्ठायी दान्तो द्रव्यभूतो व्युत्सृष्टकायश्च, स निर्ग्रन्थ इ[ति वाच्यः]त्युच्यते। इत्येवं भगवतोक्ते सति तच्छिष्यः प्रत्याह—एतेषां चतुर्णामपि शब्दानां पृथगर्थं निवेदय महामुने ! ॥ १ ॥ इत्येवं पृष्टो भगवान् ब्राह्मणादीनां चतुर्णामप्यभिधानानां कथञ्चिद्भेदभिन्नानां यथाक्रमं प्रवृत्तिनिमित्तमाह—

इति विरए सव्वपावकम्मेहिं पेज्ज-दोस-कलह-अब्भक्खाण-पेसुन्न-परपरिवाय-अरतिरति-माया-मोस-मिच्छादंसणसल्लविरए, समिते, सहिए जं सदा जते णो कुज्झे णो माणी माहणे त्ति वच्चे ॥ २ ॥

व्याख्या—'इति' पूर्वोक्ताध्ययनार्थवृत्तिः सन् 'विरतो' निवृत्तः सर्वपापेभ्यस्तथा 'प्रेम' रागोऽभिष्वङ्गलक्षणं द्वेषोऽप्रीतिलक्षणः। कलहः—प्रसिद्धः। 'अभ्याख्यानं' कलङ्कारोपणं 'पैशुन्यं' परगुणासहिष्णुत्वं तद्दोषाविष्करणं 'परपरिवादः' परतप्तिकरणं, अरतिः संयमे, रतिर्विषयेषु 'माया' परवञ्चनाय कुटिलता, [तथा] मृषावादो—ऽसत्यभाषणं, मिथ्यादर्शन—मतत्त्वे तत्त्वमतिस्तत्त्वे चातत्त्वमतिः, एतदेव शल्यं, ततो वा विरतः, तथा समितः पञ्चसमितिभिः, तथा

सहितो-युक्तो ज्ञानादिभिः, तथा [सदा] 'यतः' प्रयतः संयमानुष्ठाने, तथा 'णो कुज्झे' कस्यचिदप्यपकारिणोऽपि न क्रुध्येत, न क्रोधवशगो भूयान्नापि मानी भवेत्, उत्कृष्टतपोयुक्तोऽपि न गर्वं विदध्यात्, इत्यादिगुणकलितः साधु-र्माहन इति निःशङ्कं वाच्य इति ॥ २ ॥ साम्प्रतं श्रमणशब्दार्थं विवृणोति—

एत्थ वि समणे अणिस्सिते अनियाणे आदाणं च, अतिवायं च, मुसावायं च, बहिद्धं च, कोहं च, माणं च, मायं च, लोहं च, पिज्जं च, दोसं च, इच्चेवं जओ जओ आदाणं अप्पणो पदोसहेऊ ततो ततो आदाणातो पुव्विं पडिविरते पाणाइवायाओ[सिआ] दंते दविए वोसट्ठकाए समणो त्ति वच्चे ॥ ३ ॥

व्याख्या—'अत्रापि' पूर्वोक्तविरत्यादिके गुणसमूहे वर्त्तमानः श्रमणोऽपि वाच्यः। पुनरेतद्गुणयुक्तेनापि भाव्यमित्याह—अनिश्रितोऽप्रतिबद्धविहारित्वात्तथा 'अनिदानो' निदानरहितः, तथा 'आदानं' कषायः परिग्रहः सावद्यानुष्ठानं वा 'अतिपातः' प्राणातिपातः, तथा 'मृषावादो'ऽसत्यं, तथा 'बहिद्धं' मैथुनपरिग्रहौ, इत्यादिज्ञपरिज्ञया ज्ञात्वा प्रत्याख्यानपरिज्ञया परिहरेत्। तथा 'क्रोधं' अप्रीतिलक्षणम् 'मानो' गर्वः माया लोभः 'प्रेम' रागो द्वेषश्च इत्या[दिकं] संसारावतरणमार्गं मोक्षमार्गविध्वंसकं सम्यक् परिज्ञाय परिहरेदिति, एवमन्यस्मादपि [ यतोयतः ] कर्मोपादानादिहामुत्र चानर्थहेतोरात्मनोऽपायं पश्यति प्रद्वेषहेतूंश्च, ततस्ततः प्राणातिपातादिकादनर्थदण्डादानात् 'पूर्वमेव' अना-

गतमेवात्महितमिच्छन् प्रतिविरतो भवेत्। एतावता सर्वस्मादपि सावद्यानुष्ठानाद्विरतिं कुर्यादिति भावः। एवम्भूतो दान्तः शुद्धो द्रव्यभूतो निष्प्रतिकर्मतया व्युत्सृष्टकायः श्रमणो वाच्यः ॥ ३ ॥ साम्प्रतं भिक्षुशब्दार्थं विवृणोति—

**एत्थ वि भिक्खू अणुन्नए विणीए नामए दंते दविए वोसट्ठकाए संविधूणीय विरूवरूवे परीसहोवसग्गे अज्झप्पजोगसुद्धादाणे, उवट्ठिए ठिअप्पा संखाए परदत्तभोई भिक्खू त्ति वच्चे ॥ ४ ॥**

व्याख्या—अत्रापि य एते पूर्वमुक्ता गुणाः-ब्राह्मणश्रमणशब्दार्थास्त एव भिक्षुशब्दविषये अवगन्तव्याः, अमी चान्ये-'अणुन्नए' अभिमानरहितः, तथा 'विणीए' विनीतः, तथा 'नामए' सदा गुर्वादौ प्रह्वो भवति 'दंते दविए वोसट्ठकाए' इत्यादि पूर्ववत्। एवंविधो भिक्षुर्यत्करोति तद्दर्शयति-'संविधूणीय' सम्यग्विधूय-अपनीय 'विरूपरूपान्' नानाप्रकारान् परीषहोपसर्गान् अधिसह्य-विधूय 'अध्यात्मयोगेन' निर्मलचित्तपरिणामेन 'शुद्धादानेन' निस्तुषचारित्रेण सम्यगुत्थानेन-सचारित्रोद्यमेनोत्थितस्तथा 'स्थितो' मोक्षाध्वनि व्यवस्थितः, परीषहोपसर्गैरगञ्जितः, संसारासारतां 'संख्याय' सम्यक्परिज्ञाय दुष्प्राप्यतां कर्मभूमेर्बोधेः सुदुर्लभत्वं च ज्ञात्वा संसारोत्तरणसामग्रीं चावाप्य 'परदत्तभोजी' विशुद्धाहारग्रहणशीलः, एवंविधगुणकलितो भिक्षुरिति वाच्यः ॥ ४ ॥

अथ निर्ग्रन्थशब्दार्थं विवृणोति—

**एत्थ वि निग्गंथे एगे एगविऊ बुद्धे संछिन्नसोए सुसंजते सुसमिते सुसामाइए आयवायपत्ते**